# श्रीमद्भगवद्गीता

( श्रीबालबोधिन्याख्यटीकया समेता । )

इयं

शालिवाहनाख्यशकस्य सप्तदशशताधिकषट्सप्ततित-
मे( १७७६ ) वर्षे पाठकोपाभिधगणेशशर्मणा
विरचय्य लिखिता ।

सा च

मुम्बय्याम्

पाठकोपाभिधेन का० मै० शर्मणा

एज्जुकेशनसोसायटयाख्यमुद्रायंत्रालये मुद्रयित्वा प्रकाशिता ।




प्रति ५,०००.

शके १८१५.

सन १८९३.

---

मौल्यम्-एको रूप्यकः ।

# PREFACE.

I hold in my household library a large collection of Sanskrit works, inclusive of Vedant philosophy, written by my grandfather Ganesh Shastri in his own handwriting, with commentaries or explanations thereon according to the old system, also composed by him. These manuscripts in memory of my grandfather's untiring zeal and industry were faithfully preserved by my father Myral Shastri, a few copies of which were taken by my grandfather's pupils, who attended on him for receiving Sanskrit education some forty years ago in Ahmednagar. I have long been desirous of getting these works printed and published, but could not afford time and leisure in consequence of my connection with Native Princes and the management of their affairs. On coming to Bombay and consulting with my father's friend, the late Wasudeo Jugonath, Shastri of the Education Society's Press, I received encouragement and an assurance of assistance from him. He introduced me to Mr. F. S. Fairfield, Superintendent of the Education Society's Press. This gentleman, in his naturally candid and straightforward manner, settled the affair and issued the necessary orders. I entrusted to him the publication, supervision and the entire arrangement of the work, being too deeply engaged in the political career to attend to the minute and tedious task of revising the forms printed. I offer my thanks to Mr. Fairfield for his good nature and kind assistance.

The Sanskrit language of the commentaries is very simple and useful to Sanskrit students. My object in publishing these is not to make money, but to do justice to the hard work of the commentator and give encouragement to Sanskrit learning. With all my faults, the lovers of learning will accept my motive.

My first publication out of this stock was *Anund Lahari*,

by Shankaracharya, with a commentary in Sanskrit by Ganesh Shastri. This was published eight months ago.

Now appears the second publication *Balbodhini Wyakhia on Bhagwat Gita,* by Ganesh Shastri.

Thus the series will continue bearing a round seal of my name in Sanskrit on the title page.

All these works will be registered under Act No. XXV. of 1867.

CASSINATHRAO MYRAL.

# प्रस्तावना ।

इह खल्वसारे संसारे परमकल्याणसाधनस्य भगवद्विषयकज्ञानस्य संपादयित्री श्रीमद्भगवद्गीता सकलपुरुषार्थसाधनतया समुल्लसतितराम्। श्रीमद्भगवदभिहितसर्वोपनिषत्प्रतिपाद्यार्थसारतया च सर्वत्र विराजमाना प्रसिद्धिमुपगताऽभूत् । अस्याश्च वेदार्थोपबृंहितत्वेन भगवत्पूज्यपादश्रीमच्छंकराचार्यप्रभृतिभिः प्राचीनैरर्वाचीनैश्च श्रीधरादिभिर्महाविद्वद्भिर्बहूनि व्याख्यानानि विरचितानि समुपलभ्यन्ते । तेषां च भाष्यादीनां महाव्याख्यानानां दुरवगाहतया श्रीधर्यादिषु प्रत्येकपदस्य विग्रहाकरणेन च स्वल्पमतीनां विग्रहादिप्रदर्शनद्वारा सुखेन बोधायास्या बालबोधिन्याख्यटीकायाः कर्तृणां प्रयत्नः प्रदृश्यते । अस्यां च टीकायां श्रीमद्भगवद्गीतायाः सकलश्लोकस्थसर्वपदानां विग्रहप्रदर्शनं प्रायः कृतमासीत् । तच्च प्राचीनटीकाकारचिदानंदानुरोधेन विरचितमासीदिति एतस्या एव लेखतोऽनुमीयते । ते च सर्वे विग्रहाः प्राचीनटीकाकारकृता वा स्वकपोलकल्पिता वेति न निश्चिनुमहे । चिदानंदकृतटीकाया अनुपलंभेनादृष्टत्वात् । अस्याश्च सरलतया मूलश्लोकोक्तसमस्तपदानां विग्रहप्रदर्शनेन भगवदभिप्रायप्रदर्शनेन च बालबुद्ध्युपकारकत्वं ज्ञात्वा सर्वलोकोपयोगार्थं पाठकोपाह्वमेराळसुतकाशीनाथेन विद्वद्भिः संशोधयित्वा प्रकाशितेत्यलम् ॥

शोधयिता ।

अथ

# श्रीमद्भगवद्गीता बालबोधिनी-व्याख्यया समेता ।

धृतराष्ट्र उवाच ।

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पांडवाश्चैव किमकुर्वत संजय ॥ १ ॥

संजय उवाच ।

दृष्ट्वा तु पांडवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसंगम्य राजावचनमब्रवीत् ॥ २ ॥

श्रीगणेशाय नमः । श्रीझालसारमणो जयति । हे संजय ! सं कोपं जयतीति संजयः तत्संबुद्धौ । सः कोपे चारणे ख्यात इत्येकाक्षरः । मामकाः मम इमे मामकाः दुर्योधनादयः च पांडवाः पंडोः अपत्यानि पुमांसः पांडवाः धर्मक्षेत्रे धर्मरूपं च तत् क्षेत्रं भूमिः धर्मक्षेत्रं तस्मिन् कुरुक्षेत्रे कुरोः कुरुराज्ञः क्षेत्रं तस्मिन् समवेताः संतः मिलिताः संतः किं अकुर्वत किं कृतवंतः । कथंभूताः मामकाः पांडवाश्च । युयुत्सवः योद्धुं इच्छंति ते युयुत्सवः ॥ १ ॥ तदा मीलनसमये राजा दुर्योधनः दुःखेन कष्टेन युध्यतेऽसौ दुर्योधनः आचार्यं द्रोणाचार्यं उपसंगम्य समीपं गत्वा वचनं वक्ष्यमाणं वाक्यं उवाच

पश्यैतां पांडुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥
अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥
धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।
पुरुजित्कुंतिभोजश्च शैब्यश्च नरपुंगवः ॥ ५ ॥

उक्तवान् । किं कृत्वा पांडवानीकं पांडवानां अनीकं सैन्यं पांडवानीकं दृष्ट्वा अवलोक्य । कथंभूतं पांडवानीकम् । व्यूढं व्यूहरचनया स्थितम् ॥ २ ॥ हे आचार्य हे द्रोणाचार्य ! त्वं पांडुपुत्राणां पांडोः पुत्राः पांडुपुत्राः तेषां पांडवानां एतां पुरोवर्तिनीं चमूं सेनां पश्य अवलोकय । कथंभूतां चमूम् । महतीं विस्तृताम् । पुनः कथंभूतां चमूम्। द्रुपदपुत्रेण द्रुपदस्य पुत्रः सुतः तेन धृष्टद्युम्नेन व्यूढां व्यूहरचनया अधिष्ठिताम् । कथंभूतेन द्रुपदपुत्रेण तव शिष्येण । पुनः कथंभूतेन। धीमता धीर्विद्यते यस्य सः धीमान् तेन धीमता बुद्धिमता ॥ ३ ॥ अत्र शूरा इति । अत्र अस्यां सेनायां बहवः शूराः संति । कथंभूताः शूराः। महेष्वासाः महांतः इष्वासाः धनूंषि येषां ते । पुनः कथंभूताः शूराः । युधि संग्रामे भीमार्जुनसमाः भीमश्च अर्जुनश्च भीमार्जुनौ भीमार्जुनाभ्यां समाः तुल्याः । बहवः के । युयुधानः सात्यकिः चेत्यपरं विराटः चेत्यपरं द्रुपदः । कथंभूतः द्रुपदः । महारथः महान् रथो यस्य सः ॥ ४ ॥ धृष्टकेतुः चेत्यपरं चेकितानः चेत्यपरं काशिराजः । कथंभूतः काशिराजः वीर्यवान् वीर्यं पराक्रमः विद्यते यस्य सः च पुरुजित् च कुंतिभोजः च शैब्यः । कथंभूतः शैब्यः । नरपुंगवः नराणां मध्ये पुंगवः नरपुंगवः नरश्रेष्ठः ॥ ५॥

युधामन्युश्च विक्रांत उत्तमौजाश्च वीर्यवान्।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥
अस्माकं तु विशिष्टा ये तान् निबोध द्विजोत्तम।
नायका मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ते॥ ७ ॥
भवान् भीष्मश्च कर्णश्च कृपश्च समितिंजयः।
अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥ ८ ॥
अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः।

एते सर्वे महारथाः संति। एते के। युधामन्युः चेत्यपरं विक्रांतः चेत्यपरं उत्तमौजाः उत्तमं ओजो यस्य सः उत्तमौजाः। कथंभूतः उत्तमौजाः। वीर्यवान् वीर्यं पराक्रमः विद्यते यस्य सः चेत्यपरं सौभद्रः सुभद्रायाः अपत्यं पुमान् सौभद्रः अभिमन्युः च द्रौपदेयाः द्रौपद्यां पंचेभ्यः पांडवेभ्यः जाताः द्रौपदेयाः ॥ ६ ॥ हे द्विजोत्तम! द्विजानां ब्राह्मणानां मध्ये उत्तमः द्विजोत्तमः तत्संबुद्धौ हे द्विजोत्तम हे आचार्य! अस्माकं ये वीराः विशिष्टाः विशेषेण शिष्टाः संति तान् वीरान् अहं ते तुभ्यं संज्ञार्थं संज्ञायै इति संज्ञार्थं ज्ञानाय ब्रवीमि। त्वं तान् वीरान् निबोध बुध्यस्व। कथंभूताः विशिष्टाः। ये मम सैन्यस्य नायकाः नेतारः ॥७॥ ते के। भवान् त्वं चेत्यपरं भीष्मः च कर्णः च कृपः कृपाचार्यः च अश्वत्थामा चेत्यपरं विकर्णः तथैव सौमदत्तिः सोमदत्तस्य पुत्रः सौमदत्तिः भूरिश्रवाः ॥ ८ ॥ चेत्यपरं एतेभ्यः अन्ये बहवः शूराः संति च सर्वे शूराः युद्धविशारदाः युद्धे विशारदाः कुशलाः संति। कथंभूताः शूराः। मदर्थे मम अर्थः कार्यं मदर्थः तस्मिन् त्यक्तजीविताः त्यक्तं जीवितं यैस्ते तथोक्ताः।

नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥
अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥
अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षंतु भवंतः सर्व एव हि ॥ ११ ॥
तस्य संजनयन् हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैः शंखं दध्मौ प्रतापवान् ॥ १२ ॥

पुनः कथंभूताः शूराः। नानाशस्त्रप्रहरणाः नानाशस्त्राणि अनेकशस्त्राणि प्रहरणानि प्रहरणसाधनानि येषां ते ॥ ९ ॥ अपर्याप्तमिति । तत् तथाभूतैः वीरैः युक्तमपि अस्माकं बलं सैन्यं अपर्याप्तं पर्याप्तं न भवति तत् अपर्याप्तं तैः पांडवैः सह योद्धुं असमर्थं भाति। इदं तु एतेषां पांडवानां बलं सैन्यं पर्याप्तं समर्थं भाति । कथंभूतं बलम् । भीष्माभिरक्षितं भीष्मेण अभिरक्षितं संरक्षितम् । पुनः कथंभूतं बलम् । भीमाभिरक्षितं भीमेन अभिरक्षितं संरक्षितम् ॥ १० ॥ सर्व एव संपूर्णा एव भवंतः यूयं सर्वेषु संपूर्णेषु अयनेषु व्यूहप्रवेशमार्गेषु यथाभागं विभक्तां स्वां स्वां रणभूमिं अपरित्यज्य अत्यक्त्वा अवस्थिताः संतः भीष्ममेव अभिरक्षंतु संरक्षंतु । हि इति निश्चयेन । भीष्मबलेनैव अस्माकं जीवनं भविष्यति ॥ ११ ॥ सर्वेषां कौरवाणां पितामहः भीष्मः तस्य दुर्योधनस्य हर्षं जयेनन् जनयति निर्माणयतीति जनयन् सन् उच्चैः महांतं सिंहनादं सिंह इव नादः सिंहनादः तं विनद्य कृत्वा शंखं दध्मौ वादितवान् । कथंभूतः पितामहः। कुरुवृद्धः कुरूणां वृद्धः । पुनः कथंभूतः पितामहः । प्रतापवान् प्रतापः विद्यते यस्य सः प्रतापवान् ॥ १२ ॥

ततः शंखाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यंत स शब्दस्तुमुलोऽभवत् ॥ १३ ॥
ततः श्वेतैर्हयैर्युक्ते महति स्यंदने स्थितौ ।
माधवः पांडवश्चैव दिव्यौ शंखौ प्रदध्मतुः ॥१४॥
पांचजन्यं हृषीकेशो देवदत्तं धनंजयः ।
पौंड्रं दध्मौ महाशंखं भीमकर्मा वृकोदरः ॥१५॥

ततस्तदनंतरं भीष्मशंखशब्दश्रवणानंतरं शंखाः चेत्यपरं भेर्यः च पणवानकगोमुखाः पणवाश्च आनकाश्च गोमुखाश्च पणवानकगोमुखाः वाद्यविशेषाः सहसैव तत्क्षणमेव अभ्यहन्यंत वादिताः । स शब्दः भीष्मशंखशब्दः तुमलः महान् अभवत् जातः ॥ १३ ॥ ततस्तदनंतरं भीष्मशंखादिवाद्यश्रवणानंतरम् । तौ द्वौ दिव्यौ दीप्तिमंतौ शंखौ प्रदध्मतुः प्रकर्षेण वादयामासतुः । तौ कौ । माधवः मायाः लक्ष्म्याः धवः श्रीकृष्णः चेत्यपरं पांडवः पंडोः पुत्रः पांडवः अर्जुनः । कथंभूतौ तौ । महति श्रेष्ठे स्यंदने रथे स्थितौ । कथंभूते स्यंदने । श्वेतैः शुभ्रैः हयैः अश्वैः युक्ते ॥ १४ ॥ हृषीकेशः हृषीकाणां इंद्रियाणां ईशः हृषीकेशः श्रीकृष्णः । पांचजन्यं पंचजननामकस्य दैत्यस्य देहात् उत्पन्नः पांचजन्यः तं पांचजन्यनामानं शंखं वादयामास । धनंजयः धनं जयतीति धनंजयः अर्जुनः देवदत्तं देवेन अग्निना दत्तः तं देवदत्तनामानं शंखं वादयामास । वृकोदरः वृकनामाग्निः वृकः उदरे यस्य सः । यद्वा । वृक इव उदरं यस्य सः वृकोदरः भीमः पौंड्रं पौड्रनामानं महाशंखं महांश्चासौ शंखश्च महाशंखः तं प्रदध्मौ प्रकर्षेण वादयामास । कथंभूतः वृकोदरः। भीमकर्मा भीमं भयंकरं कर्म यस्य सः भीमकर्मा ॥ १५ ॥

अनंतविजयं राजा कुंतीपुत्रो युधिष्ठिरः ॥
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥
काश्यश्च परमेष्वासः शिखंडी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥
द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।
सौभद्रश्च महाबाहुः शंखान् दध्मुः पृथक्पृथक् ॥१८॥

राजा प्रजाः रंजयतीति राजा धर्मराजः । अनंतविजयं अनंताः विजयाः यस्मात् सः अनंतविजयः तं शंखं वादयामास । कथंभूतः राजा । कुंतीपुत्रः कुंतेः पुत्रः कुंतीपुत्रः । पुनः कथंभूतः राजा । युधिष्ठिरः युधि संग्रामे तिष्ठतीति युधिष्ठिरः । तौ द्वौ सुघोषमणिपुष्पकौ सुघोषश्च मणिपुष्पकश्च सुघोषमणिपुष्पकौ एतन्नामानौ शंखौ । तौ कौ । नकुलः चेत्परं सहदेवः ॥ १६ ॥ हे पृथिवीपते ! पृथिव्याः पतिः पृथिवीपतिः तत्संबुद्धौ हे पृथिवीपते हे धृतराष्ट्र ! एते वीराः सर्वशः सर्वप्रकारेण पृथक् पृथक् भिन्नं भिन्नं शंखान् दध्मुः वादयामासुः । एते के । काश्यः काशिराजः । कथंभूतः काश्यः । परमेष्वासः परमः श्रेष्ठः इष्वासो धनुर्यस्य सः चेत्यपरं शिखंडी शिखंडाः बालशिखाः अस्य संतीति शिखंडी । कथंभूतः शिखंडी । महारथः महान् रथो यस्य सः महारथसंज्ञः च धृष्टद्युम्नः चेत्यपरं विराटः च सात्यकिः । कथंभूतः सात्यकिः। अपराजितः परैः शत्रुभिः जितो न भवतीति चेत्यपरं द्रुपदः द्रुपदराजः चेत्यपरं द्रौपदेयाः द्रौपदीपुत्राः च सौभद्रः अभिमन्युः । कथंभूतः सौभद्रः । महाबाहुः महांतौ पराक्रमयुक्तौ बाहू हस्तौ यस्य सः ॥१७-१८॥ सः प्रसिद्धः घोषः शंखनादः

स घोषो धार्त्तराष्ट्राणां हृदयानि व्यदारयत्।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १९ ॥
अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः।
प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पांडवः ॥ २० ॥
हृषीकेशं तदा वाक्यमिदमाह महीपते।

धृतराष्ट्रस्य अपत्यानि पुमांसः धार्त्तराष्ट्राः तेषां धार्त्तराष्ट्राणां दुर्योधनादीनां हृदयानि व्यदारयत् विदारितवान्। कथंभूतः घोषः। तुमुलः संकुलः। पुनः कथंभूतः घोषः। नभः आकाशं चेत्यपरं पृथिवीं व्यनुनादयन् व्यनुनादयतीति व्यनुनादयन्। व्यनुनादयति प्रतिध्वनिभिः आपूरयाति ॥ १९ ॥ हे महीपते! मह्याः पृथिव्याः पतिः महीपतिः तत्संबुद्धौ हे महीपते हे धृतराष्ट्र! अथ अथेत्यनंतरं शंखशब्दश्रवणानंतरं तदा युद्धसमये पांडवः अर्जुनः धनुः गांडीवं उद्यम्य उद्धृत्य हृषीकेशं हृषीकाणां ईशः हृषीकेशः तं श्रीकृष्णं इदं वक्ष्यमाणं वाक्यं वचनं आह वदति। किं कृत्वा। व्यवस्थितान् युद्धोद्योगे स्थितान् धार्त्तराष्ट्रान् दुर्योधनादीन् दृष्ट्वा अवलोक्य। कस्मिन् सति। शस्त्रसंपाते शस्त्राणां सम्यक् पातः पतनं शस्त्रसंपातः तस्मिन् प्रवृत्ते सति प्राप्ते सति। कथंभूतः पांडवः। कपिध्वजः कपिः ध्वजे यस्य सः कपिध्वजः। कपिः हनुमान् ॥ २० ॥ हे अच्युत हे कृष्ण! अहं यावत् साकल्येन एतान् पुरोवर्तिनः वीरान् निरीक्षे अवलोकयामि तावत्कालपर्यंतं त्वं उभयोः द्वयोः सेनयोः मध्ये मध्यभागे मे मम रथं स्यंदनं स्थापय। कथंभूतान् वीरान्। योद्धुकामान् योद्धुं कामो इच्छा येषां ते योद्धुकामाः तान्। पुनः कथंभूतान् वीरान्। अवस्थितान् स्थितान्। हे भगवन्! अस्मिन्

सेनयोरुभयोर्मध्ये रथं स्थापय मेच्युत ॥ २१ ॥
यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥ २२ ॥
योत्स्यमानानवेक्षेऽहं य एतेत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥

संजय उवाच ।

एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥
भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ॥

रणसमुद्यमे रणस्य संग्रामस्य समुद्यमः रणसमुद्यमः तस्मिन् मया कैः सह योद्धव्यम् ॥ २१-२२ ॥ अत्र रणसमुद्यमे ये एते वीराः समागताः प्राप्ताः अहं योत्स्यमानान् युध्यंति ते योत्स्यमानाः तान् वीरान् अवेक्षे अवलोकयामि । कथंभूताः ये । युद्धे धार्त्तराष्ट्रस्य दुर्योधनस्य प्रियचिकीर्षवः प्रियं कर्तुं इच्छंति ते प्रियचिकीर्षवः । कथंभूतस्य धार्त्तराष्ट्रस्य । दुर्बुद्धेः दुष्टा बुद्धिर्यस्य सः दुर्बुद्धिः तस्य ॥ २३ ॥ हे भारत हे धृतराष्ट्र! हृषीकेशः हृषीकाणां ईशः स्वामी एवं पूर्वोक्तप्रकारेण गुडाकेशेन गुडाकायाः निद्रायाः ईशः गुडाकेशः तेन जितनिद्रेणार्जुनेन उक्तः सन् भाषितः सन् उभयोः सेनयोः चेत्यपरं सर्वेषां संपूर्णानां महीक्षितां राज्ञां चेत्यपरं भीष्मद्रोणप्रमुखतः भीष्मश्च द्रोणश्च भीष्मद्रोणौ भीष्मद्रोणयोः प्रमुखतः संमुखे रथोत्तमं सर्वेषां रथानां उत्तमः रथोत्तमः तं स्थापयित्वा इति एवं उवाच उक्तवान् । इतीति किम् । हे पार्थ हे अर्जुन ! त्वं एतान् कुरून् कुरुवं-

उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति ॥ २५ ॥

तत्रापश्यत् स्थितान् पार्थः पितॄनथ पितामहान् ।

आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा ॥ २६ ॥

श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि ।

तान्समीक्ष्य स कौंतेयः सर्वान्बंधूनवस्थितान् ।

कृपया परयाऽऽविष्टो विषीदन्निदमब्रवीत् ॥ २७ ॥

शोद्भवान् राज्ञः पश्य अवलोकय । कथंभूतान् कुरून् । समवेतान् युद्धं कर्तुं एकत्र मिलितान् ॥ २४–२५ ॥ पार्थः अर्जुनः तत्र रणभूमौ तान् अपश्यत् । तान् कान् । पितॄन् पितृव्यान् अथ तदनंतरं पितामहान् भीष्मादीन् च आचार्यान् द्रोणादीन् मातुलान् शल्यादीन् भ्रातॄन् दुर्योधनादीन् पुत्रान् पौत्रान् दुर्योधनादीनां पुत्रपौत्रान् सखीन् मित्राणि । कथंभूतान् तान् । स्थितान् युद्धाय कृतनिश्चयान् ॥ २६ ॥ श्वशुरान् द्रुपदादीन् चेत्यपरं सुहृदः कृतोपकारान् अपश्यत् । सः प्रसिद्धः कौंतेयः कुंतेः अपत्यं पुमान् कौंतेयः अर्जुनः उभयोः द्वयोः सेनयोः तान् प्रसिद्धान् सर्वान् संपूर्णान् बंधून् दुर्योधनादीन् समीक्ष्य अवलोक्य परया उत्कृष्टया कृपया दयया आविष्टः सन् व्याप्तः सन् श्रीकृष्णं प्रति इदं वक्ष्यमाणं अब्रवीत् उक्तवान् । कथभूतः कौंतेयः । विषीदन् विषीदतीति विषीदन् विषादाति खेदं प्राप्नोति । कथंभूतान् बंधून् । अवस्थितान् युद्धं कर्तुं स्थितान् ॥ २७ ॥ हे कृष्ण ! अहं इमं पुरोवर्तिनं स्वजनं बंधुवर्गं दृष्ट्वा अवलोक्य भ्रमामीति शेषः भ्रमं प्राप्नोस्मि । कथंभूतं स्व-

अर्जुन उवाच ।

दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ।
सीदंति मम गात्राणि मुखं च परिशुष्यति ॥ २८ ॥

वेपथुश्च शरीरे मे रोमहर्षश्च जायते ।
गांडीवं स्रंसते हस्तात् त्वक् चैव परिदह्यते ॥ २९ ॥

न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ।
निमित्तानि च पश्यामि विपरीतानि केशव ॥ ३० ॥

न च श्रेयो नु पश्यामि हत्वा स्वजनमाहवे ।
न कांक्षे विजयं कृष्ण न च राज्यं सुखानि च ॥ ३१ ॥

जनम् । युयुत्सुं योद्धुं इच्छतीति युयुत्सुः तम् । पुनः कथंभूतं स्वजनम् । समुपस्थितं सम्यक् उपस्थितं प्राप्तम् । भ्रममाह । मम गात्राणि इंद्रियाणि सीदंति विशीर्यंते चेत्यपरं मुखं परिशुष्यति शुष्कं भवति ॥ २८ ॥ किं च मे मम शरीरे देहे वेपथुः कंपः जायते च रोमहर्षः रोम्णां हर्षः रोमहर्षः रोमांचः जायते । किं च गांडीवं हस्तात् स्रंसते निपतति चेत्यपरं त्वक् त्वचा परिदह्यते सर्वतः संतप्यते ॥ २९ ॥ किं च अहं अवस्थातुं न शक्नोमि न समर्थः च मे मम मनः अंतःकरणं भ्रमतीव । हे केशव ! कश्च ईशश्च केशौ कः ब्रह्मा ईशः शिवः केशौ वशयतीति केशवः तत्संबुद्धौ हे केशव ! अहं विपरीतानि अशुभानि निमित्तानि अनिष्टसूचकान् शकुनान् पश्यामि ॥ ३० ॥ किं च हे कृष्ण ! अहं स्वजनं स्वबंधुवर्गं आहवे युद्धे

किं नो राज्येन गोविंद किं भोगैर्जीवितेन वा।
येषामर्थे कांक्षितं नो राज्यं भोगाः सुखानि च॥ ३२॥
त इमेवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च।
आचार्याः पितरः पुत्रास्तथैव च पितामहाः॥ ३३॥
मातुलाः श्वशुराः पौत्राः श्यालाः संबंधिनस्तथा।
एतान्न हंतुमिच्छामि घ्नतोपि मधुसूदन॥ ३४॥

हत्वा श्रेयः कल्याणं न पश्यामि नावलोकयामि। अहं विजयं विशेषेण जयः विजयः तं न कांक्षे न इच्छामि। चेत्यपरं राज्यं राज्ञः कर्म राज्यं नेच्छामि। किं च अहं सुखानि नेच्छामि नु निश्चयेन ॥ ३१ ॥ हे गोविंद हे कृष्ण! नः अस्माकं राज्येन किं चेत्यपरं भोगैः किं अथवा जीवितेन जीवनेन किम्। येषां बंधुवर्गाणां अर्थे कार्ये नः अस्माकं राज्यं कांक्षितं अपेक्षितं अस्ति भोगाः ऐश्वर्याणि चेत्यपरं सुखानि अपेक्षितानि संति ॥ ३२ ॥ इमे पुरोवर्तिनः ते बंधुवर्गाः प्राणान् चेत्यपरं धनानि त्यक्त्वा मृत्युं स्वीकृत्य युद्धे अवस्थिताः स्थिताः। ते के। आचार्याः द्रोणाचार्यादयः चेत्यपरं पितरः भूरिश्रवादयः चेत्यपरं पुत्राः तथैव पितामहाः भीष्मादयः ॥ ३३ ॥ चेत्यपरं मातुलाः शल्यादयः च श्वशुराः द्रुपदादयः पौत्राः दुर्योधनादीनां पुत्राः चेत्यपरं श्यालाः धृष्टद्युम्नादयः। तथा संबंधिनः संबंधो येषामस्ति ते संबंधिनः पुत्रपौत्रादीनां श्वशुरादयः। हे मधुसूदन! मधुं मधुनामानं दैत्यं सूदयतीति मधुसूदनः तत्संबुद्धौ। अहं एतान् बंधुवर्गान् हंतुं न इच्छामि। कथंभूतान् एतान्। घ्नतः घ्नंतीति घ्नंतः घ्नंति अस्मान् मारयंति ते घ्नतः तान् ॥ ३४ ॥ हे जनार्दन!

अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ।
निहत्य धार्त्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ॥ ३५ ॥
पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ।
तस्मान्नार्हा वयं हंतुं धार्त्तराष्ट्रान् सबांधवान् ॥ ३६ ॥
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ।
यद्यप्येते न पश्यंति लोभोपहतचेतसः ॥ ३७ ॥
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ।

जनान् दुष्टजनान् अर्दयति पीडयति इति जनार्दनः तत्संबुद्धौ । अहं त्रैलोक्यराज्यस्यापि त्रैलोक्यस्य राज्यं त्रैलोक्यराज्यं तस्य हेतोः एतान् बंधुवर्गान् हंतुं नेच्छामि महीकृते महीमात्रप्राप्त्यर्थं किं नु हंतुं इच्छामि? अपि तु नेच्छामि । धार्त्तराष्ट्रान् धृतराष्ट्रस्य पुत्राः धार्त्तराष्ट्राः तान् दुर्योधनादीन् निहत्य हत्वा नः अस्मान् का प्रीतिः संतोषः स्यात्? अपि तु न स्यादेव ॥ ३५ ॥ हे भगवन्! एतान् पुरोवर्तिनः आततायिनः "अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते त्वाततायिनः' ॥ तान् हत्वा पापमेव अस्मान् आश्रयेत् तस्मात् कारणात् वयं धार्त्तराष्ट्रान् हंतुं नार्हाः न योग्याः । कथंभूतान् धार्त्तराष्ट्रान् । सबांधवान् बांधवैः सहिताः सबांधवाः तान् ॥ ३६ ॥ हे माधव! वयं स्वजनं आप्तजनं हत्वा सुखिनः सुखं येषामस्ति ते सुखिनः सुखयुक्ताः कथं स्याम अपि तु न स्याम । हि इति निश्चयेन एते दुर्योधनादयः लोभोपहतचेतसः लोभेन राज्यलोभेन उपहतं भ्रष्टं चेतो अंतःकरणं येषां ते लोभोपहतचेतसः ॥३७॥ कुलक्षयकृतं कुलक्षयेण कृतः कुलक्षयकृतः तं दोषं त्वेत्यपरं मित्रद्रोहे मित्राणां द्रोहः

कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ॥ ३८ ॥
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ।
कुलक्षये प्रणश्यंति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ३९ ॥
अधर्माभिभवात् कृष्ण प्रदुष्यंति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥ ४० ॥

मित्रद्रोहः तस्मिन् पातकं यद्यपि न पश्यंति । अस्माभिः अस्मात् युद्धरूपात् पापात् दोषात् निवर्तितुं कथं न ज्ञेयं परावृत्तौ बुद्धिः कर्त्तव्या ॥ ३८ ॥ हे जनार्दन कथंभूतैः अस्माभिः । कुलक्षयकृतं कुलस्य क्षयः कुलक्षयः कुलक्षयेण कृतः कुलक्षयकृतः तं दोषं प्रपश्यद्भिः प्रकर्षेण पश्यंति ते प्रपश्यंतः तैः प्रपश्यद्भिः प्रकर्षेण उत्कर्षेण पश्यंति अवलोकयंति । तमेव दोषं दर्शयति । कुलक्षये सति सनातनाः परंपरया प्राप्ताः कुलधर्माः कुले वंशे धर्माः प्रणश्यंति नष्टाः भवंति । उत धर्मे नष्टे सति अधर्मः कृत्स्नं संपूर्णं कुलं वंशं अभिभवति व्याप्नोति ॥ ३९ ॥ हे कृष्ण ! कुलस्त्रियः कुलवत्यः स्त्रियः अधर्माभिभवात् अधर्मस्य अभिभवः अधर्माभिभवः तस्मात् प्रदुष्यंति दूषिताः भवंति । हे वार्ष्णेय! वृष्णेः गोत्रापत्यं पुमान् वार्ष्णेयः तत्संबुद्धौ हे वार्ष्णेय हे कृष्ण! स्त्रीषु दुष्टासु सत्सु वर्णसंकरः वर्णानां संकरः एकत्र मीलनं जायते वर्णसंकरः उत्पन्नो भवति ॥ ४० ॥ किं च कुलस्य वंशस्य संकरः वर्णसंकरः कुलघ्नानां कुलानि घ्नंति ते कुलघ्नाः तेषां नरकायैव भवति इति शेषः । किं च येषां कुलघ्नानां पितरः नरके इति शेषः पतंति । हि इति निश्चयेन ।

संकरो नरकायैव कुलघ्नानां कुलस्य च ।
पतंति पितरो ह्येषां लुप्तपिंडोदकक्रियाः ॥ ४१ ॥
दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।
उत्साद्यंते जातिधर्माः कुलधर्माश्च शाश्वताः ॥ ४२ ॥
उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४३ ॥
अहो बत महत्पापं कर्त्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हंतुं स्वजनमुद्यताः ॥ ४४ ॥

कथंभूताः पितरः लुप्तपिंडोदकक्रियाः पिंडाश्च उदकानि च क्रियाश्च पिंडोदकक्रियाः लुप्ताः पिंडोदकक्रियाः येषां ते ॥ ४१ ॥ कुलघ्नानां कुलघातकानां एतैः कथितैः दोषैः जातिधर्माः जातेः धर्माः वर्णधर्माः चेत्यपरं शाश्वताः परंपरया प्राप्ताः कुलधर्माः कुलस्य धर्माः उत्साद्यंते लुप्यंते । चकारात् आश्रमधर्मादयः लुप्यंते । कथंभूतैः दोषैः । वर्णसंकरकारकैः वर्णानां संकरः वर्णसंकरः वर्णसंकरं कुर्वंति ते वर्णसंकरकारकाः तैः ॥ ४२ ॥ हे जनार्दन! उत्सन्नकुलधर्माणां उत्सन्नाः भ्रष्टाः कुलधर्माः वर्णाश्रमधर्माः येषां ते उत्सन्नकुलधर्माः तेषां मनुष्याणां नियतं नियमेन नरके वासः वसतिस्थानं भवति इति एवं वयं अनुशुश्रुम श्रुतवंतः ॥ ४३ ॥ अहो इत्याश्चर्ये । बत इति खेदे । वयं यत् एतत् कुलक्षयरूपं महत्पापं महत् स्वजनवधरूपं च तत्पापं च महत्पापं कर्त्तुं व्यवसिताः निश्चयं कृतवंतः । कथंभूताः वयम् । राज्यसुखलोभेन राज्यं च सुखं च राज्यसुखे राज्यसुखयोः लोभः राज्यसुखलोभः तेन स्वजनं बंधुवर्गं

यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४५ ॥

संजय उवाच ।

एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४६ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सुब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे अर्जुनविषादयोगो नाम प्रथमोऽध्यायः ॥ १ ॥

हंतु उद्यताः उत्कर्षेण यत्नं कुर्वंतः ॥ ४४ ॥ धार्त्तराष्ट्राः धृतराष्ट्रस्य पुत्राः धार्त्तराष्ट्राः दुर्योधनादयः मां रणे संग्रामे यदि हन्यु. हनिष्यंति तर्हि तत् हननं मे मम क्षेमतरं अतिशयेन क्षेम इति क्षेमतरं अत्यंतहितं भवेत् । कथंभूताः धार्त्तराष्ट्राः । शस्त्रपाणयः शस्त्राणि पाणिषु हस्तेषु येषां ते शस्त्रपाणयः । कथंभूतं माम् । अप्रतीकारं न विद्यते प्रतीकारो प्रतिकरणं यस्मिन् सः अप्रतीकारः तं तूष्णीं उपविष्टम् । पुनः कथंभूतं माम् । अशस्त्रं नास्ति शस्त्रं यस्य सः अशस्त्रः तम् ॥ ४५ ॥ हे धृतराष्ट्र ! अर्जुनः संख्ये संग्रामे एवं पूर्वोक्तप्रकारेण श्रीकृष्णं उक्त्वा रथोपस्थे रथस्य उपस्थं उपरिभागः रथोपस्थं तस्मिन् रथोपस्थे उपाविशत् उपविवेश । किं कृत्वा । सशरं शरेण सहितं सशरं शरेण बाणेन सहितं युक्तं चापं गांडीवं उत्सृज्य त्यक्त्वा । कथंभूतः अर्जुनः । शोकसंविग्नमानसः शोकेन संविग्नं मानसं यस्य सः शोकसंविग्नमानसः । संविग्नं प्रकंपितम् मानसं हृदयम् ॥ ४६ ॥  ॥ इति श्रीबालबोधिन्यां श्रीमद्भगवद्गीताटीकायां प्रथमोऽध्यायः ॥ १ ॥  ॥

संजय उवाच ।

तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदंतमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥

श्रीभगवानुवाच ।

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥
क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते. ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ ३ ॥

श्रीः । हे धृतराष्ट्र ! मधुसूदनः मधुं मधुनामानं दैत्यं सूदयतीति मधुसूदनः श्रीकृष्णः तं अर्जुनं प्रति इदं वक्ष्यमाणं वाक्यं उवाच उक्तवान् । कथंभूतं तम् । कृपया दयया आविष्टं व्याप्तम् । पुनः कथंभूतं तम् । अश्रुपूर्णाकुलेक्षणं अश्रुभिः पूर्णे आकुले व्याकुले ईक्षणे नेत्रे यस्य सः अश्रुपूर्णाकुलेक्षणः तम् । पुनः कथंभूतं तम् । तथा उक्तप्रकारेण विषीदंतं विषीदतीति विषीदन् तम् ॥ १ ॥ हे अर्जुन! कुतः हेतोः इदं कश्मलं मोहः त्वा त्वां विषमे संग्रामे समुपस्थितं प्राप्तः । कथंभूतं कश्मलम् । अनार्यजुष्टं आर्यैः जुष्टं न भवति तत् अनार्यजुष्टं आर्यैः श्रेष्ठपुरुषैः जुष्टं सेवितं न भवति । पुनः कथंभूतं कश्मलम् । अस्वर्ग्यं स्वर्गाय योग्यं न भवति तत् अस्वर्ग्यं अधर्म्यम् । पुनः कथंभूतं कश्मलम् । अकीर्तिकरं अकीर्तिं करोति तत् अकीर्तिकरं अयशस्करम् ॥ २ ॥ हे पार्थ! त्वं क्लैब्यं क्लीबस्य नपुंसकस्य कर्म क्लैब्यं कातर्यं मा

अर्जुन उवाच।

कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥
गुरूनहत्वा हि महानुभावान्
श्रेयो भोक्तुं भैक्षमपीह लोके।

स्म गमः न प्राप्नुहि। एतत् क्लैब्यं त्वयि अर्जुने नोपपद्यते न योग्यं भवति। हे परंतप! परान् शत्रून् तापयति संतापं करोतीति परंतपः तत्संबुद्धौ हे परंतप हे अर्जुन! त्वं क्षुद्रं क्षुद्रस्य क्लीबस्य कर्म क्षुद्रं त्यक्त्वा विवेकेन अपनीय उत्तिष्ठ युद्धाय सज्जो भव। कथंभूतं क्षुद्रम्। हृदयदौर्बल्यं हृदये दौर्बल्यं जनयति तत् हृदयदौर्बल्यं हृदये मनसि दौर्बल्यं भ्रमं जनयति निर्माणं करोति ॥ ३ ॥ हे मधुसूदन हे मधुदैत्यारिसूदन! अहं संख्ये संग्रामे भीष्मं पितामहं चेत्यपरं द्रोणं गुरुं इषुभिः बाणैः कथं योत्स्यामि कथं युद्धं करोमि ? अपि तु न करिष्यामि। कथंभूतौ भीष्मद्रोणौ पूजार्हौ पूजायां अर्हौ योग्यौ स्तः ॥ ४ ॥ अहं गुरून् द्रोणादीन् अहत्वा 'परलोके विरुद्धः गुरुवधः अस्ति' तं गुरुवधं अकृत्वा इह अस्मिन् लोके भैक्षमपि भिक्षायाः अन्नं भैक्षं भोक्तुं भक्षितुं श्रेयः उचितं योग्योस्मि। अहं गुरून् द्रोणादीन् हत्वा इहैव लोके रुधिरप्रदिग्धान् रुधिरेण प्रदिग्धाः प्रकर्षेण लिप्ताः रुधिरप्रदिग्धाः तान् भोगान् राज्यभोगान् भुंजीय अश्नीयाम्। हि इति निश्चयेन। कथंभूतान् गुरून्। महानुभावान् महांतः श्रेष्ठाः अनुभावाः सामर्थ्यानि येषां ते महानु-

हत्वार्थकामांस्तु गुरूनिहैव
भुंजीय भोगान् रुधिरप्रदिग्धान् ॥ ५ ॥
न चैतद्विद्मः कतरन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः ।
यानेव हत्वा न जिजीविषामः
तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥ ६ ॥
कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वां धर्मसंमूढचेताः ।

भावाः तान् । पुनः कथंभूतान् गुरून् । अर्थकामान् अर्थेषु द्रव्येषु कामो इच्छा येषां ते अर्थकामाः तान् ॥ ५ ॥ तथापि एवं सत्यपि अस्माकं जयः वा पराजयः भवेत् इति न ज्ञायते । हे कृष्ण! एतत् द्वयोः जयपराजययोः मध्ये नः अस्माकं कतरत् किं नाम गरीयः अधिकतरं भवति । यद्वा वयं एतान् धार्तराष्ट्रान् जयेम जेष्यामः । यदि वा अथवा ते धार्तराष्ट्राः नः अस्मान् जयेयुः जेष्यंति इति एवं वयं न विद्मः न जानीमः । किं च वयं यानेव धार्तराष्ट्रानेव हत्वा न जिजीविषामः जीवितुं नेच्छामः । कथंभूताः धार्त्तराष्ट्राः। प्रमुखे संमुखे अवस्थिताः स्थिताः ॥ ६ ॥ हे भगवन्! अहं त्वां पृच्छामि अतः हेतोः मे मम यत् निश्चितं श्रेयः कल्याणं स्यात् तत् श्रेयः त्वं ब्रूहि । किं च अहं ते तव शिष्यः शिषितुं शिक्षितुं योग्यः शिष्यः अस्मि ।अतः हेतोः त्वं मां शाधि शिक्षय । कथंभूतं• माम् । त्वां प्रपन्नं शरणागतम् ।कथंभूतः अहम् । कार्पण्यदोषोपह-

यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेहं शाधि मां त्वां प्रपन्नम् ॥ ७ ॥
न हि प्रपश्यामि ममापनुद्यात्
यच्छोकमुच्छोषणमिंद्रियाणाम् ।
अवाप्य भूमावसपत्नमृद्धम्
राज्यं सुराणामपि चाधिपत्यम् ॥ ८ ॥

तस्वभावः कार्पण्यं च दोषश्च कार्पण्यदोषौ कार्पण्यदोषाभ्यां उपहतः स्वभावो यस्य सः 'एतान् हत्वा कथं जीविष्याम इति कार्पण्यम्' दोषः स्वकुलक्षयः ताभ्यां उपहतः अभिभूतः स्वभावः शौर्यादिलक्षणस्वभावः । पुनः कथंभूतः अहम् । धर्मसंमूढचेताः 'युद्धं त्यक्त्वा भिक्षाटनमपि क्षत्रियस्य धर्मो वा अधर्मः' इत्येवंरूपे धर्मे संमूढं संदिग्धं चेतः अंतःकरणं यस्य सः ॥ ७ ॥ हे भगवन्! यत् कर्म मदीयं मम अयं मदीयः तं शोकं अपनुद्यात् अपनयेत् तत् कर्म अहं न प्रपश्यामि । यद्यपि अहं भूमौ पृथिव्यां ऋद्धं समृद्धं राज्यं अवाप्य प्राप्य चेत्यपरं सुराणां देवानां आधिपत्यमपि ऐंद्रं पदमपि अवाप्य प्राप्य मम शोकापनोदनोपायं शोकस्य अपनोदनं दूरीकरणं शोकापनोदनं शोकापनोदनस्य उपायः शोकापनोदनोपायः तं न प्रपश्यामि । हि इति निश्चयेन । कथंभूतं शोकम् । इंद्रियाणां उच्छोषणं उत् शोषयतीति उच्छोषणः तं उत् उत्कर्षेण शोषयति शुष्कं करोति । कथंभूतं राज्यम् । असपत्नं न विद्यते सपत्नाः शत्रवः यस्मिन् तत् असपत्नम् ॥ ८ ॥ हे धृतराष्ट्र! परंतपः परान् शत्रून् तापयति संतापयतीति

संजय उवाच ।

एवमुक्त्वा हृषीकेशं गुडाकेशः परंतपः ।
न योत्स्य इति गोविंदमुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥
तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये विषीदंतमिदं वचः ॥ १० ॥

श्रीभगवानुवाच ।

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचंति पंडिताः ॥ ११ ॥

परंतपः अर्जुनः गोविंदं गां वेदलक्षणां वाणीं विंदतीति गोविंदः तं एवं 'अहं संख्ये संग्रामे भीष्मद्रोणौ बाणैः कथं योत्स्यामि' इति युद्धायोग्यतां युद्धस्य अयोग्यता युद्धायोग्यता तां उक्त्वा तदनंतरं अहं न योत्स्ये इति एवं उक्त्वा तूष्णीं बभूव ह। कथं भूतं गोविंदम्। हृषीकेशं हृषीकाणां इंद्रियाणां ईशः हृषीकेशः तम्। कथंभूतः परंतपः। गुडाकेशः गुडाकायाः निद्रायाः ईशः स्वामी गुडाकेशः जितनिद्रः ॥ ९ ॥ हे भारत! हृषीकेशः श्रीकृष्णः प्रहसन्निव प्रहसतीति प्रहसन् प्रहसति उत्कर्षेण हसति तं अर्जुनं इदं वक्ष्यमाणं वचः वाक्यं उवाच उक्तवान्। कथंभूतं तम्। उभयोः द्वयोः सेनयोः मध्ये मध्यभागे विषीदंतं विषीदति खेदं प्राप्नुवतीति विषीदन् तं विषीदंतम् ॥ १० ॥ हे अर्जुन! त्वं अशोच्यान् शोचितुं योग्याः शोच्याः न शोच्याः अशोच्याः तान् शोकानर्हान् बंधून् अन्वशोच्यः अनुलक्षेण शोचितवान् असि। चेत्यपरं प्रज्ञावादान् प्रज्ञावतां वादाः प्रज्ञावादाः तान् प्रज्ञावतां पंडितानां

न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥ १२ ॥
देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।
तथा देहांतरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३ ॥
मात्रास्पर्शास्तु कौंतेय शीतोष्णसुखदुःखदाः।

वादाः शब्दाः भाषसे त्वं पंडितः नासि। पंडिताः ज्ञानिनः गतासून् मृताः असवः प्राणाः येषां ते गतासवः तान् गतासून् गतप्राणा बंधून्। चेत्यपरं अगतासून् जीवतः बंधून् नानुशोचंति ॥ ११ ॥ यथा अहं परमेश्वरः जातु कदाचित् ' लीलाविग्रहस्य लीलया विग्रहो देहः यस्य सः लीलाविग्रहः तस्य मम आविर्भावे चेत्यपरं तिरोभावेपि ' नासं इति न अपि तु आसम्। तथा त्वमपि आसीः। इमे जनाधिपाः जनानां अधिपाः जनाधिपाः राजानः नासन् इति न अपि तु आसन्। तथा अतःपरं इतः उपरि वयं सर्वे न भविष्यामः इति न अपि तु भविष्यामः स्थास्याम एव। जन्ममरणशून्यत्वात् ॥ १२ ॥ यथा देहिनः देहोस्यास्तीति देही तस्य देहिनः देहाभिमानिनः जीवस्य अस्मिन् देहे स्थूलदेहे कौमारं चेत्यपरं यौवनं तारुण्यं चेत्यपरं जरा भवति। तथा देहनाशे सति देहाभिमानिनः जीवस्य देहांतरप्राप्तिः अन्यः देहः इति देहांतरं देहांतरस्य प्राप्तिः देहांतरप्राप्तिः भवति। अतः हेतोः धीरः धीमान् तत्र देहनाशोत्पत्त्योः न मुह्यति मोहं न प्राप्नोति आत्मा मृतः चेत्यपरं जातः इति न मन्यते ॥ १३ ॥ हे कौंतेय हे भारत! मात्रास्पर्शाः मात्राणां इंद्रियवृत्तीनां स्पर्शाः विषयसंबंधाः मात्रास्पर्शाः शीतोष्णसुखदुःखदाः शीतं च उष्णं च सुखं च दुःखं च शीतोष्णसुखदुःखानि शीतोष्णसुखदुःखानि ददति ते तथोक्ताः संतीति शेषः।

आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत॥१४॥
यं हि न व्यथयंत्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥
नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोंऽतस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥
अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।

कथंभूताः मात्रास्पर्शाः । आगमापायिनः उत्पत्तिविनाशवंतः । पुनः कथंभूताः मात्रास्पर्शाः । अनित्याः अस्थिराः त्वं तान् सुखदुः-खादिप्रदान् इंद्रियाणां विषयसंबंधान् तितिक्षस्व विवेकेन सहस्व । कौंतेय ! भारत ! इति संबोधनद्वयेन उभयकुलविशुद्धस्य तव अ-ज्ञानं अनुचितमिति भावः ॥ १४ ॥ हे पुरुषर्षभ हे पुरुषश्रेष्ठ ! एते मात्रास्पर्शाः यं पुरुषं न व्यथयंति न पीडयंति हीति निश्चयेन । सः पुरुषः अमृतत्वाय मोक्षाय कल्पते योग्यो भवति । कथंभूतं पुरुषम् । समदुःखसुखं समे दुःखसुखे यस्य सः समदुःखसुखः तम् । पुनः कथं-भूतं पुरुषम् । धीरं धियं ईरतीति धीरः तं धियं बुद्धिं ईरति चिदाभा-सद्वारा धीसाक्षिणं प्रेरयति ॥ १५ ॥ असतः अविद्यमानस्य शीतो-ष्णादेः भावः सत्ता आत्मनि न विद्यते तथा सतः सत्स्वभावस्य आत्म-नः अभावः विनाशः न विद्यते । एवं अनयोः उभयोः सदसतोः अंतः निर्णयः तत्त्वदर्शिभिः तत्त्वं वस्तु दर्शयंति ते तत्त्वदर्शिनः तैः दृष्टः अवलोकितः ॥ १६ ॥ येन सद्रूपेण वस्तुना सर्वं संपूर्णं इदं दृश्यजातं साक्षित्वेन देहादिकं ततं व्याप्तम् । हे अर्जुन ! त्वं तत्तु आत्म-स्वरूपं तु अविनाशि न विद्यते विनाशो यस्य तत् अवि-

विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १७ ॥
अंतवंत इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद्युद्ध्यस्व भारत ॥ १८ ॥
य एनं वेत्ति हंतारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हंति न हन्यते ॥ १९ ॥
न जायते म्रियते वा कदाचित्
नायं भूत्वा भविता वा न भूयः ।

नाशि विद्धि जानीहि । कश्चित् विषयः इंद्रियसंनिकर्षादिरूपो हेतुर्वा अस्य स्फुरणरूपस्य वस्तुनः विनाशं नाशं कर्तुं नार्हति न योग्यो भवति । कथंभूतस्य अस्य । अव्ययस्य न विद्यते व्ययो नाशो यस्य तत् अव्ययं तस्य अव्ययस्य ॥ १७ ॥ नित्यस्य सर्वदैकरूपस्य शरीरिणः शरीरं अस्यास्तीति शरीरी तस्य शरीरिणः देहाभिमानिनः जीवस्य इमे सुखदुःखादिधर्मकाः देहाः तत्त्वदर्शिभिः तत्त्वज्ञैः उक्ताः आत्मनः विनाशो नास्ति सुखदुःखादिसंबंधः नैव तस्मात् मोहजं शोकं त्यक्त्वा युद्ध्यस्व धर्मं मा त्याक्षीः । कथंभूतस्य शरीरिणः । अनाशिनः नाशो यस्यास्तीति नाशी न नाशी अनाशी तस्य नाशरहितस्य । पुनः कथंभूतस्य शरीरिणः । अप्रमेयस्य अपरिच्छिन्नस्य । कथंभूताः देहाः । अंतवंतः अंतः नाशः विद्यते येषां ते अंतवंतः ॥ १८ ॥ यः पुरुषः एनं आत्मानं हंतारं हंतीति हंता तं वेत्ति यः पुरुषः एनं आत्मानं हतं मृतं मन्यते तौ उभौ देहाभिमानेन एनं अविकारिणं आत्मानं न विजानीतः विवेकेन न जानीतः । अयं आत्मा न हंति न हन्यते ॥ १९ ॥ अयं आत्मा न जायते वा अथवा न

अजो नित्यः शाश्वतोयं पुराणो
न हन्यते हन्यमाने शरीरे ॥ २० ॥
वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हंति कम् ॥२१॥
वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ।

म्रियते पश्चात् अयं आत्मा कदाचित् कस्मिन्नपि काले न भूत्वा अभूत्वा भूयः पुनरपि न भविता । कस्मिन् सति क्षीयते । शरीरे शीर्यते तत् शरीरं तस्मिन् शरीरे देहे हन्यमाने सति हन्यते तत् हन्यमानं तस्मिन् हन्यमाने सति । कथंभूतः अयम् । अजः जायतेऽसौ जः न जः अजः जन्ममरणशून्यः । पुनः कथंभूतः अयम् । नित्यः सर्वदा एकरूपः । पुनः कथंभूतः अयम् । शाश्वतः निरंतरः । पुनः कथंभूतः अयम् । पुराणः पुरापि नव एव न तु परिणामतः रूपांतरं प्राप्तः ॥ २० ॥ हे पार्थ ! पृथायाः कुंतेः अपत्यं पुमान् पार्थः तत्संबुद्धौ हे पार्थ हे अर्जुन ! यः पुरुषः एनं आत्मानं वेद जानाति सः पुरुषः कं हंति वा कथं हंति । एवंभूतस्य आत्मनः वधे साधनाभावात् साधनस्य अभावः साधनाभावः तस्मात् । तथा स्वयं प्रयोजको भूत्वा अन्येन पुरुषेण कं घातयति वा कथं घातयति । कथंभूतं एनम् । अविनाशिनं नाशरहितम् । पुनः कथंभूतम् । नित्यं वृद्धिशून्यम् । पुनः कथंभूतम् । अजं जन्ममरणशून्यम् । पुनः कथंभूतम् । अव्ययं न विद्यते व्ययो क्षयः यस्य सः अव्ययः तं क्षयशून्यम् ॥ २१ ॥ यथा नरः जनः जीर्णानि वासांसि वस्त्राणि विहाय

तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥ २२ ॥
नैनं छिंदंति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयंत्यापो न शोषयति मारुतः ॥ २३ ॥
अच्छेद्योयमदाह्योयमक्लेद्यो ऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २४ ॥

त्यक्त्वा अपराणि अन्यानि नवानि नूतनानि गृह्णाति । तथा देही देहः अस्यास्तीति देही देहाभिमानी जीवः जीर्णानि वयसा तपसा वा कृशानि शरीराणि भीष्मादिशरीराणि विहाय त्यक्त्वा नवानि नूतनानि अन्यानि देवादिशरीराणि संयाति सम्यक् गर्भवासादिक्लेशव्यतिरेकेण प्राप्नोति ॥ २२ ॥ शस्त्राणि अतितीक्ष्णानि खड्गादीनि एनं आत्मानं न छिंदंति द्विधा कर्तुं न शक्नुवंति । पावकः अग्निः एनं आत्मानं न दहति भस्मीकर्तुं न शक्नोति । तथा आपः उदकानि एनं आत्मानं न क्लेदयंति आर्द्रीकर्तुं न शक्नुवंति । चेत्यपरं मारुतः वायुः एनं आत्मानं न शोषयति नीरसं कर्तुं न शक्नोति ॥ २३ ॥ अयं आत्मा अवयवशून्यत्वात् अवयवानां करचरणादीनां शून्यत्वं अवयवशून्यत्वं तस्मात् अच्छेद्यः छेदितुं योग्यो न भवतीति अच्छेद्यः अस्ति । चेत्यपरं अयं आत्मा अमूर्तत्वात् अदाह्यः दहितुं अयोग्यः अस्ति । अयं आत्मा करचरणशून्यत्वात् अक्लेद्यः क्लेदितुं द्रवीकर्तुं अयोग्यः अक्लेद्यः अस्ति । किं च अयं आत्मा द्रवत्वाभावात् द्रवत्वस्य अभावः द्रवत्वाभावः तस्मात् अशोष्यः शोषितुं

अव्यक्तोऽयमचिंत्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५ ॥
अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैनं शोचितुमर्हसि ॥ २६ ॥
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥

अयोग्यः अशोष्यः अस्ति । नित्यः । छेदादियोग्यो न भवति ।अतः हेतोः नित्यः अविनाशी सर्वगतः सर्वेषु गतः स्थाणुः स्थिरस्वभावः अचलः रूपांतरापत्तिशून्यः सनातनः अनादिः ॥ २४ ॥ हे पार्थ ! तत्त्वज्ञैः अयं आत्मा अव्यक्तः न व्यक्तो स्पष्टः अव्यक्तः चक्षुरादीनां अस्पष्टः चेत्यपरं अचिंत्यः चिंतितुं योग्यः न भवतीति अचिंत्यः मनसोप्यगोचरः । किं च अविकार्यः कर्मेंद्रियाणामपि अगोचरः उच्यते कथ्यते । तस्मात् कारणात् त्वं एवं एनं आत्मानं विदित्वा ज्ञात्वा अनु अनुलक्षेण शोचितुं नार्हसि न योग्यो भवसि ॥ २५ ॥ अथेति पक्षांतरे । हे महाबाहो! महांतौ शत्रुविदारकौ बाहू हस्तौ यस्य सः महाबाहुः तत्संबुद्धौ । त्वं एनं आत्मानं नित्यजातं नित्यं जातः नित्यजातः तं वा अथवा नित्यं मृतं मन्यसे तथापि एवं सत्यपि त्वं एनं आत्मानं शोचितुं नार्हसि न योग्यो भवसि ॥ २६ ॥ हि यस्मात् कारणात् जातस्य उत्पन्नस्य 'स्वारंभककर्मक्षये स्वारभकं च तत् कर्म च स्वारंभककर्म स्वारंभककर्मणः क्षयः स्वारंभककर्मक्षयः तस्मिन्' मृत्युः ध्रुवः निश्चितः अस्ति । चेत्यपरं मृतस्य देहकृतेन कर्मणा जन्म ध्रुवं निश्चितं अस्ति ।

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत।
अव्यक्तनिधनान्येव तत्र का परिदेवना॥ २८॥

आश्चर्यवत्पश्यति कश्चिदेनम्
आश्चर्यवद्वदति तथैव चान्यः।
आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाप्येनं वेद न चैव कश्चित्॥ २९॥

देही नित्यमवध्योयं देहे सर्वस्य भारत।

तस्मात् कारणात् त्वं विद्वान् अवश्यंभाविनि अर्थे जन्ममरणलक्षणार्थे शोचितुं नार्हसि न योग्यो भवसि। कथंभूते अर्थे। अपरिहार्ये परिहरितुं दूरीकर्तुं योग्यो न भवतीति अपरिहार्यः तस्मिन् ॥ २७॥ हे भारत हे अर्जुन! अव्यक्तमेव प्रधानमेव आदि उत्पत्तिस्थानं येषां तानि अव्यक्तादीनि भूतानि शरीराणि संति। तथा व्यक्तमध्यानि व्यक्तं स्पष्टं मध्यं जन्ममरणस्थितिलक्षणं येषां तानि शरीराणि संति। किं च अव्यक्तनिधनान्येव अव्यक्ते प्रधाने निधनं लयः येषां तानि अव्यक्तनिधनानि भूतानि शरीराणि संति। तत्र भूतेषु का परिदेवना कः शोकनिमित्तो विलापः अस्ति? अपि तु नास्त्येव ॥ २८॥ कश्चित् पुरुषः एनं आत्मानं 'शास्त्राचार्योपदेशाभ्यां शास्त्रं च आचार्योपदेशश्च शास्त्राचार्योपदेशौ ताभ्यां' आश्चर्यवत् पश्यति। तथैव अन्यः अन्यपुरुषः एनं आत्मानं आश्चर्यवत् वदति। चेत्यपरं अन्यः पुरुषः एनं आत्मानं आश्चर्यवत् शृणोति। कश्चित् विपरीतभावनाभिभूतः पुरुषः एनं आत्मानं श्रुत्वापि न वेद ॥२९॥ हे भारत हे अर्जुन! सर्वस्य प्राणिमात्रस्य देहे वध्यमानदेहे अयं

तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३० ॥
स्वधर्ममपि चावेक्ष्य न विकंपितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोन्यत्क्षत्रियस्य न विद्यते ॥३१॥
यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभंते युद्धमीदृशम् ॥ ३२ ॥
अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३३ ॥

देही देहाभिमानी जीवः नित्यं निश्चयेन अवध्यः वधितुं योग्यः वध्यः वध्यो न भवतीति अवध्यः अस्ति । तस्मात् कारणात् त्वं विद्वान् सर्वाणि संपूर्णानि भूतानि जीवान् शोचितुं नार्हसि न योग्यो भवसि ॥ ३० ॥ त्वं स्वधर्मं क्षत्रियधर्मं अवेक्ष्य शास्त्रेण अवलोक्य विकंपितुं 'धर्माधर्मभ्रांत्या धर्मश्च अधर्मश्च धर्माधर्मौ धर्माधर्मयोः भ्रांतिः तया' निवर्त्तितुं नार्हसि न योग्यो भवसि । क्षत्रियस्य धर्म्यात् धर्मरूपात् युद्धात् अन्यत् अन्यं श्रेयः कल्याणं न विद्यते । हि इति निश्चयेन ॥ ३१ ॥ किं च हे पार्थ! सुखिनः सुखं येषामस्ति ते सुखिनः सभाग्याः क्षत्रियाः राजानः ईदृशं भीष्मद्रोणादिवीरप्रतियोगिकं युद्धं लभंते प्राप्नुवंति । यद्वा ये राजानः ईदृशं एवंविधं युद्धं लभंते ते राजानः सुखिनः सभाग्याः स्युः । कथंभूतं युद्धम् । यदृच्छया अप्रार्थितेन उपपन्नं प्राप्तम् । पुनः कथंभूतं युद्धम् । स्वर्गद्वारं स्वर्गस्य द्वारम् । कथंभूतं स्वर्गद्वारम् । अपावृतं निरावरणम् ॥ ३२ ॥ अथेति पक्षांतरे । त्वं वीरः इमं भीष्मद्रोणादिवीरपुरुषप्रतियोगिकं संग्रामं युद्धं न करिष्यसि चेत् ततः तर्हि त्वं स्वधर्मं स्वस्य

अकीर्तिं चापि भूतानि कथयिष्यंति तेऽव्ययाम्।
संभावितस्य चाकीर्त्तिर्मरणादतिरिच्यते ॥ ३४ ॥
भयाद्रणादुपरतं मंस्यंते त्वां महारथाः।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३५ ॥
अवाच्यवादांश्च बहून् वदिष्यंति तवाहिताः।
निंदंतस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥३६॥

धर्मः स्वधर्मः तं क्षात्रधर्मं चेत्यपरं कीर्तिं हित्वा त्यक्त्वा पापं अवाप्स्यसि। कथंभूतं संग्रामम्। धर्म्यं धर्मरूपं प्राप्स्यसि ॥ ३३ ॥ हे अर्जुन! भूतानि देवर्षिमनुष्यादीनि ते तव अकीर्तिं अयं अर्जुनः धर्मात्मा न शूरः न एवंरूपां दुष्कीर्तिं कथयिष्यंति कथाप्रसंगेन वर्णयिष्यंति। कथंभूतां अकीर्तिम्। अव्ययां न विद्यते व्ययो नाशः यस्याः सा अव्यया तां अव्ययां दीर्घकालाम्। किं च संभावितस्य बहुगुणैः युक्तस्य अकीर्तिः अपकीर्तिः मरणात् अतिरिच्यते अधिका भवति ॥ ३४ ॥ किं च महारथाः भीष्मद्रोणदुर्योधनादयः त्वां रणात् संग्रामात् भयात् कर्णादीनां भयेन उपरतं परावृत्तं इति एवं मंस्यंते मन्येरन्। ततस्तदनंतरं अपकीर्तिश्रवणानंतरं त्वं दुःखं अवाप्स्यसि। किं च येषां भीष्मादीनां त्वं प्राक् पूर्वं बहुमतः बहुमान्यः अभूः जातः तेषां भीष्मादीनां त्वं तादृशो भूत्वा लाघवं लघुतां यास्यसि प्राप्स्यसि ॥ ३५ ॥ चेत्यपरं हे अर्जुन! तव अहिताः न हिताः अहिताः दुर्योधनादयः शत्रवः बहून् अनेकप्रकारान् अवाच्यवादान् वक्तुं योग्याः वाच्याः न वाच्याः अवाच्याः अनिर्वचनीयाः अवाच्याश्च ते वादाः शब्दाश्च अवाच्यवादाः तान् अवाच्यवा-

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौंतेय युद्धाय कृतनिश्चयः ॥ ३७ ॥
सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८ ॥
एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।
बुद्ध्या युक्तो यया पार्थ कर्मबंधं प्रहास्यसि ॥ ३९ ॥

दान् षंढतिलादिरुपशब्दान् वदिष्यंति । कथंभूताः अहिताः । तव सामर्थ्यं स्तुतियोग्यपराक्रमं निंदंतः निंदंति ते निंदंतः ततस्तस्मात् निंदाश्रवणापेक्षया दुःखतरं अतिशयेन दुःखं इति दुःखतरं किं नु ॥ ३६ ॥ हे कौंतेय ! त्वं संग्रामे हतः सन् मृतः सन् स्वर्गं प्राप्स्यसि अथवा युद्धे शत्रून् जित्वा महीं पृथिवीं भोक्ष्यसे तस्मात् उभयपक्षयोरपि लाभात् कृतनिश्चयः सन् कृतः निश्चयो येन सः युद्धाय युद्धं कर्तुं उत्तिष्ठ ॥ ३७ ॥ त्वं सुखदुःखे सुखं च दुःखं च सुखदुःखे समे समाने कृत्वा चेत्यपरं लाभालाभौ लाभश्च अलाभश्च लाभालाभौ समौ समानौ कृत्वा चेत्यपरं जयाजयौ जयः पराजयः च अजयः जयाजयौ समौ कृत्वा युद्धाय युद्धं कर्तुं युज्यस्व युक्तो भव । ततस्तदनंतरं सुखाभिलाषत्यागानंतरं एवं स्वधर्मबुद्ध्या युध्यमानः सन् पापं नावाप्स्यसि न प्राप्स्यसि ॥ ३८ ॥ हे पार्थ हे अर्जुन! मया ते तुभ्यं सांख्ये आत्मतत्त्वे प्रकाशमाने एषा बुद्धिः अभिहिता कथिता । अंतःकरणशुद्धिद्वारा आत्मतत्त्वप्रकाशार्थं योगे कर्मयोगे त्वं इमां बुद्धिं शृणु । यया बुद्ध्या युक्तः सन् परमेश्वरार्पितकर्मयोगेन शुद्धांतःकरणः सन् कर्मबंधं कर्मणः बंधः कर्मबंधः तं

नेहाभिक्रमनाशोस्ति प्रत्यवायो न विद्यते।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४० ॥
व्यवसायात्मिका बुद्धिरेकेह कुरुनंदन।
बहुशाखा ह्यनंताश्च बुद्धयो व्यवसायिनाम् ॥ ४१ ॥
यामिमां पुष्पितां वाचं प्रवदंत्यविपश्चितः।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ४२ ॥

कर्मरूपं बंधं प्रहास्यसि त्यक्ष्यसि ॥ ३९ ॥ इह निष्कामकर्मयोगे अभिक्रमनाशः अभिक्रमस्य प्रारंभस्य नाशः अभिक्रमनाशः निष्फलत्वं नास्ति। प्रत्यवायः वैगुण्यं न विद्यते ईश्वरोद्देशेनेति भावः। किं च अस्य प्रसिद्धस्य धर्मस्य निष्कामकर्मयोगस्य स्वल्पमपि आरंभमात्रमपि महतः अपारात् भयात् संसारभयात् त्रायते भगवत्प्रसादसंपादनेन अनुष्ठातारं रक्षति ॥ ४० ॥ हे कुरुनंदन! इह ईश्वराराधनलक्षणे कर्मयोगे व्यवसायात्मिका 'परमेश्वरभक्त्यैव ध्रुवं तरिष्यामि' इति निश्चयात्मिका एका एकनिष्ठा बुद्धिः भवति। अव्यवसायिनां बहिर्मुखानां कामिनां बुद्धयः कामानां आनंत्यात् अनंताः न विद्यते अंतो यासां ताः अनंताः चेत्यपरं कर्मफलगुणफलादिभेदात् बहुशाखाः बहवः शाखाः यासां ताः। भवंति इति शेषः ॥ ४१ ॥ हे पार्थ! अविपश्चितः ज्ञानशून्याः मूढा इत्यर्थः। यां प्रसिद्धां इमां अध्ययनविध्युपात्तत्वेन अध्ययनविधिना प्राप्तज्ञानेन प्रसिद्धां वाचं स्वर्गादिफलश्रुतिं वदंति। कथंभूताः अविपश्चितः। वेदवादरताः वेदे वादाः अर्थवादाः वेदवादाः वेदवादेषु रताः 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इति रताः। पुनः कथंभूताः। अविपश्चितः अतःपरं अन्यत् ईश्वरतत्त्वं प्राप्यं नास्ति इति

कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥
भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४ ॥

एवंवादिनः वदंति ते वादिनः वादशीलाः । कथंभूतां वाचम् । पुष्पितां पुष्पाणि संजातानि यस्यां सा पुष्पिता तां विषलतावत् आपातरमणीयाम् ॥ ४२ ॥ पुनः कथंभूताः अविपश्चितः । कामात्मानः अत एव स्वर्गपराः कामेषु मनोरथेषु आत्मा चित्तं येषां ते कामात्मानः कामाकुलचित्ताः अतः हेतोः स्वर्गपराः स्वर्ग एव परः पुरुषार्थो येषां ते । कथंभूतां वाचम् । जन्मकर्मफलप्रदां जन्म च कर्माणि च जन्मकर्माणि जन्मकर्मणां फलानि जन्मकर्मफलानि जन्मकर्मफलानि प्रददातीति जन्मकर्मफलप्रदा ताम् । पुनः कथंभूतां वाचम् । भोगैश्वर्यगतिंप्रति भोगः विषयभोगः च ऐश्वर्यं संपत्तिः भोगैश्वर्ये भोगैश्वर्ययोः गतिः प्राप्तिः भोगैश्वर्यगतिः तांप्रति क्रियाविशेषबहुलां क्रियायाः कर्मणः विशेषाः अतिशयाः क्रियाविशेषाः क्रियाविशेषाः बहुलाः यस्यां सा क्रियाविशेषबहुला ताम् ॥ ४३ ॥ तया पुष्पितया वाचा अपहृतचेतसां अपहृतं आकृष्टं चेतो अंतःकरणं येषां ते अपहृतचेतसः तेषां पुंसां इति शेषः । व्यवसायात्मिका 'परमेश्वरभक्त्यैव ध्रुवं तरिष्यामि इति निश्चयात्मिका' बुद्धिः समाधौ समा बुद्धिः धीयते यस्मिन्निति समाधिः तस्मिन् परमेश्वरैकाग्र्ये न विधीयते नोत्पद्यते । कथंभूतानां पुंसाम् । भोगैश्वर्यप्रसक्तानां भोगः विषयः च ऐश्वर्यं संपत्तिः भोगैश्वर्ये भोगैश्वर्ययोः

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वंद्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५ ॥
यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६ ॥
कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।

प्रसक्ताः भोगैश्वर्यप्रसक्ताः तेषाम् ॥ ४४ ॥ हे अर्जुन ! त्रैगुण्यविषयाः त्रैगुण्याः सकामाः विषयाः येषां ते तथोक्ताः वेदाः विषयाणां कर्मफलसंबंधप्रतिपादकाः संति । त्वं तु निस्त्रैगुण्यः निष्कामः भव । तत्रोपायमाह तत्र निष्कामे उपायं अहं वदामि । निर्द्वंद्वः निर्गतानि द्वंद्वानि सुखदुःखशीतोष्णादीनि यस्य सः भव । किं च नित्यसत्त्वस्थः नित्यं च तत् सत्त्वं शुद्धसत्त्वं च नित्यसत्त्वं नित्यसत्त्वे तिष्ठतीति तथोक्तः । किं च निर्योगक्षेमः योगः अप्राप्तस्वीकारः च क्षेम प्राप्तपालनं योगक्षमौ निर्गतौ योगक्षेमौ यस्य सः तथोक्तः । किं च आत्मवान् आत्मा विद्यते यस्य सः आत्मवान् अप्रमत्तः भव ॥ ४५ ॥ हे पार्थ ! उदपाने उदं उदकं पीयते यस्मिन्निति उदपानं तस्मिन् उदपाने वापीकूपतडागादिस्वल्पोदके यावान् स्नानपानादिः अर्थः प्रयोजनं भवति तावान् स्नानपानादिः सर्वः अर्थोपि सर्वतः सर्वस्मिन् संप्लुतोदके संप्लुतं पूर्णं उदकं यस्मिन् सः संप्लुतोदकः तस्मिन् महाह्रदे यथा भवति । एवंप्रकारेण यावान् तत्तत्कर्मफलरूपः अर्थः कार्यं सर्वेषु संपूर्णेषु वेदेषु भवति तावान् सर्वोपि अर्थः कार्यं विजानतः विशेषेण आत्मतत्त्वं जानातीति विजानन् तस्य व्यवसायात्मिकाबुद्धियुक्तस्य ब्राह्मणस्य ब्रह्मनिष्ठस्य भवत्येव भवति इति शेषः ॥ ४६ ॥ हे अर्जुन ! ते तव शुद्धांतःकरणस्य तत्त्वज्ञा-

मा कर्मफलहेतुर्भूर्मा ते संगोऽस्त्वकर्मणि ॥ ४७ ॥
योगस्थः कुरु कर्माणि संगं त्यक्त्वा धनंजय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४८ ॥
दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९ ॥
बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।

नार्थिनः कर्मण्येव अंतःकरणशोधके अधिकारः मया इदं कर्त्तव्यं इति बोधः अस्तु । कदाचन कस्यांचित् अवस्थायां फलेषु कर्मफलेषु बंधहेतुषु अधिकारः कामः मास्तु । त्वं कर्मफलहेतुः कर्मणः फलं कर्मफलं कर्मफले हेतुःकारणं यस्य सः मा भूः । अत एव कर्मफलं बंधकं भविष्यति इति भयात् अकर्मणि कर्माकरणे ते तव संगः निष्ठा मास्तु ॥ ४७ ॥ हे धनंजय! त्वं योगस्थः सन् योगे परमेश्वरैकपरतायां तिष्ठतीति योगस्थः सन् संगं फलाभिलाषं कर्तृत्वाभिनिवेशं त्यक्त्वा कर्माणि कुरु । संगत्यागे संगस्य त्यागः संगत्यागः तस्मिन् उपायं अहं वदामि । किं कृत्वा । सिद्ध्यसिद्ध्योः सिद्धिश्च लाभः असिद्धिश्च अलाभः सिद्ध्यसिद्धी तयोः समो भूत्वा केवलं ईश्वरार्पणेनैव कर्म कुरु । सद्भिः समत्वमेव योगः उच्यते ॥ ४८ ॥ हे धनंजय ! बुद्धियोगात् बुद्ध्या व्यवसायात्मिकया योगः कर्मयोगः बुद्धियोगः तस्मात् तेन कर्म काम्यं कर्म दूरेण अवरं अत्यंतं अपकृष्टम् । हि यस्मात् त्वं बुद्धौ ज्ञाने शरणं आश्रयं कर्मयोगं अन्विच्छ अनुतिष्ठ । यद्वा बुद्धौ शरणं त्रातारं ईश्वरं अन्विच्छ आश्रय । कृपणाः दीनाः नराः फलहेतवः फलेषु हेतुर्येषां ते फलहेतवः सकामाः संति ॥ ४९ ॥ हे पार्थ ! बुद्धियुक्तः बु-

तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५० ॥

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबंधविनिर्मुक्ताः पदं गच्छंत्यनामयम् ॥ ५१ ॥

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गंतासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥

द्ध्या युक्तः बुद्धियुक्तः योगयुक्तः इह जन्मनि उभे द्वे सुकृतदुष्कृते सुकृतं स्वर्गादिप्रापकं च दुष्कृतं निरयप्रापकं सुकृतदुष्कृते जहाति परमेश्वरप्रसादेन त्यजति । तस्मात् त्वं योगाय समत्वबुद्धियोगाय युज्यस्व घटस्व युक्तो भव। योगः समत्वबुद्धियोगः कर्मसु कौशलं कुशलस्य कल्याणस्य भावः कौशलं बंधकानां ईश्वराराधनेन मोक्षपर्यवसायित्वम् ॥५०॥ कर्मेति। मनीषिणः मनसः अंतःकरणस्य ईषिणः नियामकाः ज्ञानिनः कर्मजं कर्मणः जातं फलं काम्यकर्मफलं त्यक्त्वा अनामयं सर्वोपद्रवरहितं पदं विष्णोः पदं मोक्षाख्यं गच्छंति । हि निश्चयेन । कथंभूताः मनीषिणः । बुद्धियुक्ताः बुद्ध्या निश्चयात्मिकया युक्ताः। पुनः कथंभूताः मनीषिणः। जन्मबंधविनिर्मुक्ताः जन्मरूपश्चासौ बंधश्च जन्मबंधः जन्मबंधेन विनिर्मुक्ताः ॥ ५१ ॥ यदेति । हे पार्थ! यदा परमेश्वराराधने क्रियमाणे सति तत्प्रसादेन ते तव बुद्धिः निश्चयात्मिका मोहकलिलं मोह एव देहादिषु आत्मबुद्धिरेव कलिलं गहनं मोहकलिलं देहाभिमानलक्षणं मोहमयं गहनं दुर्गं व्यतितरिष्यति विशेषेण तरिष्यति तदा तस्मिन् काले त्वं श्रुतस्य कर्मफलस्य अर्थस्य निर्वेदं वैराग्यं गंतासि प्राप्स्यसि । कथंभूतस्य श्रुतस्य । श्रोतव्यस्य श्रोतुं योग्यं

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५३ ॥

अर्जुन उवाच ।

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ५४ ॥

श्रीभगवानुवाच ।

प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।

श्रोतव्यं तस्य ॥ ५२ ॥ श्रुतीति । यदा काले ते तव बुद्धिः निश्चयात्मिका समाधौ चित्तं समाधीयते यस्मिन्निति समाधिः तस्मिन् समाधौ परमेश्वरे निश्चला विषयांतरैः अनाकृष्टा अत एव अचला न चला अचला अभ्यासपटुत्वेन ईश्वरे स्थिरा सती स्थास्यति तदा काले त्वं योगं योगफलं तत्त्वज्ञानं अवाप्स्यसि प्राप्स्यसि । कथंभूता बुद्धिः । श्रुतिविप्रतिपन्ना श्रुतिभिः नानालौकिकवैदिकार्थश्रवणैः विप्रतिपन्ना इतः पूर्वं विक्षिप्ता ॥ ५३ ॥ स्थितप्रज्ञस्येति । हे केशव ! स्वाभाविके समाधौ स्थितप्रज्ञस्य स्थिता निश्चला प्रज्ञा अहं ब्रह्मास्मीति बुद्धिः यस्य सः स्थितप्रज्ञः तस्य भाषा भाष्यते अनया सा भाषा लक्षणं का अस्ति ?। तस्य स्थितप्रज्ञस्य समाधिः कः अस्ति ? । स्थितधीः स्थिता निश्चला धीर्यस्य सः किं प्रभाषेत किं भाषणं कुर्यात् ? । किमासीत किं आसनं कुर्यात् ? । किं व्रजेत किं व्रजनं कुर्यात् ? । केन लक्षणेन स्थितप्रज्ञः उच्यते ? ॥ ५४ ॥ हे पार्थ ! यः कश्चित् पुरुषः यदा काले सर्वान् समग्रान् कामान् मनोरथान् प्रजहाति प्रकर्षेण त्यजति । कथंभूतान् कामान् । मनोगतान्

आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५ ॥
दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ५६ ॥
यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।
नाभिनंदति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७ ॥

मनसि अंतःकरणे गताः प्राप्ताः मनोगताः तान् । किं च आत्मन्येव स्वस्मिन्नेव परमानंदरूपे आत्मना स्वयमेव तुष्टः सन् आत्मारामः सन् यदा क्षुद्रविषयाभिलाषान् त्यजति तदा तेन लक्षणेन मुनिः स्थितप्रज्ञः उच्यते ॥ ५५ ॥ दुःखेष्विति । किं च सः मुनिः मननशीलः मुनिः स्थितधीः स्थिता ब्रह्मास्मीति निश्चयात्मिका धीः बुद्धिः यस्य सः स्थितधीः स्थितप्रज्ञः उच्यते । स कः । यः दुःखेष्वपि अनेकदुःखेष्वपि अनुद्विग्नमनाः अनुद्विग्नं अक्षुभितं मनो यस्य सः । पुनः स कः । सुखेषु अनेकसुखेषु विगतस्पृहः विगता गता स्पृहा इच्छा यस्य सः । पुनः स कः । वीतरागभयक्रोधः रागः प्रीतिश्च भयं च क्रोधः रागभयक्रोधाः वीताः निर्गताः रागभयक्रोधाः यस्मात् सः वीतरागभयक्रोधः ॥ ५६ ॥ कथं प्रभाषते अस्योत्तरम् । यः मुनिः सर्वत्र पुत्रमित्रादिषु अनभिस्नेहः सन् स्नेहशून्यः सन् तत्तत्प्रारब्धकर्मपरिप्रापितं शुभाशुभं शुभं च अशुभं च शुभाशुभे शुभाशुभयोः समहारः शुभाशुभं शुभं अनुकूलं प्राप्य नाभिनंदति न प्रशंसति अशुभं प्रतिकूलं प्राप्य न द्वेष्टि न निंदति । तस्य मुनेः प्रज्ञा परमात्मतत्त्वविषया प्रतिष्ठिता फलपर्यवसायिनी अस्ति सः स्थितप्रज्ञः ॥ ५७ ॥

यदा संहरते चायं कूर्मोंगानीव सर्वशः ।
इंद्रियाणींद्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८ ॥
विषया विनिवर्तंते निराहारस्य देहिनः ।
रसवर्जं रसोप्यस्य परं दृष्ट्वा निवर्त्तते ॥ ५९ ॥
यततो ह्यपि कौंतेय पुरुषस्य विपश्चितः ।
इंद्रियाणि प्रमाथीनि हरंति प्रसभं मनः ॥ ६० ॥
तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।

यदेति । किं च यदा यस्मिन् काले अयं योगी इंद्रियार्थेभ्यः इंद्रियाणां अर्थाः इंद्रियार्थाः तेभ्यः शब्दादिविषयेभ्यः सकाशात् इंद्रियाणि संहरते संहरति । यथा कूर्मः अंगानि करचरणादीनि सर्वशः स्वभावेनैव आकर्षति तद्वत् तस्य मुनेः प्रज्ञा बुद्धिः प्रतिष्ठिता प्रतिष्ठा संजाता यस्याः सा तथोक्ता अस्ति ॥ ५८ ॥ विषया इति । निराहारस्य इंद्रियैः विषयाणां आहरणं ग्रहणं आहारः निर्गतः आहारो यस्य सः निराहारः तस्य निराहारस्य इंद्रियैः विषयग्रहणं अकुर्वतः देहिनः देहो ऽस्यास्तीति देही तस्य देहाभिमानिनः अज्ञस्य विषयाः शब्दादिविषयाः विनिवर्तंते परावृत्ताः भवंति । किं तु रसवर्जं विषयतृष्णा न निवर्त्तते । किं तु अस्य स्थितप्रज्ञस्य रसोपि विषयाभिलाषोपि परं परमात्मानं दृष्ट्वा निवर्त्तते नश्यति ॥ ५९ ॥ हे कौंतेय! विपश्चितः विवेकिनः पुरुषस्य इंद्रियाणि मनः प्रसभं बलात्कारेण हरंति । कथंभूतानि इंद्रियाणि । प्रमाथीनि प्रकर्षेण मथनशीलानि प्रमाथीनि । कथंभूतस्य पुरुषस्य । यततः यततीति यतन् तस्य मोक्षे प्रयतमानस्य ॥ ६० ॥ युक्तः योगी

वशे हि यस्येंद्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥
ध्यायतो विषयान् पुंसः संगस्तेषूपजायते ।
संगात्संजायते कामः कामात्क्रोधोऽभिजायते ॥ ६२ ॥
क्रोधाद्भवति संमोहः संमोहात् स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ ६३ ॥
रागद्वेषवियुक्तैस्तु विषयानिंद्रियैश्चरन् ।

सर्वाणि ज्ञानकर्मसाधनभूतानि तानि इंद्रियाणि संयम्य मत्परः सन् अहमेव सर्वात्मा वासुदेव एव परो श्रेष्ठः यस्य सः मत्परः आसीत। यस्य मुनेः वशे वशवर्तीनि इंद्रियाणि संति। हि इति निश्चयेन। तस्य मुनेः प्रज्ञा बुद्धिः प्रतिष्ठिता अस्ति ॥ ६१ ॥ ध्यायत इति। गुणबुद्ध्या विषयान् ध्यायतः ध्यायतीति ध्यायन् तस्य पुंसः पुरुषस्य तेषु विषयेषु संगः आसक्तिः उपजायते भवति। संगात् आसक्त्या कामः विषयेषु अधिकतृष्णा संजायते उत्पन्ना भवति। कामात् विषयाणां अलाभात् क्रोधः ज्वलनात्मा अभिजायते भवति ॥ ६२ ॥ क्रोधादिति। किं च क्रोधात् संमोहः कार्याकार्यविवेकाभावः भवति। संमोहात् कार्याकार्यविवेकाभावात् स्मृतिविभ्रमः स्मृतेः शास्त्राचार्योपदिष्टार्थानुसंधानस्य विभ्रमः विभ्रंशः भवति। स्मृतिभ्रंशात् शास्त्राचार्योपदिष्टार्थानुसंधाननाशात् बुद्धिनाशः बुद्धेः चेतनायाः नाशः भवति। बुद्धिनाशात्चेतनाभ्रंशात् प्रणश्यति मृततुल्यो भवति ॥ ६३ ॥ रागेति। स्थितप्रज्ञत्वं कथं भवति। मुनिः रागद्वेषवियुक्तैः रागः प्रीतिः च द्वेषः दर्पः रागद्वेषौ रागद्वेषाभ्यां वियुक्तानि रहितानि रागद्वेषवियुक्तानि तैः इंद्रियैः विषयान् श्रोत्रा-

आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४ ॥
प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६५ ॥
नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयतः शांतिरशांतस्य कुतः सुखम् ॥ ६६ ॥
इंद्रियाणां हि चरतां यन्मनोनु विधीयते ।

दिभिः शब्दादीन् चरन् सन् चरतीति चरन् उपभुंजानः सन् प्रसादं शांतिं अधिगच्छति प्राप्नोति । कथंभूतः मुनिः । विधेयात्मा विधेयः वशवर्त्ती आत्मा मनो यस्य सः । कथंभूतैः इंद्रियैः । आत्मवश्यैः आत्मनः मनसः वश्यानि आत्मवश्यानि तैः ॥ ६४ ॥ प्रसादेति । प्रसादे सति स्वस्थांतःकरणे सति अस्य मुनेः सर्वदुःखानां सर्वाणि च तानि दुःखानि च सर्वदुःखानि तेषां सर्वदुःखानां अज्ञानविलसितानां हानिः नाशः उपजायते भवति । हि यस्मात् कारणात् प्रसन्नचेतसः प्रसन्नं चेतो यस्य सः प्रसन्नचेताः तस्य मुनेः आशु शीघ्रं बुद्धिः ब्रह्मात्मैक्याकारा परि समंताद्भागे अवतिष्ठते स्थिरा भवति ॥ ६५ ॥ नास्तीति । अयुक्तस्य अवशीकृतेन्द्रियस्य बुद्धिः शास्त्राचार्योपदेशाभ्यां आत्मविषया बुद्धिः नास्ति नोत्पद्यते । चेत्यपरं अयुक्तस्य अजितेन्द्रियस्य भावना ध्यानं नास्ति नोत्पद्यते । किं च अभावयतः आत्मध्यानं अकुर्वतः शांतिः आत्मनि चित्तोपरतिः नास्ति । अशांतस्य आत्मपराङ्मुखस्य सुखं मोक्षानंदः कुतः? ॥ ६६ ॥ इंद्रियाणामिति । चरतां चरंति स्वैरं विषयेषु चरंति तानि चरंति तेषां चरतां अवशीकृतानां इंद्रियाणां मध्ये यत् एकं इंद्रियं मनः

तदस्य हरति प्रज्ञां वायुर्नावमिवांभसि ॥ ६७ ॥
तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इंद्रियाणींद्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥
या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥६९॥

अंतःकरणं अनुलक्षीकृत्य विधीयते प्रेर्यते तत् मनोयुक्तं एकं इंद्रियं अस्य साधकस्य प्रज्ञां आत्मविषयां बुद्धिं हरति एकमपि इंद्रियं प्रज्ञां हरति किमुत सर्वाणि हरंति इति वक्तव्यम्? । अत्र दृष्टांतः । यथा प्रमत्तस्य कर्णधारस्य नावं नौकां वायुः अंभसि समुद्रे सर्वतः परिभ्रमयति तद्वत् ॥ ६७ ॥ तस्मादिति । हे महाबाहो! हे सर्वशत्रुनिवारण! तस्मात् कारणात् यस्य साधकस्य सर्वशः सर्वाणि इंद्रियाणि इंद्रियार्थेभ्यः इंद्रियाणां अर्थाः इंद्रियार्थाः तेभ्यः शब्दादिविषयेभ्यः निगृहीतानि वशवर्तीनि संति तस्य सिद्धस्य साधकस्य च प्रज्ञा बुद्धिः प्रतिष्ठिता अस्ति ॥६८॥ या निशेति । या वेदांतवाक्यजनितसाक्षात्काररूपा अहं ब्रह्मास्मीति बुद्धिः सर्वभूतानां सर्वाणि च तानि भूतानि च सर्वभूतानि तेषां अज्ञानिनां निशा निशेव निशा अस्ति तस्यां ब्रह्मविद्यालक्षणायां सर्वभूतनिशायां संयमी जितेंद्रियः स्थितप्रज्ञः जागर्ति अज्ञाननिद्रायाः प्रबुद्धः सन् सावधानो वर्त्तते यस्यां विषयनिष्ठायां भूतानि जाग्रति प्रतिबुद्ध्यंते सा विषयनिष्ठा पश्यतः पश्यतीति पश्यन् तस्य आत्मतत्त्वं पश्यतः मुनेः स्थितप्रज्ञस्य निशा रात्रिः अस्ति तस्यां दर्शनादिव्यापारः तस्य नास्ति ॥ ६९ ॥

आपूर्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशंति यद्वत् ।
तद्वत्कामा यं प्रविशंति सर्वे
स शांतिमाप्नोति न कामकामी ॥ ७० ॥

विहाय कामान् यः सर्वान् पुमांश्चरति निस्पृहः ।
निर्ममो निरहंकारः स शांतिमधिगच्छति ॥ ७१ ॥

आपूर्यमाणमिति । यद्वत् यथाप्रकारेण आपः वृष्ट्यादिप्रभवाणि उदकानि आपूर्यमाणं सर्वाभिः नदीभिः आपूर्यमाणं समुद्रं प्रविशंति । कथंभूतं समुद्रम् । अचलप्रतिष्ठं अचला प्रतिष्ठा यस्य सः अचलप्रतिष्ठः तं अनतिक्रांतमर्यादं तद्वत् तथाप्रकारेण सर्वे संपूर्णाः कामाः विषयाः यं अंतर्दृष्टिं मुनिं भोगैः अविक्रियमाणमेव प्रारब्धकर्मभिः आक्षिप्ताः संतः प्रविशंति सः मुनिः शांतिं कैवल्यं प्राप्नोति । कामकामी तु कामेषु विषयेषु कामो अभिलाषः यस्यास्तीति कामकामी विषयाभिलाषी शांतिं कैवल्यं न प्राप्नोति । कथंभूतं मुनिम् । अचलप्रतिष्ठं अचला प्रतिष्ठा स्थितिः यस्य सः अचलप्रतिष्ठः तम् ॥ ७० ॥ विहायेति । यः प्रारब्धभोगी पुमान् पुरुषः सर्वान् प्राप्तान् कामान् विषयान् विहाय त्यक्त्वा अप्राप्तेषु निस्पृहः सन् निर्गता स्पृहा इच्छा यस्य सः निस्पृहः सन् चरति प्रारब्धवशेन भोगान् भुंक्ते सः पुमान् शांतिं कैवल्यं अधिगच्छति प्राप्नोति । कथंभूतः पुमान् । निरहंकारः निर्गतः गतः अहंकारो यस्य सः अहंकारशून्यः अत एव निर्ममः कौपीनाच्छादनादौ ममताशून्यः ॥७१॥

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वा स्यामंतकालेपि ब्रह्मनिर्वाणमृच्छति ॥ ७२ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु० सांख्ययोगो नाम द्वितीयोऽध्यायः ॥ २ ॥

---

एषेति । हे पार्थ! एषा स्थितप्रज्ञलक्षणनिमित्तेन कथिता ब्राह्मी ब्रह्मविषया स्थितिः निष्ठा अस्ति । परमेश्वराराधनेन विशुद्धांतःकरणः पुमान् एनां स्थितिं प्राप्य न विमुह्यति पुनः संसारमोहं न प्राप्नोति । पुमान् अस्यां स्थितौ अंतकालेपि अंत्ये वयस्यपि— 'अयं मधुसूदनाभिप्रायः'—स्थित्वा ब्रह्मनिर्वाणं ब्रह्मणि निर्वाणं लयं ब्रह्मनिर्वाणं मोक्षं ऋच्छति प्राप्नोति । यः पुमान् बाल्यमारभ्य अस्यां स्थितौ स्थित्वा ब्रह्मनिर्वाणं प्राप्नोति इति किं पुनर्वक्तव्यम् ॥ ७२ ॥

इति श्रीबालबोधिन्यां श्रीमद्भगवद्गीताटीकायां

द्वितीयोऽध्यायः ॥ २ ॥

अर्जुन उवाच ।

ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥
व्यामिश्रेणैव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥

श्रीभगवानुवाच ।

लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ।

श्रीः । हे जनार्दन हे केशव ! कर्मणः निष्कामात् कर्मणः सकाशात् बुद्धिः आत्मविषया बुद्धिः ज्यायसी प्रशस्ततरा ते तव मता चेत् मान्या चेत् तत् तर्हि त्वं मां किं किमर्थं 'युद्ध्यस्व' 'उत्तिष्ठ' इति वारंवारं वदन् सन् घोरे हिंसात्मके कर्मणि नियोजयसि प्रवर्त्तयसि ॥ १ ॥ व्यामिश्रेणेति । क्वचित् कर्मप्रशंसा क्वचित् ज्ञानप्रशंसा इति व्यामिश्रेणैव संशयोत्पादकेनैव वाक्येन वचनेन त्वं मे मंदबुद्धेः बुद्धिं मोहयसीव भ्रांत्या योजयसीव । तत् तयोः ज्ञानकर्मणोः मध्ये एकं निश्चयात्मकं निश्चित्य वद । अहं येन निश्चयात्मकवाक्येन श्रेयः मोक्षं आप्नुयां प्राप्स्यामि ॥ २ ॥ लोकेस्मिन्निति । हे अनघ ! न विद्यते अघं पापं यस्य सः तत्संबुद्धौ हे अनघ हे अर्जुन! अस्मिन् शुद्धाशुद्धांतःकरणतया द्विविधे लोके अधिकारिजने द्विविधा द्वे विधे प्रकारौ यस्याः सा निष्ठा मोक्षपरता पुरा पूर्वाध्याये मया सर्वज्ञेन प्रोक्ता स्पष्टमेव उक्ता । प्रकारद्वयमाह । सांख्यानां

ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥
न कर्मणामनारंभान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥
नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥
कर्मेंद्रियाणि संयम्य य आस्ते मनसा स्मरन् ।

शुद्धांतःकरणानां ज्ञानभूमिकामारूढानां ज्ञानयोगेन ज्ञानमेव योगः ज्ञानयोगः तेन ध्यानादिना निष्ठा ब्रह्मपरता उक्ता। योगिनां कर्मयोगाधिकारिणां कर्मयोगेन कर्मैव योगः कर्मयोगः तेन निष्ठा उक्ता॥ ३॥ पुरुषः ज्ञानायोग्यः बहिर्मुखः कर्मणां वेदोक्तानां अनारंभात् अननुष्ठानात् नैष्कर्म्यं सर्वकर्मशून्यं ज्ञानं न अश्नुते न प्राप्नोति। किंच चित्तशुद्धिं विना संन्यसनात् ज्ञानशून्यात् कृतसंन्यासात् सिद्धिं मोक्षं न समधिगच्छति न प्राप्नोति॥ ४॥ नहीति। कश्चिदपि ज्ञानी वा अज्ञो वा जातु कस्यां चित् अवस्थायां क्षणमपि क्षणमात्रमपि अकर्मकृत् सन् कर्माणि करोतीति कर्मकृत् न कर्मकृत् अकर्मकृत् कर्माणि अकुर्वाणः सन् न तिष्ठति। हि यस्मात् सर्वः चित्तशुद्धिरहितः सर्वजनः अवशः सन् अस्वतंत्रः सन् प्रकृतिजैः प्रकृत्याः जाताः कृतिप्रजाः तैः स्वभावप्रभवैः रागद्वेषादिभिः गुणैः सत्त्वरजस्तमोभिः कर्म लौकिकं वा वैदिकं कार्यते कर्मणि प्रवर्त्तते ॥ ५ ॥ कर्मेंद्रियाणीति। यः पुरुषः विमूढात्मा विशेषेण मूढः आत्मा बुद्धिः यस्य सः रागद्वेषादिदूषितांतःकरणः सन् कर्मेंद्रियाणि वाक्पाण्यादीनि संयम्य निगृह्य इंद्रियार्थान् इंद्रियाणां अर्थाः इंद्रियार्थाः तान् शब्दादिविषयान् मनसा अंतःकरणेन भगवद्ध्यान-

इंद्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥ ६ ॥
यस्त्विंद्रियाणि मनसा नियम्यारभतेऽर्जुन ।
कर्मेंद्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥
नियतं कुरु कर्म त्वं कर्मज्यायो ह्यकर्मणः ।
शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः॥ ८ ॥
यज्ञार्थात्कर्मणोऽन्यत्र लोकोयं कर्मबंधनः ।

मिषेण स्मरन् सन् आस्ते सः पुरुषः मिथ्याचारः दांभिकः उच्यते ॥ ६ ॥ यस्त्विति । हे अर्जुन ! तु शब्दात् शुद्धांतःकरणः गृह्यते । यःपुमान् इंद्रियाणि श्रोत्रादीनि ज्ञानेंद्रियाणि मनसा विवेकयुक्तेनांतःकरणेन नियम्य ईश्वरप्रवणानि कृत्वा कर्मेन्द्रियैः वाक्पाण्यादिभिः कर्मयोगं विहितं कर्म असक्तः सन् फलाभिलाषशून्यः सन् आरभते आरंभं करोति सः पुरुषः विशिष्यते मिथ्याचारात् विशिष्टो भवति ॥ ७ ॥ नियतमिति । हे पार्थ ! त्वं नियतं नित्यं कर्म संध्योपासनादि कुरु । हि यस्मात् अकर्मणः कर्माकरणात् सकाशात् कर्मज्यायः कर्मणा श्रेष्ठः कर्मज्यायः अधिकतरः भविष्यसि । अन्यथा उक्तवैपरीत्ये सति अकर्मणः युद्धादिकर्मरहितस्य ते तव शरीरयात्रापि शरीरस्य यात्रा शरीरनिर्वाहोपि न प्रसिद्ध्येत् न भवेत् ॥८॥ यज्ञार्थादिति । हे कौंतेय ! यज्ञार्थात् यज्ञः विष्णुः स एव अर्थो आराधनं यस्मिन् तत् यज्ञार्थं तस्मात् कर्मणः सकाशात् अन्यत्र ईश्वरार्पणं विना अयं लोकः कर्माधिकारी कर्मबंधनः कर्मणा बंधनं यस्य सः भवति कर्मभिः बद्धो भवति । त्वं मुक्तसंगः सन् मुक्तः त्यक्तः संगो कर्मफलसंगः येन सः मुक्तसंगः निष्कामः सन्

तदर्थं कर्म कौंतेय मुक्तसंगः समाचर ॥ ९ ॥
सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥
देवान् भावयतानेन ते देवा भावयंतु वः ।
परस्परं भावयंतः श्रेयः परमवाप्स्यथ ॥ ११ ॥
इष्टान्भोगान्हि वो देवा दास्यंते यज्ञभाविताः ।

तदर्थं विष्णुप्रीत्यर्थं कर्म समाचर सम्यक् आचर ॥९॥ हे कौंतेय! पुरा सर्गादौ प्रजापतिः प्रजानां पतिः प्रजापतिः ब्रह्मा सहयज्ञाः यज्ञेन सह वर्त्तंत इति सहयज्ञाः प्रजाः ब्राह्मणाद्याः सृष्ट्वा निर्मयित्वा इदं वक्ष्यमाणं उवाच उक्तवान् । किं उवाच। हे प्रजाः! यूयं अनेन यज्ञेन स्वाश्रमोचितधर्मेण प्रसविष्यध्वं उत्तरोत्तरां अभिवृद्धिं लभध्वम् । एषः यज्ञः वः युष्माकं इष्टकामधुक् इष्टान् कामान् मनोरथान् दोग्धीति अभीष्टफलप्रदः अस्तु ॥ १० ॥ यूयं अनेन यज्ञेन देवान् इंद्रादीन् भावयत हविर्भागैः संवर्द्धयत। ते देवाः वः युष्मान् भावयंतु वृष्टिद्वारा अन्नादिभिः संवर्द्धयंतु । देवाः चेत्यपरं यूयं परस्परं परं च परं च परस्परं भावयंतः संतः भावयंति ते भावयंतः अन्योन्यं संवर्धयंतः संतः परस्परं श्रेयः इष्टं अर्थं अवाप्स्यथ प्राप्स्यथ ॥ ११ ॥ इष्टानिति। देवाः इंद्रादयः यज्ञभाविताः संतः यज्ञैः भाविताः यज्ञभाविताः तोषिताः संतः वः युष्मभ्यं वृष्ट्यादिद्वारेण भोगान् पश्वन्नहिरण्यादीन् दास्यंते। हि यस्मात् यः पुरुषः देवैः दत्तान् अन्नादिभोगान् येभ्यः देवेभ्यः पंचयज्ञादिभिः

तैर्दत्तानप्रदायैभ्यो यो भुंक्ते स्तेन एव सः ॥१२॥
यज्ञशिष्टाशिनः संतो मुच्यंते सर्वकिल्बिषैः ।
भुंजते ते त्वघं पापा ये पचंत्यात्मकारणात् ॥ १३ ॥
अन्नाद्भवंति भूतानि पर्जन्यादन्नसंभवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥
कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।

अप्रदाय अदत्वा यज्ञेषु देवोद्देशेन आहुतीः असंपाद्य भुंक्ते देहेंद्रियाणि तर्पयति सः पुरुषः स्तेन एव तस्कर एव ज्ञेयः ॥ १२ ॥ यज्ञशिष्टेति । यज्ञशिष्टाशिनः यज्ञशिष्टं अश्नंति ते यज्ञशिष्टाशिनः वैश्वदेवादियज्ञावशिष्टभक्षिणः संतः शिष्टाः सर्वकिल्बिषैः सर्वाणि च तानि किल्बिषाणि पंचसूनाजनितपातकानि च सर्वकिल्बिषाणि तैः मुच्यंते मुक्ताः भवंति । ये पुरुषाः आत्मकारणात् आत्मनः कारणं आत्मकारणं तस्मात् पचंति स्वभोजनार्थमेव अन्नं पचंति न तु वैश्वदेवाद्यर्थं ते तु पुरुषाः पापाः संतः पापरूपिणः संतः अघं पंचसूनाजनितपापं भुंजते भक्षणं कुर्वंति । 'कंडणी पेषणी चुल्ली उदकुंभी च मार्जनी । पंचसूना गृहस्थस्य ताभिः स्वर्गं न विंदति' इति ॥ १३ ॥ अन्नादिति । अन्नात् शुक्रशोणितरूपेण परिपाकात् भूतानि जीवाः भवंति उत्पद्यंते । पर्जन्यात् वृष्टेः अन्नसंभवः अन्नस्य संभवः उत्पत्तिः भवति । यज्ञात् वैश्वदेवाग्निहोत्रात् पर्जन्यः वृष्टिः भवति । यज्ञः वैश्वदेवाग्निहोत्रं कर्मसमुद्भवः कर्मणा यजमानादिव्यापारेण समुद्भवतीति कर्मसमुद्भवः अस्ति ॥ १४ ॥ कर्म ब्रह्मोद्भवमिति । हे पार्थ ! त्वं कर्म यजमानादिव्यापाररूपं ब्रह्मोद्भवं ब्रह्मणः वेदात् उ-

तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञेप्रतिष्ठितम् ॥ १५ ॥
एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः।
अघायुरिंद्रियारामो मोघं पार्थ स जीवति ॥ १६ ॥
यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ १७ ॥

द्भवति उत्पन्नं भवति इति ब्रह्मोद्भवं विद्धि जानीहि। ब्रह्म वेदाख्यं ब्रह्म अक्षरसमुद्भवं अक्षरात् परब्रह्मणः समुद्भवति तत् तथोक्तं विद्धि। तस्मात् कारणात् सर्वगतं सर्वेषु गतं प्राप्तं सर्वगतं अक्षरं ब्रह्म नित्यं सार्वकालं यज्ञेप्रतिष्ठितं यज्ञेन उपायभूतेन प्राप्यत इति यज्ञेप्रतिष्ठितं उच्यते। अतः हेतोः यज्ञादिकर्म कर्त्तव्यम् ॥ १५ ॥ एवं प्रवर्त्तितमिति। हे पार्थ हे पृथापुत्र! आदौ परमेश्वरात् वेदाविर्भावः वेदात् कर्मानुष्ठानं कर्मानुष्ठानात् यज्ञः यज्ञात् पर्जन्यः पर्जन्यात् अन्नसंभवः अन्नसंभवात् भूतानि भूतेभ्यः पुनः तथैव भूतानां कर्मप्रवृत्तिः एवंप्रकारेण परमेश्वरेण प्रवर्तितं निर्मितं चक्रं सर्वजगन्निर्वाहकं नानुवर्त्तयति नानुतिष्ठति यः पुरुषः सः इह लोके मोघं व्यर्थं जीवति। तस्य पुरुषस्य जीवनात् मरणं वरं श्रेष्ठम्। कथंभूतः सः। अघायुः अघं पापरूपं आयुर्यस्य सः अघायुः। पुनः कथंभूतः सः। इंद्रियारामः इंद्रियेषु आरामो विश्रांतिर्यस्य सः इंद्रियारामः ॥ १६ ॥ यस्त्विति। यः प्रसिद्धः मानवः मनुष्यः आत्मरतिः आत्मन्येव रतिः प्रीतिर्यस्य सः आत्मरतिः स्यात्। किंच आत्मतृप्तः आत्मन्येव तृप्तः आत्मतृप्तः स्वानंदानुभवेन संतुष्टः स्यात्। चेत्यपरं आत्मन्येव संतुष्टः भोगापेक्षारहितः स्यात्। तस्य पुरुषस्य कार्यं वैदिकं लौकिकं कर्म

नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥
तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥ १९ ॥
कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसंग्रहमेवापि संपश्यन् कर्त्तुमर्हसि ॥ २० ॥
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरोजनः।

न विद्यते कर्त्तव्यं नास्ति ॥ १७ ॥ नैव तस्येति । कृतेन कर्मणा तस्य आत्मरतेः अर्थः पुण्यं वा प्रयोजनं नैवास्ति । इह लोके अकृतेन अकर्मणा कश्चन कोपि दोषः नास्ति । चेत्यपरं अस्य ब्रह्मनिष्ठस्य कश्चिदपि अर्थव्यपाश्रयः अर्थस्य व्यपाश्रयः आश्रयः सर्वभूतेषु ब्रह्मादिस्थावरांतेषु नास्ति अर्थे मोक्षे आश्रयणीयोऽस्य नास्ति इत्यर्थः ॥ १८ ॥ तस्मादिति । हे अर्जुन ! तस्मात् त्वं असक्तः सन् फलसंगरहितः सन् कार्यं कर्तुं योग्यं कार्यं आवश्यकं सततं निरंतरं कर्म नित्यनैमित्तकं कर्म समाचर यथाशास्त्रं कुरु । हि यस्मात् असक्तः कर्मफलसंगरहितः पुरुषः कर्म वैदिकं कर्म आचरन् सन् आचरतीति आचरन् परं मोक्षं आप्नोति प्राप्नोति ॥ १९ ॥ कर्मणेति । जनकादयः जनकः आदिर्येषां ते जनकादयः जनकधर्मराजप्रभृतयः कर्मणैव शुद्धांतःकरणाः संतः संसिद्धिं श्रवणादिसाध्यां ज्ञाननिष्ठां सिद्धिं आस्थिताः प्राप्ताः। त्वं क्षत्रियोपि लोकसंग्रहं लोकस्य संग्रहः लोकसंग्रहः तं पश्यन् सन् पश्यतीति पश्यन् कर्म कर्तुं अर्हसि योग्यो भवसि । हि इति निश्चयेन ॥ २० ॥ यद्यदेति । श्रेष्ठः श्रेष्ठजनः यत्

स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥ २१ ॥
न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किंचन ।
नानवाप्तमवाप्तव्यं वर्त्त एव च कर्मणि ॥ २२ ॥
यदि ह्यहं न वर्त्तेयं जातु कर्मण्यतंद्रितः ।
मम वर्त्मानुवर्त्तंते मनुष्याः पार्थ सर्वशः ॥ २३ ॥
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।

यत् शुभं अशुभं वा कर्म आचरति करोति तत् तदेव इतरः प्राकृतः जनः लोकः शुभं अशुभं कर्म कुरुते । सः श्रेष्ठजनः यत् लौकिकं वैदिकं च कर्म प्रमाणं कुरुते प्रमाणत्वेन मन्यते तत् कर्म लोकः प्राकृतजनः अनुमन्यते प्रमाणत्वेन मन्यते ॥२१॥ न मे पार्थेति । हे पार्थ ! मे मम परमेश्वरस्य त्रिषु लोकेषु किंचन किमपि कर्त्तव्यं कर्तुं योग्यं कर्त्तव्यं कर्म नास्ति । किं च मम परमेश्वरस्य त्रिषु लोकेषु अनवाप्तं अप्राप्यं नास्ति । चेत्यपरं अवाप्तव्यं आप्तुं प्राप्तुं योग्यं अवाप्तव्यं प्राप्तव्यं नास्ति तथापि एवं सत्यपि अहं कर्मणि वेदप्रतिपादिते कर्मणि वर्त्त एव कर्म करोमि ॥ २२ ॥ यदीति । हे पार्थ ! यदि पुनः अहं अतंद्रितः सन् तंद्रा निद्रा संजाता यस्य सः तंद्रितः तंद्रितः न भवतीति अतंद्रितः अनलसः सन् कर्मणि वेदोक्ते कर्मणि जातु कदाचिदपि न वर्त्तेयं नानुतिष्ठेयम् । मनुष्याः कर्माधिकारिणः मम श्रेष्ठस्य वर्त्म मार्गं सर्वशः सर्वप्रकारैः अनुवर्त्तंते अनुवर्त्तेरन् ॥ २३ ॥ उत्सीदेयुरिति । हे पार्थ ! अहं ईश्वरः कर्म वेदप्रतिपादितं कर्म न कुर्यां चेत् तर्हि इमे सर्वे लोकाः उत्सीदेयुः कर्मलोपेन भ्रश्येयुः। भ्रष्टाः भविष्यंतीति भावः । चेत्यपरं अहं संकरस्य वर्णसंकरस्य

संकरस्य च कर्त्ता स्यामुपहन्यामिमाः प्रजाः॥२४॥
सक्ताः कर्मण्यविद्वांसो यथा कुर्वंति भारत ।
कुर्याद्विद्वांस्तथा सक्तश्चिकीर्षुर्लोकसंग्रहम् ॥२५॥
न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥२६॥
प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥ २७ ॥

कर्ता करोतीति कर्ता स्यां भविष्यामि । अहमेव इमाः प्रजाः उपहन्यां मलिनीकुर्याम् ॥२४॥ सक्ता इति । हे भारत हे अर्जुन! यथा अविद्वांसः अज्ञानिनः कर्मणि वेदप्रतिपादिते कर्माणि सक्ताः संतः कर्तृत्वाभिमानेन अभिनिविष्टाः संतः कर्म कुर्वंति तथा विद्वान् ज्ञानी कर्मणि वेदप्रतिपादिते असक्तः सन् कर्तृत्वाभिमानरहितः सन् कर्म करोति । कथंभूतः विद्वान् । लोकसंग्रहं चिकीर्षुः कर्तुमिच्छतीति चिकीर्षुः ॥२५॥ न बुद्धिभेदेति । विद्वान् ज्ञानवान् अज्ञानां अविवेकिनां अत एव कर्मसंगिनां कर्मसु संगो येषां ते कर्मसंगिनः तेषां कर्मासक्तानां बुद्धिभेदं बुद्धेः भेदः बुद्धिभेदः तं बुद्धिभेदं बुद्धिचालनं न जनयेत् अकर्त्तात्मोपदेशेन न कुर्यात् । किं तु विद्वान् युक्तः सन् स्वस्थः सन् कर्माणि समाचरन् सन् सम्यक् यथाशास्त्रं आचरतीति समाचरन् तेषां अज्ञानिनां श्रद्धां भक्तिं उत्पाद्य जोषयेत् प्रीत्या सेवयेत् ॥ २६ ॥ अज्ञानी पुरुषः कर्माणि लौकिकवैदिकानि कर्माणि सर्वशः सर्वप्रकारेण 'अहं कर्त्ता अहं करोमि' इति एवंप्रकारेण मन्यते । कथंभूतः पुरुषः । अहंकारविमूढात्मा अहंकारेण देहेंद्रियादिषु आत्मा-

तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।
गुणा गुणेषु वर्त्तंत इति मत्वा न सज्जते ॥ २८ ॥
प्रकृतेर्गुणसंमूढाः सज्जंते गुणकर्मसु ।
तानकृत्स्नविदो मंदान्कृत्स्नविन्न विचालयेत् ॥२९॥

ध्यासेन विमूढः आत्मा बुद्धिर्यस्य सः । कथंभूतानि कर्माणि । प्रकृतेः सत्त्वरजस्तमोगुणमय्याः मायायाः गुणैः कार्यकारणरूपैः विकारैः क्रियमाणानि क्रियंते तानि क्रियमाणानि ॥२७॥ तत्त्वविदिति । हे महाबाहो हे विवेकिन् ! तत्त्ववित् तत्त्वं याथात्म्यं वेत्ति जानातीति तत्त्ववित् ज्ञानी गुणकर्मविभागयोः गुणाश्च देहेंद्रियांतःकरणानि कर्माणि च देहेंद्रियव्यापारभूतकर्माणि गुणकर्माणि गुणकर्मणां समाहारः गुणकर्म विभज्यत इति विभागः विभज्यते सर्वेषां विकाराणां प्रकाशकत्वेन पृथक्भवतीति विभागः स्वप्रकाशज्ञानरूपः आत्मा गुणकर्म च विभागश्च गुणकर्मविभागौ तयोः यः तत्त्वं याथात्म्यं वेत्ति जानाति स तु ज्ञानसंपन्नस्तु न सज्जते कर्तृत्वाभिनिवेशं न करोति । किं कृत्वा । गुणाः इंद्रियाणि गुणेषु विषयेषु वर्त्तंते नाहमिति मत्वा ॥ २८ ॥ प्रकृतेरिति । ये पुरुषाः प्रकृतेः पूर्वोक्तायाः मायायाः गुणसंमूढाः संतः गुणैः देहादिविकारैः सम्यक् उत्तमप्रकारेण मूढाः मंदाः गुणसंमूढाः स्वरूपाज्ञानेन देहात्मत्वेन मन्यमानाः संतः गुणकर्मसु गुणानां देहेंद्रियांतःकरणानां कर्माणि इंद्रियव्यापाराः गुणकर्माणि तेषु सज्जंते सक्ताः भवंति । कृत्स्नवित् कृत्स्नं सर्वं वेत्ति जानातीति कृत्स्नवित् सर्वज्ञः तान् कर्मसंगिनः न विचालयेत् कर्मश्रद्धायाः न च्यावयेत् । कथंभूतान् तान् । अकृत्स्नविदः

मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युद्धचस्व विगतज्वरः ॥३०॥
ये मे मतमिदं नित्यमनुतिष्ठंति मानवाः ।
श्रद्धावंतोनसूयंतो मुच्यंते तेपि कर्मभिः ॥ ३१ ॥
ये त्वेतदभ्यसूयंतो नानुतिष्ठंति मे मतम् ।

अकृत्स्नं अनात्मानं विदंति ते अकृत्स्नविदः देहात्मवादिनः । पुनः कथंभूतान् तान् । मंदान् मंदमतीन् ॥ २९ ॥ मयि सर्वाणीति । हे पार्थ ! त्वं सर्वाणि लौकिकानि वैदिकानि च कर्माणि मयि परमेश्वरे वासुदेवे अध्यात्मचेतसा अध्यात्मं अंतर्यामिरूपं च तत् चेतश्च अध्यात्मचेतः तेन अध्यात्मचेतसा अहं कर्त्ता अंतर्याम्यधीनः तस्मै परमेश्वराय 'कर्माणि करोमि' इति अनया बुद्ध्या संन्यस्य समर्प्य निर्ममः निर्गतं मम ममत्वं यस्य सः निर्ममः देहपुत्रभ्रात्रादिषु ममताशून्यः भूत्वा युद्धचस्व विहितानि कर्माणि कुरु। कथंभूतः त्वम् । निराशीः निष्कामः । पुनः कथंभूतः त्वम् । विगतज्वरः विगतः ज्वरो यस्य सः विगतज्वरः दुर्यशोनरकपातादिनिमित्तशोकरहितः ॥ ३० ॥ ये मे मतमिति । ये प्रसिद्धाः मानवाः मनोः अपत्यानि पुमांसः मानवाः मनुष्याः मम परमेश्वरस्य इदं फलाभिसंधिराहित्येन विहितकर्माचरणरूपं मतं अनु अनुलक्षेण तिष्ठंति तेपि पुरुषाः अपि सत्त्वशुद्धिज्ञानद्वारेण कर्मभिः धर्माधर्माख्यैः मुच्यंते मुक्ताः भवंति । कथंभूताः मानवाः । श्रद्धावंतः श्रद्धा विद्यते येषां ते श्रद्धावंतः । पुनः कथंभूताः मानवाः। अनसूयंतः दुःखात्मके कर्मणि प्रवर्त्तयति इति दोषदृष्टिं अकुर्वंतः । कथंभूतं मतम् । नित्यं वेदबोधितत्वेन परंपरागतम् ॥ ३१ ॥ ये त्वेतदिति । ये तु पुरु-

सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥ ३२ ॥
सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि।
प्रकृतिं यांति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥
इंद्रियस्येंद्रियस्यार्थे रागद्वेषौ व्यवस्थितौ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपंथिनौ ॥ ३४ ॥

षास्तु मे मम एतत् धर्मयुक्तं मतं 'ईश्वरार्थं कर्म कर्त्तव्यं' इति अनुशासनं अभ्यसूयंतः संतः द्विषंतः संतः नानुतिष्ठंति। हे पार्थ! त्वं तान् पुरुषान् सर्वज्ञानविमूढान् सर्वस्मिन् ब्रह्मविषये कर्मणि ज्ञानं सर्वज्ञानं सर्वज्ञाने विमूढाः सर्वज्ञानविमूढाः तान् सर्वपुरुषार्थभ्रष्टान् विद्धि जानीहि। कथंभूतान् तान्। नष्टान् दुष्टचित्तान्। पुनः कथंभूतान् तान्। अचेतसः विवेकशून्यान् ॥ ३२ ॥ सदृशमिति। ज्ञानवानपि ज्ञानं विद्यते यस्य सः ज्ञानवान् स्वस्याः स्वकीयायाः प्रकृतेः प्राचीनकर्माधीनस्वभावस्य सदृशं अनुरूपमेव गुणदोषं चेष्टते चेष्टां करोति। भूतानि सर्वेपि प्राणिनः प्रकृतिं प्राचीनकर्मस्वभावं यांति अनुवर्त्तंते। एवं सति निग्रहः इंद्रियनिग्रहः मम वा राज्ञः निग्रहः किं करिष्यति?। पापात् निवारयितुं न शक्नोति। महानरकसाधनं ज्ञात्वापि दुर्वासनाप्राबल्यात् पापेषु प्रवर्त्तते ॥ ३३ ॥ इंद्रियस्येति। इंद्रियस्य इंद्रियस्य सर्वेषां इंद्रियाणां अर्थे शब्दस्पर्शरूपरसगंधविषये इंद्रियार्थे रागद्वेषौ रागश्च द्वेषश्च रागद्वेषौ अनुकूले रागः प्रतिकूले द्वेषः व्यवस्थितौ अवश्यंभाविनौ स्तः। तथापि एवं सत्यपि मुमुक्षुः तयोः रागद्वेषयोः वशं स्वाधीनतां नागच्छेत् न गमनं कुर्यात्। हि यस्मात् अस्य मुमुक्षोः तौ रागद्वेषौ परिपं-

श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५ ॥

अर्जुन उवाच ।

अथ केन प्रयुक्तोयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ३६ ॥

श्रीभगवानुवाच ।

काम एष क्रोध एष रजोगुणसमुद्भवः ।

थिनौ परितः आसमंताद्भागे पंथानं मार्गं आवृत्य तिष्ठतः तौ परिपंथिनौ शत्रू कल्याणमार्गस्य विघ्नकर्त्तारौ स्तः ॥ ३४ ॥ श्रेयानिति । स्वधर्मः स्वस्य धर्मः स्वधर्मः विगुणोपि किंचित् अंगहीनोपि परधर्मात् परेषां अन्येषां धर्मः परधर्मः तस्मात् श्रेयान् प्रशस्तः भवेत् । कथंभूतात् परधर्मात् । स्वनुष्ठितात् सर्वांगसंपूर्णत्वात् स्वधर्मे युद्धादौ प्रवर्त्तमानस्य निधनं मरणं श्रेयः श्रेष्ठं अस्ति । परधर्मः अन्यधर्मः भयावहः भयं नरकं आवहति प्रापयतीति भयावहः अस्ति ॥ ३५ ॥ अथ केनेति । हे वार्ष्णेय ! वृष्णिवंशे अवतीर्णः वार्ष्णेयः तत्संबुद्धौ हे वार्ष्णेय हे कृष्ण ! अथेत्यनंतरं स्वधर्माचरणानंतरं अयं त्वन्मतानुवर्त्ती पुरुषः पापं अनर्थरूपं पापं कर्तुं अनिच्छन्नपि अनिच्छतीति अनिच्छन् बलादिव बलात्कारेणेव नियोजितः सन् नितरां अतिशयेन योजितः प्रेरितः सन् पापं चरति पापाचरणं करोति । कथंभूतः पूरुषः । केन हेतुना प्रयुक्तः प्रेरितः ॥ ३६ ॥ काम एष इति । हे पार्थ ! एषः कामः विषयाभिलाषः एष एव

महाशनो महापाप्मा विद्धयेनमिह वैरिणम् ॥ ३७ ॥
धूमेनाव्रियते वह्निर्यथादर्शो मलेन च ।
यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥
आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौंतेय दुःपूरेणानलेन च ॥ ३९ ॥

काम एव क्रोधः भवति एष एव काम एव केनचित् हेतुना प्रतिहतः सन् कुंठितः सन् क्रोधत्वेन परिणमते परिणामं प्राप्नोति । त्वं एनं कामं इह मोक्षमार्गे वैरिणं शत्रुं विद्धि जानीहि । कथंभूतः कामः । रजोगुणसमुद्भवः रजोगुणात् समुद्भवतीति तथोक्तः । पुनः कथंभूतः कामः । महाशनः महत् अशनं विषयग्रहणं यस्य सः दुःपूरः । पुनः कथंभूतः कामः । महापाप्मा महत् पापं यस्मात् सः अत्युग्रः ॥३७॥ यथा वह्निः प्रकाशात्मकः अग्निः धूमेन सहजेन अप्रकाशात्मकेन आव्रियते आच्छाद्यते चेत्यपरं यथा आदर्शः मलेन आगंतुकेन असहजेन व्रियते आच्छाद्यते यथा च गर्भः उल्बेन गर्भवेष्टनचर्मणा आवृतः व्याप्तः तथा प्रकारत्रयेणापि तेन कामेन इदं ज्ञानं आवृतं आच्छादितम् ॥३८॥ आवृतं ज्ञानमिति । हे कौंतेय हे अस्मत्कुलोत्पन्न ! एतेन कामेन अंतःकरणे ज्ञानं विवेकज्ञानं आवृतं आच्छादितम् । कथंभूतेन कामेन । ज्ञानिनः ज्ञानमस्यास्तीति ज्ञानी तस्य नित्यवैरिणा नित्यं वैरी शत्रुरूपः नित्यवैरी तेन अज्ञपुरुषः विषयभोगकाले कामं मित्रमिव पश्यन् सन् परिणामकाले दुःखे प्राप्ते सति शत्रुं जानाति । ज्ञानी तु भोगकालेपि शत्रुरूपं जानाति । अनेन कामेन अहं अनर्थे प्रवेशितः । अतः हेतोः विवेकी दुःखी भवति । पुनः क-

इंद्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४० ॥
तस्मात्त्वमिंद्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥ ४१ ॥
इंद्रियाणि पराण्याहुरिंद्रियेभ्यः परं मनः ।

थंभूतेन एतेन । कामरूपेण काम एव रूपं इच्छातृष्णादि काम एव रूपं स्वरूपं यस्य सः कामरूपः तेन । पुनः कथंभूतेन एतेन । दुःपूरेण दुःखेन कष्टेन पूरितुं पूर्णं कर्तुं अशक्यः दुःपूरः तेन । पुनः कथंभूतेन एतेन । अनलेन न विद्यते अलं पर्याप्तिः यस्य सः अनलः तेन अनलेन निरंतरसंतापरूपेण ॥ ३९ ॥ इंद्रियाणीति । इंद्रियाणि शब्दस्पर्शरूपरसगंधग्राहकाणि चेत्यपरं मनः संकल्पविकल्पात्मकं च बुद्धिः अध्यवसायात्मिका अस्य कामस्य अधिष्ठानं आश्रयः उच्यते कथ्यते । एषः कामः एतैः इंद्रियादिभिः ज्ञानं विवेकज्ञानं आवृत्य आच्छाद्य देहिनं देहोऽस्यास्तीति देही तं देहिनं देहाभिमानिनं जीवं विमोहयति विशेषेण मोहयुक्तं करोति ॥ ४० ॥ तस्मात्त्वमिति । हे भरतर्षभ ! हे महावंशप्रसूत ! त्वं आदौ विमोहात्पूर्वमेव तस्मात् श्रेयःप्राप्तिहेतोः इंद्रियाणि श्रोत्रादीनि मनोबुद्धिरूपाणि नियम्य वशीकृत्य पाप्मानं सर्वपापमूलभूतं एनं कामं वैरिणं प्रजहि घातय त्यजेत्यर्थः । हि इति निश्चयेन । कथंभूतं एनम् । ज्ञानविज्ञाननाशनं ज्ञानं शास्त्राचार्योपदेशजं च विज्ञानं निदिध्यासनं ज्ञानविज्ञाने ज्ञानविज्ञाने नाशयतीति ज्ञानविज्ञाननाशनः तम् ॥ ४१ ॥ इंद्रियाणीति । बुधाः पंडिताः इंद्रियाणि कर्मेंद्रियेभ्यः

मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ४२ ॥
एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४३ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु० कर्मयोगो नाम तृतीयोऽध्यायः ॥ ३ ॥

ज्ञानेंद्रियाणि पराणि श्रेष्ठानि आहुः वदंति । इंद्रियेभ्यः ज्ञानेंद्रियेभ्यः परं श्रेष्ठं मनः संकल्पविकल्पात्मकं आहुः वदंति स्म । मनसः संकल्पविकल्पात्मकात् बुद्धिः निश्चयात्मिका बुद्धिः परा श्रेष्ठा अस्ति । यस्तु आत्मा तु बुद्धेः निश्चयात्मिकायाः परतः बुद्धिसाक्षित्वेन अवस्थितः तस्थौ । सः आत्मा बुद्धेः द्रष्टा सर्वेषां इंद्रियाणां साक्षी वर्त्तते ॥४२॥ एवमिति । हे महाबाहो ! हे शत्रुमारणसुकर ! त्वं बुद्धेः निश्चयात्मिकायाः एवंभूतं परं परमात्मानं बुद्ध्वा ज्ञात्वा आत्मानं मनः आत्मना निश्चयात्मिकया बुद्ध्या संस्तभ्य स्थिरीकृत्य शत्रुं सर्वपुरुषार्थघातकं जहि मारय । कथंभूतं शत्रुम् । कामरूपं काम एव तृष्णा एव रूपं स्वरूपं यस्य सः कामरूपः तं कामरूपम् । पुनः कथभूंत शत्रुम् । दुरासदं दुःखेन कष्टेन आसादितुं वशीकर्त्तुं अयोग्यः दुरासदः तं दुरासदम् ॥ ४३ ॥ ॥
स्वधर्मेण यमाराध्य भक्त्या मुक्तिमिता बुधाः । तं कृष्णं परमानंदं तोषयेत्सर्वकर्मभिः ॥ १ ॥ ॥ इति श्रीबालबोधिन्यां श्रीमद्भगवद्गीताटीकायां तृतीयोऽध्यायः ॥ ३ ॥

श्रीभगवानुवाच ।

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥
एवं परंपराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परंतप ॥ २ ॥
स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।

श्रीः । अहं भगवान् वासुदेवः इमं अध्यायद्वयेनोक्तं योगं कर्मनिष्ठोपायलभ्यं ज्ञाननिष्ठालक्षणयोगं विवस्वते विवांसि किरणाः विद्यंते यस्य सः विवस्वान् तस्मै विवस्वते सर्वक्षत्रियवंशबीजभूताय सूर्याय प्रोक्तवान् प्रकर्षेण सर्वसंशयच्छेदादिरूपेण उक्तवान् कथितवान् । सः मम शिष्यः विवस्वान् सूर्यः मनवे वैवस्वताय स्वपुत्राय प्राह उक्तवान् । मनुः वैवस्वतमनुः इक्ष्वाकवे स्वपुत्राय आदिराजाय अब्रवीत् कथयामास । वैवस्वतमन्वंतराभिप्रायेण आदित्यमारभ्य संप्रदायो गणितः । कथंभूतं योगम् । अव्ययं न विद्यते व्ययो नाशः यस्य सः अव्ययः तं अव्ययम् ॥१॥ एवमिति । हे परंतप ! परान् बाह्यशत्रून् अथवा कामक्रोधादीन् तापयतीति परंतपः तत्संबुद्धौ हे परंतप हे जितेंद्रिय ! एवं पूर्वोक्तप्रकारेण राजर्षयः राजानश्च ते ऋषयश्च राजर्षयः निमिप्रमुखाः परंपराप्राप्तं परंपरया आदित्यमारभ्य गुरुशिष्यपरंपरया प्राप्तः परंपराप्राप्तः तं इमं योगं विदुः जानंति । सः महाप्रयोजनः योगः महता दीर्घेण कालेन इह लोके नष्टः बभूव विच्छिन्नो बभूव ॥ २ ॥ स एवायमिति । स एव पुरातन एव अयं योगः मया अतिकृपालुना अद्य संप्रदायविच्छेदकाले ते तुभ्यं प्रोक्तः

भक्तोसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥

अर्जुन उवाच ।

अपरं भवतो जन्म परं जन्म विवस्वतः ।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥

श्रीभगवानुवाच ।

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ५ ॥

कथितः। कस्मात् कारणात् इति हेतोः त्वं मे मम भक्तः असि चेत्यपरं सखा असि अतः हेतोः तुभ्यं उक्तः अन्यस्मै नोक्तः। हि यस्मात् एतत् ज्ञानं उत्तमं रहस्यं अतिगोप्यं अस्ति कथंभूतः योगः। पुरातनः गुरुपरंपरया आगतः ॥ ३ ॥ अपरमिति। हे कृष्ण! भवतः तव जन्म वसुदेवगृहे शरीरग्रहणं अपरं अल्पकालीनं अस्ति। विवस्वतः सूर्यस्य जन्म परं बहुकालीनं अस्ति। त्वं आदौ प्रथमं विवस्वते सूर्याय योगं प्रोक्तवान् इति एवं अहं एतत् त्वद्वाक्यं कथं विजानीयाम् कथं ज्ञातुं शक्नुयाम्?॥ ४ ॥ हे अर्जुन! मे मम बहूनि असंख्यातानि जन्मानि लीलादेहग्रहणानि व्यतीतानि अतिक्रांतानि संति। चेत्यपरं तव जन्मानि बहूनि व्यतीतानि अतिक्रांतानि संति। हे परंतप! परं शत्रुं भेददृष्ट्या परिकल्प्य हंतुं प्रवृत्तोसि। हे भ्रांतबुद्धे! अहं सर्वज्ञः सर्वशक्तिः ईश्वरः सर्वाणि मदीयानि त्वदीयानि च तानि जन्मानि वेद जानामि।

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ॥
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ६ ॥
यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ७ ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।

त्वं अज्ञः जीवः तिरोभूतज्ञानशक्तिः अत एव तानि जन्मानि न वेत्थ न जानासि ॥ ५ ॥ अजोऽपीति । अहं सर्वज्ञः अजोऽपि सन् जायते उत्पन्नो भवत्यसौ जः न जः अजः अजोऽपि अजन्मा सन्नपि चेत्यपरं अव्ययात्मा अनश्वरस्वभावः सन्नपि चेत्यपरं भूतानां ब्रह्मादिस्तंबपर्यंतानां जीवानां ईश्वरः कर्मपारतंत्र्यरहितः सन्नपि स्वां शुद्धसत्त्वात्मिकां प्रकृतिं मायां अधिष्ठाय स्वीकृत्य आत्ममायया आत्मनः अप्रच्युतज्ञानबलवीर्यस्य माया शक्तिः आत्ममाया तया संभवामि अवतरामि ॥६॥ यदा यदेति । हे भारत ! हे भरतवंशोद्भव ! यदा यदा यस्मिन् यस्मिन् काले धर्मस्य वेदविहितस्य धर्मस्य ग्लानिः हानिः भवति । हीति निश्चयेन । अधर्मस्य वेदनिषिद्धस्य अधर्मस्य अभ्युत्थानं आधिक्यं भवति तदा तदा तस्मिन् तस्मिन् काले अहं आत्मानं देहं सृजामि दर्शयामि ॥ ७ ॥ परित्राणायेति । अहं धर्मरक्षकः साधूनां स्वधर्मवर्तिनां परित्राणाय सर्वप्रकारेण रक्षणाय चेत्यपरं दुष्कृतां दुष्टं कर्म कुर्वंति ते दुष्कृतः तेषां विनाशाय वधाय चेत्यपरं धर्मसंस्थापनार्थाय धर्मस्य संस्थापनं धर्मसंस्थापनं धर्मसंस्थापनस्य अर्थः धर्मसंस्थापनार्थः तस्मै धर्मसंस्थापनार्थाय साधुरक्षणेन दुष्टवधेन धर्मं स्थिरीकर्तुं युगे युगे तस्मिन्

धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८ ॥
जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥
वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।
बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥

तस्मिन् अवसरे संभवामि अवतारं गृह्णामि ॥ ८ ॥ जन्मकर्मेति । हे अर्जुन! यः पुरुषः मे मम जन्म स्वेच्छाकृतं अवतारादि चेत्यपरं कर्म धर्मपालनरूपं च दिव्यं अलौकिकं तत्त्वतः शुद्धसच्चिदानंदरूपज्ञानेन एवंप्रकारेण वेत्ति जानाति सः पुरुषः देहं देहाभिमानं त्यक्त्वा पुनः जन्म नैति न प्राप्नोति । किं तु मां भगवंतं एति प्राप्नोति ॥ ९ ॥ दुष्टनिग्रहं कुर्वतः मम निर्दयत्वं नास्ति । यथा । 'लालने ताडने मातुर्नाकारुण्यं यथाऽर्भके । तद्वदेव महेशस्य नियंतुर्गुणदोषयोः' ॥ वीतरागेति । बहवः अनेके ज्ञानतपसा ज्ञानमेव तपः ज्ञानतपः तेन यद्वा ज्ञानं च तपः स्वधर्मानुष्ठानं ज्ञानतपसी ज्ञानतपसोः समहारः ज्ञानतपः तेन पूताः संतः क्षीणसर्वपापाः संतः मद्भावं मम भावः मद्रूपत्वं मद्भावः तं मद्भावं मोक्षं प्राप्ताः जीवन्मुक्ताः बभूवुः । कथंभूताः बहवः। वीतरागभयक्रोधाः रागः विषयाभिलाषः च भयं 'विषयान् परित्यज्य ज्ञानमार्गे कथं जीवितव्यं' इति भयं क्रोधो द्वेषः रागभयक्रोधाः वीताः गताः रागभयक्रोधाः येभ्यस्ते । पुनः कथंभूताः बहवः । मन्मयाः मां परमात्मानं साक्षात्कृतवंतः । पुनः कथंभूताः बहवः । मां ईश्वरं उपाश्रिताः एकांतप्रेमभक्त्या शरणं गताः ॥ १० ॥

ये यथा मां प्रपद्यंते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्त्तंते मनुष्याः पार्थ सर्वशः ॥ ११ ॥
कांक्षंतः कर्मणां सिद्धिं यजंत इह देवताः ।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥१२॥
चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।

ये यथेति । हे पार्थ हे अर्जुन ! ये आर्त्ताः चेत्यपरं अर्थार्थिनः च जिज्ञासवः चेत्यपरं ज्ञानिनः यथा येन प्रकारेण सकामतया अथवा निष्कामतया मां ईश्वरं सर्वफलदातारं प्रपद्यंते भजंति तान् सर्वान् अहं तथैव तदपेक्षितफलदानेनैव भजामि अनुगृह्णामि । हे पार्थ! सर्वशः सर्वप्रकारैः मनुष्याः मम सर्वात्मनः वासुदेवस्य वर्त्म भजनमार्गं अथवा कर्मज्ञानलक्षणमार्गं अनुवर्त्तंते अनुलक्षेण वर्त्तंते॥११॥ कांक्षंत इति। सकामभक्ताः कर्मणां सिद्धिं फलनिष्पत्तिं कांक्षंतः कांक्षंति इच्छंति ते कांक्षंतः संतः इह लोके देवताः इंद्रादिदेवान् यजंते पूजयंति। निष्कामास्तु मां भगवंतं वासुदेवं यजंते पूजयंति इति शेषः। हि यस्मात् इंद्रादिदेवतायाजिनां कर्मजा कर्मभ्यः जाता कर्मजा सिद्धिः कर्मफलसिद्धिः मानुषे मनुष्याणां अयं मानुषः तस्मिन् लोके क्षिप्रं शीघ्रं भवति ज्ञानफलं मोक्षः न भवति ॥१२॥ चातुर्वर्ण्यमिति । मया वासुदेवेन चातुर्वर्ण्यं चत्वारः वर्णाः इति चातुर्वर्ण्यं गुणकर्मविभागशः गुणाश्च कर्माणि च गुणकर्माणि गुणकर्मणां विभागाः गुणकर्मविभागाः गुणकर्मविभागैः इति गुणकर्मविभागशः गुणाः सत्त्वप्रधानाः ब्राह्मणाः तेषां ब्राह्मणानां शमदमादीनि कर्माणि सत्त्वरजःप्रधानाः क्षत्रियाः तेषां क्षत्रियाणां शौर्ययुद्धादीनि कर्माणि रजस्तमःप्रधानाः वैश्याः तेषां वैश्यानां कृषिवाणिज्यादीनि कर्मा-

तस्य कर्त्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥१३॥
न मां कर्माणि लिंपंति न मे कर्मफले स्पृहा ।
इति मां योभिजानाति कर्मभिर्न स बद्ध्यते ॥ १४ ॥
एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥
किं कर्म किमकर्मेति कवयोप्यत्र मोहिताः ।

णि तमः प्रधानाः शूद्राः तेषां शूद्राणां त्रैवर्णिकशुश्रूषादिकर्माणि एवंगुणानां चेत्यपरं कर्मणां विभागैः सृष्टं निर्मितं तथापि एवं सत्यपि हे पार्थ ! त्वं तस्य चातुर्वर्ण्यस्य कर्त्तारमपि करोतीति कर्त्ता तं मां वासुदेवं अकर्त्तारमेव विद्धि जानीहि । कथंभूतं माम् । अव्ययं न विद्यते व्ययो यस्य सः अव्ययः तं अव्ययं आसक्तिराहित्येन श्रमरहितम् ॥ १३ ॥ न मामिति । कर्माणि विश्वसृष्ट्यादीनि कर्माणि मां निरहंकारत्वेन कर्त्तृत्वाभिमानहीनं भगवंतं न लिंपंति देहारंभकत्वेन न बध्नंति । मे पूर्णमनोरथस्य भगवतः कर्मफले कर्मणः फलं कर्मफलं तस्मिन स्पृहा इच्छा नास्ति इति एवंप्रकारेण यः पुरुषः मां अकर्त्तारं अभोक्तारं अभिजानाति आत्मत्वेन जानाति सः पुरुषः कर्मभिः न बध्यते न बद्धो भवति ॥ १४ ॥ एवमिति । एवं उक्तप्रकारेण मां सर्वकर्तारमपि अकर्त्तारं ज्ञात्वा पूर्वैरपि अस्मिन् युगे ययातियदुप्रभृतिभिरपि मुमुक्षुभिः मोक्तुं संसारात् मोक्तुं इच्छंति ते मुमुक्षवतैः कर्म स्वकर्म कृतम् । यथा पूर्वैः जनकादिभिः पूर्वतरं युगांतरेष्वपि कर्म स्वकर्म कृतं तथा तस्मात् कारणात् त्वमपि मुमुक्षुः सन् कर्म स्वकर्म कुरु ॥ १५ ॥ किं कर्मेति । किं कर्म कीदृशं कर्मकरणं किं अकर्म कीदृशं कर्माकरणं इति एवं अत्र अस्मिन् अर्थे

तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६ ॥
कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥
कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।

कवयोपि विवेकिनोपि मोहिताः अविवेकं प्राप्ताः । तस्मात् कारणात् अहं ते तुभ्यं तत् कर्म प्रवक्ष्यामि कथयामि । त्वं यत् कर्माकर्मस्वरूपं ज्ञात्वा अनुष्ठाय अशुभात् संसारात् मोक्ष्यसे मुक्तो भविष्यसि ॥ १६ ॥ कर्मणो हीति । हि यस्मात् कारणात् कर्मणः विहितव्यापारस्य तत्त्वं बोद्धव्यं बोधितुं ज्ञातुं योग्यं बोद्धव्यं अस्ति । अकर्मणः निर्व्यापारस्यापि तत्त्वं बोद्धव्यं अस्ति । चेत्यपरं विकर्मणोपि निषिद्धाचरणस्यापि तत्त्वं बोद्धव्यं बोधितुं ज्ञातुं योग्यं बोद्धव्यं अस्ति । यतः हेतोः कर्मणः कर्माकर्मविकर्मणां गतिः तत्त्वं गहना दुर्विज्ञेया अस्ति ॥ १७ ॥ कर्मण्यकर्मेति । यः पुरुषः कर्मणि परमेश्वराराधनलक्षणे कर्मणि अकर्म कर्म इदं न भवति तत् अकर्म पश्येत् अवलोकयेत् चेत्यपरं अकर्मणि विहिताकरणे यः पुरुषः कर्म पश्येत् यद्वा यः पुरुषः कर्मणि व्यापारभूते विषये अकर्म निर्व्यापारं ब्रह्म पश्येत् पश्यति । तथा अकर्मणि निर्व्यापारे ब्रह्मणि कर्म समाधौ अहं निर्व्यापारेण तूष्णींभूतः पूर्णः कृतकृत्योहमिति तूष्णींभूताभिमानेन आरोपितसमाधिव्यापारं पश्यति स्वव्यापारराहित्ये उपाधिव्यापारवत् ब्रह्म पश्यति । सः पुरुषः भासमाने अपि कर्माकर्मणी विहाय तदधिष्ठानं ब्रह्म पश्यन् सन् मनुष्येषु शास्त्राधिकारिषु बुद्धिमान् व्यवसायात्मिकाबुद्धिमत्त्वात् श्रेष्ठः अस्ति । स एव पुरुषः युक्तः योगी स्वरूपात् अप्रचलितः । स एव पुरुषः कृत्स्नकर्मकृत् कृ-

स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत्॥१८॥
यस्य सर्वे समारंभाः कामसंकल्पवर्जिताः।
ज्ञानाग्निदग्धकर्माणं तमाहुः पंडितं बुधाः॥ १९ ॥
त्यक्त्वा कर्मफलासंगं नित्यतृप्तो निराश्रयः।

त्स्नानि सर्वाणि च तानि कर्माणि च कृत्स्नकर्माणि कृत्स्नकर्माणि करोतीति कृत्स्नकर्मकृत् यद्वा कृत्स्नकर्माणि प्रवृत्तिनिवृत्तिपराणि कृंति छिनत्ति। यदा आरुरुक्षोरपि कर्म बंधकं न भवति तदा आरूढस्य कर्म बंधकं कुतः स्यात्? अपि तु न स्यात्॥ १८॥ यस्येति यस्य परमार्थदर्शिनः सर्वे यावंतः वैदिकलौकिकाः समारंभाः सम्यक् आरभ्यंत इति समारंभाः कर्माणि कामसंकल्पवर्जिताः काम्यत इति कामः फलं कामस्य संकल्पः कामसंकल्पः कामसंकल्पैः वर्जिताः यद्वा कामः फलतृष्णा त्र संकल्पः अहं करोमीति कर्तृत्वाभिमानः कामसंकल्पौ कामसंकल्पाभ्यां वर्जिताः रहिताः भवंति बुधाः तल्लक्षणज्ञाः तं पुरुषं पंडितं पंडा शास्त्रतात्पर्यवती बुद्धिः संजात यस्य सः पंडितः तं तथोक्तं आहुः कथयंति। कथंभूतं तम्। ज्ञानाग्निदग्धकर्माणम्। ज्ञानमेव अग्निः ज्ञानाग्निः ज्ञानाग्निना दग्धानि कर्माणि यस्य सः ज्ञानाग्निदग्धकर्मा तम्॥ १९॥ त्यक्त्वेति। स पुरुषः कर्मफलासंगं कर्मणां फलानि कर्मफलानि कर्मफलेषु आसंग आसक्तिः कर्मफलासंगः तं त्यक्त्वा विहाय कर्मणि विहितानुष्ठाने प्रवृत्तोपि वर्त्तमानोपि किंचित् किमपि न करोति तस्य कर्म अकर्मतां आपद्यते। कथंभूतः सः। नित्यतृप्तः नित्येन निजानंदेन तृप्तः संतुष्टः अत एव निराश्रयः निर्गतः आश्रयो देहबुद्ध्याश्रय

कर्मण्यभिप्रवृत्तोपि नैव किंचित्करोति सः ॥ २० ॥
निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥२१॥
यदृच्छालाभसंतुष्टो द्वंद्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥२२॥

यस्य सः ॥ २० ॥ निराशीरिति । सः सर्वज्ञः पुरुषः केवल कर्तृत्वाभिमानशून्यं शारीरं शरीरस्य इदं शारीरं शरीरनिर्वाह-मात्रोपयोगि कर्म कुर्वन् करोतीति कुर्वन् सन् किल्बिषं धर्माधर्मफलभूतं बंधं न प्राप्नोति । कथंभूतः सः । निराशीः निर्गताः आशिषः कामप्रार्थनाः यस्य सः निराशीः गततृष्णः। पुनः कथंभूतः सः । यतचित्तात्मा चित्तं अंतःकरणं च आत्मा देहः चित्तात्मानौ यतौ संयतौ चित्तात्मानौ यस्य सः यतचित्तात्मा अत एव त्यक्तसर्वपरिग्रहः सर्वः संपूर्णश्चासौ परिग्रहश्च जायासुतादिः त्यक्तः सर्वपरिग्रहो येन सः तथोक्तः ॥ २१ ॥ यदृच्छेति । किंच सः पंडितः कर्म वेदप्रतिपादितं स्वाभाविकं कर्म अथवा शरीरनिर्वाहार्थं भिक्षाटनादि कर्म कृत्वापि न निबध्यते न बंधं प्राप्नोति । कथंभूतः सः । यदृच्छालाभसंतुष्टः यदृच्छालाभेन अन्नाच्छादनादेः अप्रार्थितलाभेन संतुष्टः संतोषं प्राप्तः यदृच्छालाभसंतुष्टः । पुनः कथंभूतः सः । द्वंद्वातीतः द्वंद्वानि क्षुत्पिपासाशीतोष्णादीनि अतीतः अतिक्रांतः द्वंद्वातीतः अत एव विमत्सरः विगतः मत्सरो यस्य सः विमत्सरः निर्वैरः । पुनः कथंभूतः सः । सिद्धौ लाभे चेत्यपरं असिद्धौ अलाभे समः हर्षविषादराहित्यः ॥ २२ ॥

गतसंगस्य मुक्तस्य ज्ञानावस्थितचेतसः।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते॥ २३॥
ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गंतव्यं ब्रह्मकर्मसमाधिना॥ २४॥
दैवमेवापरे यज्ञं योगिनः पर्युपासते।

गतसंगस्येति। तस्य स्थितप्रज्ञस्य समग्रं सहफलेन अग्रेण विद्यते वर्तते इति समग्रं संपूर्णं कर्म यज्ञदानादिकं प्रविलीयते तत्त्वदर्शनेन नश्यति यद्वा प्रविलीयते फलदानाय नावशिष्यते किं तु ज्ञानसहायतां प्राप्नोति। कथंभूतस्य तस्य। गतसंगस्य गतः संगो कर्तृत्वाभिनिवेशः अथवा फलाभिलाषः यस्य सः गतसंगः तस्य। पुनः कथंभूतस्य मुक्तस्य। वासनाभिः परित्यक्तस्य। पुनः कथंभूतस्य तस्य। ज्ञानावस्थितचेतसः ज्ञाने निर्विकल्पब्रह्मात्मैक्यबोधे अवस्थितं चेतो अंतःकरणं यस्य सः ज्ञानावस्थितचेताः तस्य। पुनः कथंभूतस्य तस्य। यज्ञाय विष्णुप्रीत्यर्थं 'यज्ञो वै विष्णुः'—इति श्रुतेः। कर्म विहिताचरणं आचरतः आचरतीति आचरन् तस्य आचरतः॥ २३॥ ब्रह्मार्पणमिति। अर्पणं अर्प्यते अनेनेति अर्पणं स्रुवादि ब्रह्मैव आसीत्। हविः घृतादिकं ब्रह्मैव आसीत्। ब्रह्माग्नौ ब्रह्मैव अग्निः ब्रह्माग्निः तस्मिन् ब्रह्मणा कर्त्रा ब्रह्मैव हुतं होमितं तेन ब्रह्मार्पणक्रमेण ब्रह्मैव गंतव्यं गंतुं प्राप्तुं योग्यं गंतव्यं अस्ति। कथंभूतेन तेन। ब्रह्मकर्मसमाधिना ब्रह्मैव कर्म ब्रह्मकर्म ब्रह्मकर्मणि समाधिः चित्तैकाग्र्यं यस्य सः ब्रह्मकर्मसमाधिः तेन॥ २४॥ दैवमिति। अपरे अन्ये योगिनः कर्मयोगिनः दैवमेव देवाः इंद्राग्निवरुणादयः

ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥
श्रोत्रादीनींद्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन्विषयानन्य इंद्रियाग्निषु जुह्वति ॥ २६ ॥
सर्वाणींद्रियकर्माणि प्राणकर्माणि चापरे ।

इज्यंते यस्मिन् सः दैवः तं यज्ञं दर्शपूर्णमासज्योतिष्टोमादिरूपं पर्युपासते सर्वदा कुर्वंति । अपरे ज्ञानयोगिनः ब्रह्माग्नौ ब्रह्मरूपश्चासौ अग्निश्च ब्रह्माग्निः तस्मिन् यज्ञेनैव उपायभूतेन ब्रह्मार्पणमित्युक्तप्रकारेण यज्ञं परमात्मानं उपजुह्वंति ब्रह्मदृष्ट्या सर्वाणि यज्ञकर्माणि प्रविलापयंति ॥ २५ ॥ श्रोत्रादीनीति । अन्ये नैष्ठिकाः ब्रह्मचारिणः श्रोत्रादीनि श्रोत्रं आदिर्येषां तानि इंद्रियाणि ज्ञानेंद्रियाणि संयमाग्निषु संयमरूपाः इंद्रियनियमनरूपाश्च ते अग्नयश्च संयमाग्नयः तेषु । जुह्वति इंद्रियाणि निरुध्य तिष्ठंति । अन्ये गृहस्थाः शब्दादीन् शब्दः आदिर्येषां ते शब्दादयः तान् विषयान् शब्दस्पर्शरसरूपगंधान् इंद्रियाग्निषु इंद्रियरूपाश्च ते अग्नयश्च इंद्रियाग्नयः तेषु जुह्वति विषयभोगसमयेपि अनासक्ताः संतः शब्दादिविषयान् प्रक्षिपंति त्यजंतीत्यर्थः ॥ २६ ॥ सर्वाणीति । अपरे ध्याननिष्ठाः सर्वाणि संपूर्णाणि इंद्रियकर्माणि इंद्रियाणां कर्माणि इंद्रियकर्माणि इंद्रियाणां ज्ञानेंद्रियाणां श्रोत्रत्वक्चक्षूरसनघ्राणेंद्रियाणां कर्माणि शब्दस्पर्शरूपरसगंधाख्यानि कर्मेंद्रियाणां वाक्पाणिपादपायूपस्थानां कर्माणि वचनादानगमनविसर्गानंदाख्यानि चेत्यपरं प्राणकर्माणि प्राणानां कर्माणि प्राणकर्माणि प्राणानां पंचप्राणानां प्राणस्य बहिर्गमनं अपानस्य अधोनयनं व्यानस्य आकुंचनप्रसारणादि समानस्य अशितपीतादीनां सम्यक् नयनं उदानस्य ऊर्ध्वनयनम् । पंचानां उपप्राणानां लक्षणम्—नागः वायुः उद्गारे कथितः । कूर्मः उन्मी-

आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥
द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥
अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ।

लने स्मृतः । कृकरः क्षुत्कृत् । देवदत्तः विजृंभणे स्मृतः । धनंजयः सर्वव्यापी सन् मृतं देहमपि न त्यजति । आत्मसंयमयोगाग्नौ आत्मनि विषये ब्रह्मणि संयमः ध्यानैकाग्र्यं आत्मसंयमः आत्मसंयम एव योगः मनइंद्रियाणां एकाग्रीकरणं आत्मसंयमयोगः आत्मसंयमयोग एव अग्निः आत्मसंयमयोगाग्निः तस्मिन् जुह्वति क्षिपंति त्यजंतीत्यर्थः । कथंभूते आत्मसंयमयोगाग्नौ । ज्ञानदीपिते ज्ञानेन ध्येयविषयेण दीपितः प्रज्वलितः ज्ञानदीपितः तस्मिन् ॥ २७ ॥ द्रव्येति । अपरे अन्यपुरुषाः द्रव्ययज्ञाः द्रव्यमेव गोभूहिरण्यादेः सत्पात्रार्पणमेव यज्ञो येषां ते द्रव्ययज्ञाः संति । केचित् तपोयज्ञाः तप एव कृच्छ्रचांद्रायणादिकमेव यज्ञो येषां ते तपोयज्ञाः संति । केचित् योगयज्ञाः योग एव चित्तवृत्तिनिरोधलक्षणः समाधिरेव यज्ञो येषां ते योगयज्ञाः संति । तथा स्वाध्यायज्ञानयज्ञाः स्वाध्यायेन वेदपठनश्रवणमननादिना ज्ञानं अर्थज्ञानं स्वाध्यायज्ञानं स्वाध्यायज्ञानमेव यज्ञो येषां ते तथोक्ताः संति । चेत्यपरं यतयः यतंति ते यतयः प्रयत्नशीलाः संशितव्रताः सम्यक् शितं तीक्ष्णं व्रतं येषां ते संशितव्रताः दृढव्रताः संति ॥ २८ ॥ अपान इति । अपरे अन्यपुरुषाः प्राणायामपरायणाः संतः प्राणायामेषु पूरककुंभकरेचकेषु परायणाः तत्पराः प्राणायामपरायणाः अपाने अधोवृत्तौ वायौ प्राणं ऊर्ध्ववृत्तिं वायुं पूरकाख्यप्राणायामेन जुह्वति पूरककाले प्राणं अपानेन एकी कुर्वंति । तथा प्राणे प्राणवायौ अपानं अपान-

प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥
अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति ।
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥

वायुं जुह्वति रेचककाले अपानं प्राणेन एकीकुर्वंति । तथा प्राणापानगतीः प्राणश्च अपानश्च प्राणापानौ प्राणापानयोः गतयः ऊर्ध्वाऽधोगतयः प्राणापानगतयः ताः रुद्ध्वा कुंभकाख्यं प्राणायामं कृत्वा रेचककाले अपानवायुं प्राणवायौ जुह्वति एकीकुर्वंति । अयं प्राणायामयज्ञः ॥ २९ ॥ अपर इति । अपरे अन्यपुरुषाः नियताहाराः संतः नियतः शास्त्रेण नियमितः आहारो येषां ते प्राणेषु आहारसंकोचेन स्वयमेव जीर्यमाणेषु इंद्रियेषु प्राणान् तत्तदिंद्रियविषयान् जुह्वति जीर्यमाणेषु इंद्रियेषु सत्सु तत्तदिंद्रियवृत्तिलयहोमं भावयंति । रेचकपूरकद्वारा वर्त्तमानयोः प्राणापानयोः 'हंसः सोहं'—इति अनुलोमप्रतिलोमाभ्यां आवर्तमानेन वायुना अजपामंत्रेण तत्त्वंपदार्थैक्यं भावयंति । तदुक्तं योगशास्त्रे—प्राणः हकारेण बहिर्याति पुनः सकारेण अंतः प्रविशति स एव ' हंसः '— इति चिंतयेत् । आहारनियमोपि योगशास्त्रे दर्शितः— ' द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत् । मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत्' ॥ कुंभके सर्वे प्राणाः एकीभवंति । यथा सदा अभ्यासात् मनसः स्थिरता भवेत् मनसः स्थिरतया सर्वेषां इंद्रियाणां स्थिरवृत्तिः भवति । उक्तानां द्वादशयज्ञानां फलं आह अर्धश्लोकेन । एते पूर्वोक्ताः सर्वेपि संपूर्णा अपि यज्ञविदः यज्ञान् द्वादश यज्ञान् विंदंति लभंते ते यज्ञविदः यज्ञकर्त्तारः संति । कथंभूताः यज्ञविदः । यज्ञक्षपितकल्मषाः यज्ञैः द्वादशयज्ञैः क्षपितं नाशितं कल्मषं वासनारूपं

यज्ञशिष्टामृतभुजो याति ब्रह्म सनातनम्।
नायं लोकोस्त्ययज्ञस्य कुतोन्यः कुरुसत्तम ॥३१॥
एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।
कर्मजान् विद्धि तान् सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥३२॥
श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः परंतप ।

यैस्ते यज्ञक्षपितकल्मषाः चित्तशुद्धिद्वारा एकाग्रतया ज्ञानयोग्या भवंति ॥ ३० ॥ यज्ञशिष्टेति । यज्ञशिष्टामृतभुजः यज्ञान् कृत्वा पश्चात् शिष्टं यज्ञशिष्टं यज्ञशिष्टमेव अमृतं अमृतरूपं अन्नं यज्ञशिष्टामृतं यज्ञशिष्टामृतं भुंजंति ते सनातनं नित्यं ब्रह्म यांति ज्ञानद्वारेण प्राप्नुवंति । अयं अल्पसुखः लोकः मनुष्यलोकः अयज्ञस्य नास्ति यज्ञो यस्य सः अयज्ञः तस्य यज्ञानुष्टानशून्यस्य नास्ति । हे कुरुसत्तम ! अन्यः परलोकः कुतः। अतः हेतोः यज्ञाः सर्वथा कर्त्तव्याः ॥ ३१ ॥ एवमिति । एवंप्रकारेण बहुविधाः अनेकप्रकाराः यज्ञाः ब्रह्मणः वेदस्य मुखे पूर्वकांडे विततः विस्तारं गताः तैस्तैः मंत्रैः प्रकाशिताः। हे पार्थ ! त्वं सर्वान् संपूर्णान् तान् यज्ञान् कर्मजान् कर्मभ्यः वाङ्मनःकायकर्मभ्यः जाताः कर्मजाः तान् कर्मजान् आत्मस्वरूपसंस्पर्शरहितान् विद्धि जानीहि । त्वं एवंप्रकारेण ज्ञात्वा ज्ञाननिष्ठः सन् संसारात् विमोक्ष्यसे विशेषेण पुनरुत्पत्तिशून्येन मोक्ष्यसे विमुक्तो भविष्यसि ॥ ३२ ॥ श्रेयानिति। हे परंतप ! ज्ञानयज्ञः ज्ञानमेव यज्ञः सः द्रव्यमयात् द्रव्यप्रचुरः द्रव्यमयः यद्वा द्रव्यविकारः द्रव्यमयः तस्मात् यज्ञात् कर्मजात् श्रेयान् श्रेष्ठः अस्ति । हे पार्थ ! सर्वं समस्तं अखिलं सकलं कर्म कर्तुरीप्सिततमं

सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥३३॥
तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यंति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥३४॥
यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पांडव ॥

ज्ञाने जानाति सर्वं प्रकाशयति तत् ज्ञानं तस्मिन् परिसमाप्यते सम्यक् समाप्तिं प्राप्नोति ॥ ३३ ॥ 'अर्जुन उवाच । एतादृशं ज्ञानं केनोपायेन प्राप्तव्यं अस्ति । श्रीभगवानुवाच ।' तद्विद्धीति । त्वं तु मत्कृपया उपायं विनैव तत् ज्ञानं मत्तः त्रैलोक्यगुरोः विद्धि प्राप्नुहि त्वदन्ये तु त्वद्व्यतिरिक्ताः पुरुषाः ज्ञानिभ्यः प्रणिपातेन प्रकर्षेण निपातः दंडवत् उच्चनीचकर्दमकंटकाद्यविचार्य एकनिष्ठतया पतनं प्रणिपातः तेन प्रणिपातेन साष्टांगनमस्कारेण चेत्यपरं परिप्रश्नेन 'भो स्वामिन् अनादौ अस्मिन्संसारे अहं निमग्नः तस्य संसारस्य पारं चेत्यपरं स्वरूपावस्थानं मोक्षं कथं गमिष्यामि'—इति प्रश्नेन ततस्तदनंतरं प्रश्नानंतरं यावत् ते ज्ञानिनः कृपया उपदेक्ष्यंति तावत्कालपर्यंतं सेवया तदनुकूलतया नीचवत् दास्येन विदुः जानंति । एवं पूर्वोक्तप्रकारेण सेवायां कृतायां सत्यां ते ज्ञानिनः न उपेक्ष्यंति । किं तु ते ज्ञानिनः ज्ञानं सर्वार्थप्रकाशकं ज्ञानं उपदेक्ष्यंति उप नाम सामीप्येन दर्शयिष्यंति । कथंभूताः ज्ञानिनः । तत्त्वदर्शिनः तत्त्वस्य याथार्थ्यस्वरूपस्य दर्शनं साक्षात्कारः येषां ते अथवा तत्त्वेन तत्त्वंपदशोधनेन दर्शनं अनुभवः येषां ते तत्त्वदर्शिनः ॥ ३४ ॥ यज्ज्ञात्वेति । हे पांडव! यत् ज्ञानं ज्ञात्वा तादात्म्यं प्राप्य एवं इदानीं मोहं स्वजनमरणनिमित्तं मोहं पुनः बंधुवधादिदुःखं न यास्यसि न प्राप्स्यसि ।

येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥३५॥
अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥३६॥
यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ३७॥
न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।

येन ज्ञानेन ज्ञप्तिस्वरूपेण भूतानि चराचराणि ब्रह्मांडोदरवर्त्तीनि अशेषेण साकल्येन आत्मनि स्वस्मिन् द्रक्ष्यसि पश्यसि । अथो सर्वभूतदर्शनानंतरं त्वं मयि त्वदुपदेष्टरि भूतैः सह आत्मानं द्रक्ष्यसि पश्यसि मद्रूपेण अनुभवसि ॥ ३५ ॥ अपि चेदिति । त्वं सर्वेभ्यः संपूर्णेभ्यः पापेभ्योऽपि पापकारिभ्योपि पापकृत्तमः पापं करोतीति पापकृत् अतिशयेन पापकृत् इति पापकृत्तमः भीष्मादिवधनिमित्तेन पापिष्ठः असि चेत् तर्हि सर्वं संपूर्णं वृजिनं पापसमुद्रं ज्ञानप्लवेनैव ज्ञानमेव प्लवः नौका ज्ञानप्लवः तेन ज्ञानप्लवेन संतरिष्यसि अनायासेन तरिष्यसि ॥ ३६ ॥ यथैधांसीति । यथा समिद्धः सम्यक् उत्तमप्रकारेण इद्धः प्रदीप्तः समिद्धः अग्निः एधांसि शुष्ककाष्ठानि भस्मसात् दग्ध्वा भस्म कुरुते करोति । हे अर्जुन ! तथा ज्ञानाग्निः ज्ञानमेव अग्निः ज्ञानाग्निः सर्वकर्माणि सर्वाणि संपूर्णानि च तानि कर्माणि च सर्वकर्माणि प्रारब्धव्यतिरिक्तानि शुभाशुभफलानि पुण्यपापात्मकानि भस्मसात् दग्ध्वा भस्म कुरुते करोति ॥ ३७ ॥ न हीति । इह ब्रह्मांडोदरे ज्ञानेन पवित्रं सदृशं तुल्यं पवित्रं पवेः संसारात् त्रायते संरक्षते इति

तत्स्वयं योगसंसिद्धः कालेनात्मनि विंदति ॥ ३८ ॥
श्रद्धावान् लभते ज्ञानं तत्परः संयतेंद्रियः ।
ज्ञानं लब्ध्वा परां शांतिमचिरेणाधिगच्छति॥३९ ॥
अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।

पवित्रं शुद्धिकरं अन्यत् न विद्यते । हि इति निश्चयेन । त्वं योगसंसिद्धः सन् योगेन कर्मोपासनयोः अनुष्ठानेन संसिद्धः ज्ञानाधिकारी योगसंसिद्धः योग्यतां प्राप्तः सन् तत् ज्ञानं स्वयं अनायासेन आत्मनि अंतःकरणे कालेन महता कर्मयोगेन विंदति लभते ज्ञानरूपो भवति ॥ ३८ ॥ श्रद्धावानिति । श्रद्धावान् श्रद्धा गुरुशास्त्रादौ विश्वासः विद्यते यस्य सः श्रद्धावान् ज्ञानं लभते प्राप्नोति । कथंभूतः श्रद्धावान् । तत्परः तदेव ज्ञानमेव परं श्रेष्ठपुरुषार्थः यस्य सः तत्परः । पुनः कथंभूतः संयतेंद्रियः । संयतानि विषयेभ्यः पराङ्मुखानि इंद्रियाणि यस्य सः संयतेंद्रियः सः श्रद्धावान् ज्ञानं ज्ञप्तिमात्रं लब्ध्वा तादात्म्यं प्राप्य अचिरेण ज्ञानव्यवधानेन परां चरमां शांतिं अविद्यानिवृत्तिरूपां मुक्तिं अधिगच्छति प्राप्नोति । यथा दीपः स्वोत्पत्तिमात्रेणैव अंधकारनिवृत्तिं करोति साहाय्यं नापेक्षते तथा ज्ञानमपि स्वोत्पत्तिमात्रेणैव अज्ञाननिवृत्तिं करोति न तु कालांतरेण ॥३९॥ अज्ञश्चेति । अज्ञः आत्मानं जानातीति ज्ञः न ज्ञः अज्ञः देहात्मदर्शी चेत्यपरं अश्रद्दधानः गुरुशास्त्रोपदिष्टे अर्थे प्रीतिरहितः चेत्यपरं संशयात्मा संशयरूपः आत्मा अंतःकरणं यस्य सः संशयात्मा अत्यंतं निकृष्टः विनश्यति विशेषेण नाशं प्राप्नोति तथापि एवं सत्यपि चकारद्वयेन अज्ञश्रद्दधानौ कालांतरे कस्मिंश्चित् पुण्यकर्मोदये केनचित् कृपालुना बोधार्हौ बोधाय बोधं कर्तुं अर्हौ योग्यौ बोधार्हौ

नायं लोकोस्ति न परो न सुखं संशयात्मनः ॥४०॥
योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम्।
आत्मवंतं न कर्माणि निबध्नंति धनंजय ॥ ४१ ॥
तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः।

भवतः। संशयात्मा कालांतरेपि बोधयोग्यः न भवति। एवंप्रकारेण नश्यति। तौ अज्ञश्रद्दधानौ प्रति विहाय त्यक्त्वा सुखेन संशयात्मनः अनिष्टफलं दर्शयति। संशयात्मनः संशयरूपः आत्मा मनः यस्य सः संशयात्मा तस्य अयं सर्वलोकप्रत्यक्षः लोकः मनुष्यलोकः नास्ति परः परलोकः कुतः?। किं च संशयात्मनः सर्वत्र विषयेषु संशयोदयेन सुखमपि सामान्यसुखमपि नास्ति ॥४०॥ योगसंन्यस्तेति। हे धनंजय! धनं आत्मसाक्षात्काररूपं धनं जयतीति धनंजयः तत्संबुद्धौ हे धनंजय! कर्माणि लोकसंग्रहार्थानि ज्ञानिनं न निबध्नंति निःसंशयेन जन्ममरणरूपबंधं न संपादयंति। कथंभूतं ज्ञानिनम्। योगसंन्यस्तकर्माणं योगेन कर्मोपासनासमुच्चयरूपेण अथवा योगेन परमेश्वराराधनयोगेन अथवा परमार्थदर्शनलक्षणयोगेन संन्यस्तानि भगवति समर्पितानि कर्माणि येन सः योगसंन्यस्तकर्मा तम्। पुनः कथंभूतं ज्ञानिनम्। ज्ञानसंछिन्नसंशयं ज्ञानेन अकर्त्तात्मबोधेन यद्वा ज्ञानेन आत्मनिश्चयलक्षणेन संछिन्नः त्रुटितः संशयो देहाद्यभिमानलक्षणसंशयः यस्य सः ज्ञानसंछिन्नसंशयः तम्। अत एव आत्मवंतं आत्मा निश्चयात्मिका बुद्धिः विद्यते यस्य सः आत्मवान् तं आत्मवंतं अप्रमादिनम् ॥ ४१ ॥ तस्मादिति। हे भारत! हे क्षत्रियवंशोद्भव! तस्मात् ज्ञानात् सर्वघातकः संशयः छिद्यते त्वं आत्मनः स्वस्य एनं सर्वान-

छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥

इति श्रीमद्भगवद्गीता० कर्मब्रह्मार्पणयोगो नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

र्थमूलभूतं संशयं ज्ञानासिना ज्ञानमेव मदुपदिष्टं आत्मानात्मविवेकरूपं ज्ञानमेव असिः खड्गः ज्ञानासिः तेन छित्त्वा द्विधा खंडं कृत्वा समूलं उत्पाट्य योगं युद्धाख्यं स्वधर्मं आतिष्ठ आश्रय। प्रथमं युद्धाय उत्तिष्ठ विलंबं मा कुरु। भरतवंशे जातस्य तव युद्धोद्यमः न निष्फल इति भावः। कथंभूतं संशयम्। अज्ञानसंभूतं अज्ञानेन संभूतः उत्पन्नः अज्ञानसंभूतः तम्। पुनः कथंभूतं संशयम्। हृत्स्थं हृदि बुद्धौ तिष्ठतीति हृत्स्थः तं हृत्स्थम् ॥ ४२ ॥ ॥ इति श्रीबालबोधिन्यां श्रीमद्भगवद्गीताटीकायां चतुर्थोऽध्यायः ॥ ४ ॥

---

अर्जुन उवाच।

संन्यासं कर्मणा कृष्ण पुनर्योगं च शंससि।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥

श्रीभगवानुवाच।

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ।
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥२॥

श्रीः। ज्ञानकर्मोपदेशेन संशयाविष्टमानसम्। चोदयामास यः प्रीत्या स कृष्णः शरणं मम ॥ १ ॥ संन्यासमिति। हे कृष्ण! हे सदानंदमूर्ते! त्वं कर्मणां नित्यनैमित्तिकानां संन्यासं त्यागं शंससि कथयसि। चेत्यपरं पुनः कर्मत्यागकथनानंतरं योगं युद्धाख्यं स्वधर्मं शंससि कथयसि। उभयोः विरुद्धयोः दोलायितांतःकरणाय मे मह्यं एतयोः त्यागकर्मणोः मध्ये यत् त्यागकर्मात्मकं श्रेयः कल्याणकारकं प्रशस्यतरं कर्म वा त्यागं मन्यसे तत् कल्याणं सुनिश्चितं सुतरां अत्यंतं निश्चितं तव मतं सुनिश्चितं ब्रूहि कथय ॥१॥ संन्यास इति। उभौ द्वौ निःश्रेयसकरौ नितरां साक्षात् शीघ्रं समीपं श्रेयः मोक्षसंपादनं कुर्वतः तौ निःश्रेयसकरौ आस्ताम्। उभौ कौ। संन्यासः सर्वकर्मणां यथाशास्त्रेण परित्यागः ज्ञानप्रधानः चेत्यपरं कर्मयोगः फलाभिसंधिराहित्येन ईश्वरार्पणं नित्यनैमित्तिकानुष्ठानं तयोस्तु संन्यासकर्मयोगयोस्तु मध्ये कर्मसंन्यासात् कर्मणां संन्यासः कर्मसंन्यासः तस्मात् कर्मसंन्यासात् ज्ञानप्रधानसाधनश्रवणादिरहितात् पतनहेतुभूतात् कर्मयोगः स्वधर्माचरणं विशिष्यते ईश्वरार्पण-

ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न कांक्षति ।
निर्द्वंद्वो हि महाबाहो सुखं बंधात् प्रमुच्यते ॥३॥
सांख्ययोगौ पृथग्बालाः प्रवदंति न पंडिताः ।
एकमप्यास्थितः सम्यगुभयोर्विंदते फलम् ॥ ४ ॥

बुद्ध्या अनुष्ठानेन ईश्वरप्रसादितज्ञानप्रधानसंन्यासप्राप्तिद्वारा श्रवणादिभिः मुक्तिहेतुत्वात् विशिष्टो भवति ॥ २ ॥ ज्ञेय इति । सः कर्मयोगी नित्यसंन्यासी नित्यं साधारणतया फलत्यागेन संन्यासीव संन्यासी नित्यसंन्यासी ज्ञेयः ज्ञातुं योग्यः ज्ञेयः अस्ति । यः कर्मयोगी इष्टप्राप्तौ न द्वेष्टि कस्यापि द्वेषं न कुरुते इष्टवियोगे न कांक्षति किमप्यर्थजातं नेच्छति । हे महाबाहो ! हे परविद्यादानसमर्थ ! सः कर्मयोगी सुखं अनायासेन बंधात् कर्मजन्यसंसारबंधनात् प्रमुच्यते प्रकर्षेण मुक्तो भवति । हि इति निश्चयेन । कथंभूतः सः । निर्द्वंद्वः निर्गतानि गतानि द्वंद्वानि सुखदुःखादीनि यद्वा शीतोष्णादीनि यद्वा स्नेहमोहादीनि यस्मात्सः ॥ ३ ॥ सांख्ययोगाविति । बालाः शास्त्रहृदयं अनभिज्ञाः अज्ञानिनः सांख्ययोगौ सांख्यं आत्मानात्मविवेकजं तत्त्वज्ञानं च योगः कर्मानुष्ठानं सांख्ययोगौ पृथक् भिन्नफलौ प्रवदंति प्रकर्षेण कथयंति ज्ञानफलं मोक्षः कर्मफलं जन्मबंधः इति जल्पंति । तथा पंडिताः शास्त्रहृदयज्ञाः न प्रवदंति । किं तु तद्ब्रह्माहं इति ज्ञात्वा सर्वबंधैः प्रमुच्यंते यज्ञादीनां करणेन अंतःकरणशुद्धिद्वारा ज्ञानं ज्ञानद्वारा मोक्षफलं प्रवदंति । पुमान् उभयोः ज्ञानकर्मणोः मध्ये एकमपि ज्ञानमपि अथवा कर्मापि सम्यक् यथाशास्त्रं आस्थितः सन् आश्रितः सन् एकमेव फलं मोक्षं विंदते प्राप्नोति । अथवा उभयोः फलं मोक्षं विंदते प्राप्नोति ॥ ४ ॥

यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥ ५ ॥
संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ६ ॥
योगयुक्तो विशुद्धात्मा विजितात्मा जितेंद्रियः ।

यत्सांख्यैरिति । सांख्यैः ज्ञाननिष्ठैः संन्यासिभिः ऐहिककर्मानुष्टानशून्यत्वेपि प्राग्भवीयकर्मभिरेव संस्कृतांतःकरणैः यत् प्रसिद्धं स्थानं तिष्ठति यस्मिन् इति स्थानं मोक्षाख्यं प्राप्यते तत् योगैः योगाः भगवदर्पणबुद्ध्या फलाभिसंधिराहित्येन कृतानि कर्माणि येषां संति ते योगाः तैः योगैरपि योगिभिरपि मोक्षाख्यस्थानं गम्यते प्राप्यते। यः पुरुषः सांख्यं ज्ञानयोगं चेत्यपरं योगं स्वधर्मानुष्ठानं एकं एकफलं पश्यति। सः पुरुषः सम्यक् यथाशास्त्रं पश्यति। तदुक्तम्—'यान्यतोन्यानि जन्मानि तेषु नूनं कृतं भवेत्। यत्कृतं पुरुषेणेह नान्यथा ब्रह्मणि स्थितिः' ॥ अतः मुमुक्षुणा अंतःकरणशुद्धये प्रथमं कर्मयोगः अनुष्ठेयः ॥ ५ ॥ संन्यासस्त्विति। हे महाबाहो ! अयोगतः न योगः अयोगः अयोगादिति अयोगतः अंतःकरणशोधककर्मानुष्ठानं विना संन्यासस्तु सर्वकर्मत्यागस्तु हठेन कृतः सन् दुःखं आप्तुं प्राप्तुं भवति। अशुद्धांतःकरणेन ज्ञाननिष्ठायाः असंभवात्। मुनिः मननशीलः मुनिः योगयुक्तः सन् योगेन ईश्वरार्पणकर्मयोगेन युक्तः योगयुक्तः ब्रह्म सत्यज्ञानादिलक्षणं आत्मानं न चिरेण शीघ्रं अधिगच्छति साक्षात्करोति ॥ ६ ॥ योगयुक्त इति। योगयुक्तः योगेन कर्मानुष्ठानेन युक्तः समाहितः योगयुक्तः यतिः स्वधर्मं कुर्वन् सन्नपि

सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥
नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ॥८॥
प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि ।

करोतीति कुर्वन् अनुतिष्ठन् सन् न लिप्यते संसर्गं न प्राप्नोति। कथं-भूतः योगयुक्तः । विशुद्धात्मा विशुद्धः मायामलरहितः आत्मा चित्तं यस्य सः । पुनः कथंभूतः योगयुक्तः । विजितात्मा विशेषेण जितः वशीकृतः आत्मा मनः येन सः । पुनः कथंभूतः जितेंद्रियः । जितानि इंद्रियाणि ज्ञानकर्मसाधनानि येन सः । पुनः कथंभूतः सः । सर्वभूतात्मभूतात्मा सर्वाणि च तानि भूतानि च सर्वभूतानि सर्वभू-तानां आत्मभूतः आत्मा स्वरूपं यस्य सः ॥ ७ ॥ नैव किंचिदिति । तत्त्ववित् तत्त्वं वास्तवरूपं वेत्ति जानातीति तत्त्ववित् युक्तः आदौ कर्मयोगेन युक्तः पश्चात् अंतःकरणशुद्धिद्वारा तत्त्वविद्भूत्वा इति मन्येत । इतीति किम् । अहं किंचित् किमपि नैव करोमि किं कुर्वन् चक्षुरिंद्रियेण पश्यन् पश्यतीति पश्यन् श्रोत्रेंद्रियेण शृण्वन् शृणो-तीति शृण्वन् त्वगिंद्रियेण स्पृशन् स्पृशतीति स्पृशन् घ्राणेंद्रियेण जिघ्रन् जिघ्रति अवघ्राणं करोतीति जिघ्रन् रसनेंद्रियेण अश्नन् अश्नाति भक्षयतीति अश्नन् चरणेंद्रियेण गच्छन् गच्छतीति गच्छन् बुद्धिगुणेन स्वपन् स्वपति निद्रां करोतीति स्वपन् प्राणवायुना श्वसन् श्वसतीति श्वसन् ॥ ८ ॥ वागिंद्रियेण प्रलपन् प्रलपतीति पायूपस्थगुणेन विसृ-जन् विसृजति त्यागं करोतीति हस्तेंद्रियेण गृह्णन् गृह्णातीति कूर्माख्य-प्राणेन उन्मिषन् उन्मिषति उन्मीलनं करोतीति निमिषन् निमिषति निमीलनं करोतीति सर्वान् इंद्रियव्यापारान् कुर्वन् सन् इंद्रियाणि

इंद्रियाणींद्रियार्थेषु वर्तंत इति धारयन् ॥ ९ ॥
ब्रह्मण्याधाय कर्माणि संगं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवांभसा ॥ १० ॥
कायेन मनसा बुद्ध्या केवलैरिंद्रियैरपि ।
योगिनः कंर्म कुर्वंति संगं त्यक्त्वात्मशुद्धये ॥११॥
युक्तः कर्मफलं त्यक्त्वा शांतिमाप्नोति नैष्ठिकीम् ।

कर्मेंद्रियाणि ज्ञानेंद्रियाणि च इंद्रियार्थेषु स्वस्वविषयेषु वर्त्तंते प्रवर्त्तंते इति एवंप्रकारेण धारयन् धारयतीति धारयन् साक्षित्वेन आत्मानं निर्व्यापारं बुद्ध्या निश्चित्य 'किंचिदपि अहं न करोमि' इति मन्यते सः पापैः न लिप्यते ॥ ९ ॥ ब्रह्मणीति । यः प्रारब्धपुण्योपचयवान् निष्कामः कर्माणि वर्णाश्रमकर्माणि ब्रह्मणि परमेश्वरे आधाय समर्प्य संगं फलाभिलाषं त्यक्त्वा करोति ईश्वरोद्देशेन करोति सः मदर्थं कर्म कर्ता पापेन आत्मसाक्षात्कारप्रतिबंधकेन कर्मणा न लिप्यते न लिप्तो भवति । यथा अंभसि विद्यमानमपि पद्मपत्रं पद्मस्य कमलस्य पत्रं दलं अंभसा उदकेन न लिप्यते ॥ १० ॥ कायेनेति । योगिनः केचित् पुण्यारब्धप्राप्तदेहाः कायेन स्नानादिना चेत्यपरं मनसा ध्यानादिना चेत्यपरं बुद्ध्या आत्मानात्मतत्त्वनिश्चयात्मिकया केवलैः संकल्पाभिनिवेशरहितैः इंद्रियैः संगं कर्त्तृत्वाभिनिवेशं फलाऽऽसंगं त्यक्त्वा आत्मशुद्धये आत्मनः अज्ञानकार्यकर्त्तृत्वादिना कलुषितस्य मनसः शुद्धिः आत्मशुद्धिः तस्यै केवलं कर्म कुर्वंति ॥११॥ युक्त इति । युक्तः समाहितमनाः कर्म कर्माभिनिवेशं चेत्यपरं फलं अथवा कर्मफलं त्यक्त्वा कर्माणि कुर्वन् सन् नैष्ठिकीं निष्ठारूपां शांतिं

अयुक्तः कामकारेण फले सक्तो निबद्धयते ॥ १२ ॥
सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।
नवद्वारे पुरे देही नैव कुर्वन् न कारयन् ॥ १३ ॥
न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।

मोक्षाख्यां शांतिं आप्नोति प्राप्नोति । अयुक्तस्य अनर्थं दर्शयति । अयुक्तः बहिर्मुखः विक्षिप्तचित्तः कामकारेण 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति'— इति प्रलोभेन अथवा कामं मनोरथं कारयतीति कामकारः तेन अर्थवादवाक्यसमूहेन फले सक्तः सन् आसक्तः सन् निबद्धयते नितरां पुनः पुनः स्वर्गमृत्युजन्मप्राप्तिपाशेन बद्धयते ॥ १२ ॥ सर्वकर्माणीति । वशी वशः इंद्रियनिग्रहः अस्यास्तीति वशी स्वरूपसाक्षात्कारेण जितचित्तः सर्वकर्माणि नित्यनैमित्तिककाम्यनिषिद्धानि चतुर्विधानि कर्माणि मनसा सह वासनासहितानि कर्माणि संन्यस्य विधिना परित्यज्य पुरे नगरवत् अहंभावशून्ये देहे सुखं यथास्यात्तथा आस्ते अवतिष्ठते । अतः हेतोः तस्य देहस्य आध्यासिकसंबंधेन देही देहोस्यास्तीति देही एतादृशः भिक्षुः परमहंसः नैव कुर्वन् 'अहं नैव करोमि' इति आत्मदृष्ट्या आत्मानं मन्यते न कारयन् न कारयति साक्षित्वेन वर्त्तते । कथंभूते पुरे । नवद्वारे नव द्वाराणि यस्य तत् नवद्वारं तस्मिन् नेत्रे नासिके कर्णौ मुखं इति सप्त शिरोगतानि अधोभागे द्वे पायूपस्थरूपे एवं नव द्वाराणि ॥१३॥ न कर्तृत्वमिति । प्रभुः ईश्वरः लोकस्य प्राणिसमूहस्य कर्तृत्वं कर्तृभावं कर्माणि इष्टकर्माणि न सृजति नोत्पादयति कर्मफलसंयोगमपि कर्मणः फलं कर्मफलं कर्मफलस्य संयोगः कर्मफलसंयोगः तं न सृजति नोत्पादयति । किं तु स्वभावस्तु प्राचीनसंस्कारस्तु प्रवर्त्तते कर्तृ-

न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥
नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यंति जंतवः ॥ १५ ॥
ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥
तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।

त्वादिरूपेण प्रवर्त्तनं करोति। यस्य पुरुषस्य विवेकज्ञानं अस्ति सोपि ईश्वरात् भिन्नो न भवति ॥ १४ ॥ नादत्त इति । विभुः विविधं भवति यस्मादिति विभुः परमात्मा प्रत्यग्रूपः कस्यचित् जीवस्य पापं चेत्यपरं सुकृतं पुण्यं नैवादत्ते नैव गृह्णाति अज्ञानेन अन्यथा ज्ञानेन ज्ञानं 'अहं प्रत्यग्ब्रह्म' इति विवेकज्ञानं आवृतं आच्छादितम् । जंतवः जननशीलाः जंतवः अविद्यावृतांतःकरणाः प्राणिनः तेन स्वात्मानं विस्मृत्य अहं करोमीति वृथाभिमानेन मुह्यंति मोहं प्राप्नुवंति ॥ १५ ॥ ज्ञानेनेति । येषां श्रवणमननादिसाधनसंपन्नानां भगवदनुगृहीतानां मुमुक्षूणां ज्ञानेन आत्मसाक्षात्कारद्योतकेन ज्ञानेन आत्मनः स्वरूपविषयस्य तत् आवरणविक्षेपशक्तिमत् अज्ञानं अविद्यामायादिशब्दवाच्यं नाशितं बाधितं प्रत्यग्भावं नीतं तेषां ज्ञानिनां तत् प्रसिद्धं ज्ञानं आदित्यवत् सूर्य इव परं ब्रह्म प्रकाशयति तद्रूपेण भवति । यथा आदित्यः मंडलं प्रकाशयन् सन् जगत् प्रकाशयति तथा तेषां परमहंसानां ज्ञानं वाक्यार्थज्ञानवर्तीं बुद्धिं स्वरूपेण प्रकाशयत् सत् त्रैलोक्यमपि परब्रह्मरूपेण दर्शयति ॥१६॥ तद्बुद्धय इति । ते ज्ञानिनः अपुनरावृत्तिं पुनरावृत्तिरहितां जन्ममरणशून्यां

गच्छंत्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥
विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पंडिताः समदर्शिनः ॥ १८ ॥
इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।

स्वरूपावस्थां गच्छंति प्राप्नुवंति । कथंभूताः ते । तद्बुद्धयः तस्मिन्नेव ज्ञानरूपे ब्रह्मण्येव बुद्धिः ब्रह्मैवेति निश्चयात्मिका येषां ते तद्बुद्धयः । पुनः कथंभूताः ते । तदात्मानः तस्मिन्नेव आत्मा संकल्पविकल्परहितं मनः येषां ते तदात्मानः । पुनः कथंभूताः ते । तन्निष्ठाः तस्मिन् ज्ञानरूपे ब्रह्मण्येव निष्ठा चित्तवृत्तिः येषां ते । पुनः कथंभूताः ते । तत्परायणाः तदेव परं श्रेष्ठं अयनं आलंबनं येषां ते तत्परायणाः । पुनः कथंभूताः ते । ज्ञाननिर्धूतकल्मषाः ज्ञानेन स्वरूपसाक्षात्कारेण निर्धूतं नाशितं कल्मषं पुण्यपापात्मकं कर्म येषां ते ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥ विद्याविनयसपन्न इति । ब्राह्मणे सत्त्वगुणात्मके सर्वोत्तमे तथा श्वपाके शुनः श्वानान् पचतीति श्वपाकः तस्मिन् श्वपाके चांडाले कर्मतः वैषम्ये चेत्यपरं गवि धेनौ तथा हस्तिनि गजे तथा शुनि श्वाने जातितः वैषम्ये ये पुरुषाः समदर्शिनः समं ब्रह्म द्रष्टुं शीलं येषां ते समदर्शिनः संति ते पंडिताः शास्त्रतात्पर्यबुद्धिमंतः ज्ञेयाः । कथंभूते ब्राह्मणे । विद्याविनयसंपन्ने विद्या वेदतात्पर्यज्ञानं च विनयः गर्वराहित्यं विद्याविनयौ विद्याविनयाभ्यां संपन्नः आढ्यः विद्याविनयसंपन्नः तस्मिन् । यथा गंगोदके तडागे सुरायां मूत्रे प्रतिबिंबितस्य सूर्यस्य न गुणदोषसंबंधः तथा ब्राह्मणोपि चिदाभासद्वारा प्रतिबिंबितस्य सर्वत्र समदृष्ट्यैव रागद्वेषराहित्येन जीवन्मुक्तिं अनुभवति ॥ १८ ॥ इहैवेति । इहैव जीवनदशायामेव तैः समद-

निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥१९॥
न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम्।
स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ २० ॥
बाह्यस्पर्शेष्वसक्तात्मा विंदत्यात्मनि यत्सुखम्।

र्शिभिः पंडितैः सर्गः सृज्यत इति सर्गः प्रपंचः संसारः जितः निरस्तः अतिक्रांतः। कैः। येषां समदर्शिनां मनः अंतःकरणं साम्ये समस्य ब्रह्मणः भावः तद्गतधर्मः साम्यं तस्मिन् साम्ये ब्रह्मभावे स्थितं तद्रूपेण निश्चलां अवस्थां प्राप्तम्। हि यस्मात् ब्रह्म निर्दोषं सर्वविकारशून्यं कूटस्थं एकं अस्ति। तस्मात् कारणात् ते समदर्शिनः ब्रह्मणि कूटस्थे स्थिताः ब्रह्मरूपेण संवृत्ताः ब्रह्मभावं प्राप्ताः ॥ १९ ॥ न प्रहृष्येदिति। ब्रह्मवित् ब्रह्म वेत्ति जानातीति ब्रह्मवित् अपरोक्षसाक्षात्कारवान् ब्रह्मणि स्थितः सन् ब्रह्मणैक्यं गतः सन् प्रियं अनुकूलं प्राप्य न प्रहृष्येत् न हर्षितो भवति चेत्यपरं अप्रियं प्रतिकूलं प्राप्य नोद्विजेत् उद्वेगं न प्राप्नुयात्। कथंभूतः ब्रह्मवित्। स्थिरबुद्धिः स्थिरा निश्चला बुद्धिर्यस्य सः स्थिरबुद्धिः बुद्धिस्थैर्येण विवेकज्ञानवान्। पुनः कथंभूतः ब्रह्मवित्। असंमूढः सम्यक् मूढः संमूढः संमूढः न भवति इति असंमूढः निवृत्तमोहः ॥२०॥ बाह्यस्पर्शेष्विति। यः पुरुषः बाह्यस्पर्शेषु इंद्रियाणि स्पृशंति ते स्पर्शाः बाह्याः आत्मनो बहिर्भूताश्च ते स्पर्शाश्च शब्दादिविषयाः बाह्यस्पर्शाः तेषु बाह्यस्पर्शेषु असक्तात्मा सन् असक्तः निस्पृहः आत्मा चित्तं यस्य सः तथोक्तः सन् आत्मनि अंतःकरणे यत् प्रसिद्धं सुखं नित्यानंदं विंदति जीवन्मुक्तदशायां लभते सः तृष्णाशून्यः पुरुषः ब्रह्मयोगयुक्तात्मा सन् ब्रह्मणि परमात्मनि योगः समाधिः ब्रह्मयोगः ब्रह्मयो-

स ब्रह्मयोगयुक्तात्मा सुखमयक्षमश्नुते ॥ २१ ॥
ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यंतवंतः कौंतेय न तेषु रमते बुधः ॥ २२ ॥
शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात् ।

गेन युक्तः ऐक्यं प्राप्तः आत्मा अंतःकरणं यस्य सः ब्रह्मयोगयुक्तात्मा अक्षयं न विद्यते क्षयो नाशः यस्य तत् तथोक्तं सुखं निरतिशयं आनंदं अश्नुते व्याप्नोति सुखानुभवरूप एव सर्वदा भवति ॥ २१ ॥ ये हीति । हि यस्मात् कारणात् ये प्रसिद्धाः संस्पर्शजाः संस्पर्शात् विषयेंद्रियाणां संस्पर्शसंयोगात् जाताः संस्पर्शजाः भोगाः क्षुद्रसुखलवानुभवाः सुखविशेषाः वर्त्तंते अस्मिँल्लोके परलोके च ते विषयभोगाः ब्रह्मलोकपर्यंतं दुःखयोनय एव दुःखं योनिः कारणं येषां ते दुःखयोनयः जन्ममरणद्वारा संसारप्रदत्वेन दुःखहेतवः संति । हे कौंतेय ! हे कुंतीपुत्र ! बुधः विवेकज्ञानवान् तेषु संस्पर्शजेषु भोगेषु न रमते प्रीतिं न करोति । कथंभूताः भोगाः । आद्यंतवंतः आदिः उत्पत्तिः च अंतः विनाशः आद्यंतौ अथवा आदिः विषयेंद्रियसंयोगः च अंतः विषयेंद्रियवियोगः विद्येते येषां ते आद्यंतवंतः ॥२२॥ शक्नोतीति । यः नरः इहैव अस्मिन् देहे एव शरीरविमोक्षणात् शरीरस्य देहस्य विमोक्षणं शरीरविमोक्षणं तस्मात् प्राक् मरणात्पूर्वं कामक्रोधोद्भवं कामः इष्टविषयाभिलाषः च क्रोधः तद्विनाशेन गात्रकंपनादिरूपः कामक्रोधौ कामक्रोधाभ्यां उद्भवो यस्य सः कामक्रोधोद्भवः तं वेगं आवेशं सोढुं सहितुं शक्नोति विवेकेन परिमार्जनं कर्त्तुं समर्थो भवति सः नरः युक्तः योगी । चेत्यपरं सः नरः सुखी सुख-

कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः॥ २३ ॥

योंतःसुखोंतरारामस्तथांतर्ज्योतिरेव यः।
स योगी ब्रह्म निर्वाणं ब्रह्मभूतोऽधिगच्छति॥ २४ ॥

लभंते ब्रह्म निर्वाणमृषयः क्षीणकल्मषाः।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः॥ २५ ॥

मस्यास्तीति सुखी परमानंदानुभववान्। तथा चोक्तं वसिष्ठेन—'प्राणे गते यथा देहः सुखं दुःखं न विंदति। तथा चेत्प्राणयुक्तोपि स कैवल्याश्रयो भवेत्'—इति ॥२३॥ योंतःसुख इति। यः योगी परमहंसः अंतःसुखः अंतः आत्मन्येव सुखं यस्य सः तथा अंतरारामः अंतः आत्मनि आरामो क्रीडा यस्य सः वर्त्तते। चेत्यपरं यः योगी अंतर्ज्योतिरेव अंतः आत्मनि ज्योतिः दृष्टिः यस्य सः वर्त्तते। एवशब्देन विषयेषु न सुखं न क्रीडा न दृष्टिः सः प्रसिद्धः योगी ब्रह्मभूतः सन् ब्रह्मतादात्म्यमाप्तः सन् ब्रह्म बृहत् व्यापकं अधिगच्छति प्राप्नोति। कथंभूतं ब्रह्म। निर्वाणं वणतीति वाणं वणति निरंतरं जन्ममरणं गच्छति निर्गतं वाणं यस्मात् तत् तथोक्तम् ॥ २४ ॥ लभंत इति। ऋषयः वाक्यार्थज्ञानसंपन्नाः निर्वाणं ब्रह्म मोक्षं लभंते प्राप्नुवंति। कथंभूताः ऋषयः। क्षीणकल्मषाः क्षीणं विवेकज्ञानेन नाशितं कल्मषं जन्ममरणबीजभूतं अज्ञानं येषां ते। पुनः कथंभूताः ऋषयः। छिन्नद्वैधाः छिन्नं गतं द्वैधं संशयः येषां ते। पुनः कथंभूताः। यतात्मानः यतः संयतः आत्मा अंतःकरणं येषां ते। पुनः कथंभूताः ऋषयः। सर्वभूतहिते सर्वाणि च तानि भूतानि च सर्वभूतानि सर्वभूतानां हितं सर्वभूतहितं तस्मिन् रताः तत्पराः ॥२५॥

कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्म निर्वाणं वर्तते विदितात्मनाम् ॥२६॥
स्पर्शान् कृत्वा बहिर्बाह्यांश्चक्षुश्चैवांतरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यंतरचारिणौ ॥२७॥

कामक्रोधेति । यतीनां परमहंसानां अभितः विद्यमाने देहे चेत्यपरं मृते निर्वाणं जन्ममरणशून्यं ब्रह्म वर्त्तते । कथंभूतानां यतीनाम् । कामक्रोधवियुक्तानां कामश्च क्रोधश्च कामक्रोधौ कामक्रोधाभ्यां वियुक्ताः विधुराः कामक्रोधवियुक्ताः तेषाम् । पुनः कथंभूतानाम् । यतचेतसां यतं नियमितं चेतः अंतःकरणं येषां ते यतचेतसः तेषाम् । पुनः कथंभूतानां यतीनाम् । विदितात्मनां विदितः साक्षात्कृतः आत्मा कूटस्थः यैस्ते विदितात्मानः तेषाम् । एतेषां ब्रह्मनिष्ठानां देहांते एव मोक्षो नास्ति किं तु जीवतामपि मोक्षो वर्त्तते ॥ २६ ॥ स्पर्शानिति द्वाभ्याम् । यः योगी ब्रह्मभूतः सन् निर्वाणं ब्रह्म अधिगच्छति प्राप्नोति स एव योगी योगसंपन्नः सदा कालत्रयेपि मुक्तः अस्ति इति द्वितीयेनान्वयः । किं कृत्वा । बाह्यान् बहिर्भूतान् स्पर्शान् स्पृशंत इति स्पर्शाः तान् स्पर्शान् शब्दादिविषयान् वासनारूपेण हृदये प्रविष्टान् बहिः कृत्वा वासनात्यागेन दूरे त्यक्त्वा । चेत्यपरं पुनः किं कृत्वा । भ्रुवोः भ्रुकुट्योः अंतरे मध्यभागे आज्ञाचक्रोन्मुखं चक्षुः चक्षुषी कृत्वा । पुनः किं कृत्वा । प्राणापानौ प्राणश्च अपानश्च प्राणापानौ बहिरंतर्गमनशीलौ वायू समौ मंदगती यथा नासिकयोरेव तयोः व्यापारौ तथा समौ कृत्वा । कथंभूतौ प्राणापानौ । नासाभ्यंतरचारिणौ नासायाः नासिकायाः अभ्यंतरं मध्यभागः नासाभ्यंतरं नासाभ्यंतरे चरतः संचारं कुर्वतः तौ नासाभ्यंतरचा-

यतेंद्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥२८॥
भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।

रिणौ ॥ २७ ॥ अयं उपायभूतः योगः प्रदर्शितः सः योगः यस्य विद्यते तं योगिनं चतुर्भिः विशेषणैः विशिनष्टि विशिष्टं करोति । यतेंद्रियेति । कथंभूतः योगी । यतेंद्रियमनोबुद्धिः इंद्रियाणि च मनश्च बुद्धिश्च इंद्रियमनोबुद्धयः यताः नियमिताः इंद्रियमनोबुद्धयो यस्य सः यतेंद्रियमनोबुद्धिः इंद्रियाणि ज्ञानेंद्रियकर्मेंद्रियाणि मनः अंतःकरणं बुद्धिः व्यवसायात्मिका । पुनः कथंभूतः योगी । मुनिः मननशीलो मुनिः महावाक्यार्थश्रवणमननचिंतनशीलः । पुनः कथंभूतः मुनिः । मोक्षपरायणः मोक्षः परमानंदरूपः परं श्रेष्ठं अयनं अवलंबनविषयः यस्य सः । पुनः कथंभूतः मुनिः । विगतेच्छाभयक्रोधः इच्छा विषयाभिलाषः च भयं जन्ममरणभयं च क्रोधः इच्छाभयक्रोधाः विशेषेण स्वरूपचिंतनेन गताः स्वप्रवल्लीनाः इच्छाभयक्रोधाः यस्य सः स एव मुक्तः ॥२८॥ भोक्तारमिति। सः योगी मां परमेश्वरं ज्ञात्वा आत्मत्वेन अनुभूय शांतिं सर्वदुःखोपरमरूपां मोक्षाख्यां शांतिं ऋच्छति गच्छति प्राप्नोति । मद्रूपो भवतीत्यर्थः । कथंभूतं माम् । यज्ञतपसां यज्ञाः अश्वमेधादयः च तपांसि अनुष्ठानानि यज्ञतपांसि तेषां यज्ञतपसां स्वभक्तैः समर्पितानां भोक्तारं भुनक्तीति भोक्ता तं भोक्तारं स्वभक्तेच्छया फलदातारम् । पुनः कथंभूतं माम् । सर्वलोकमहेश्वरं महांश्चासौ ईश्वरश्च महेश्वरः सर्वे च ते लोकाश्च सर्वलोकाः सर्वलोकानां भूतभौतिकानां लोकानां महेश्वरः सर्वलोकमहे-

सुहृदं सर्वभूतानां ज्ञात्वा मां शांतिमृच्छति ॥२९॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु० संन्यासयोगो नाम पंचमोऽध्यायः ॥ ५ ॥

श्वरः तम् । पुनः कथंभूतं माम् । सर्वभूतानां सर्वाणि संपूर्णानि च तानि भूतानि प्राणिमात्राणि च सर्वभूतानि तेषां सर्वभूतानां सुहृदं सुष्ठु सर्वभूतहितं हरति प्रापयतीति सुहृद् तं सुहृदं यद्वा सुहृदं हितकर्त्तारं यद्वा सुहृदं अंतर्यामिणम् ॥ २९ ॥ ॥ ससंन्यासमिदं ज्ञानमुक्तं सख्युपदेशतः । तं नमामि परानंदमूर्तिं गोपालरूपिणम् ॥ १ ॥ इति श्रीबालबोधिन्यां श्रीमद्भगवद्गीताटीकायां पंचमोऽध्यायः ॥५॥ ॥



श्रीभगवानुवाच ।

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥१॥
यं संन्यासमिति प्राहुर्योगं तं विद्धि पांडव ।
न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥ २ ॥
आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।

श्रीः । जाते ज्ञानेपि संन्यासाद्विना ध्यानं न सिद्ध्यति । तदर्थं हरिणारब्धः षष्ठोऽध्यायः कृपालुना ॥१॥ अनाश्रित इति । हे अर्जुन! यः कर्मी कर्मफलं कर्मणां फलं कर्मफलं अनाश्रितः सन् कर्मफलाभिसंधिरहितः सन् कार्यं कर्त्तव्यतया शास्त्रेण विहितं योग्यं कार्यं कर्म नित्यनैमित्तिकं अग्निहोत्रादिकर्म करोति संपादयति । प्राप्तमनुष्ठानं संपादयतीत्यर्थः । सः कर्मी संन्यासी चेत्यपरं योगी मंतव्यः । चेत्यपरं निरग्निः निर्गतः अग्निर्यस्य सः निरग्निः । अग्निसाध्यश्रौतकर्मत्यागी न भवति इति शेषः। चेत्यपरं अक्रियः न विद्यते क्रिया कर्मानुष्ठानं यस्य सः अक्रियः अग्निनिरपेक्षस्मार्तक्रियात्यागी न भवति ॥१॥ यं संन्यासमिति । हे पांडव ! उभयलक्षणज्ञाः यं सर्वकर्मफलपरित्यागं संन्यासं इति एवंप्रकारेण प्राहुः कथयंति । त्वं योगं फलतृष्णाकर्तृत्वाभिमानयोः परित्यागेन विहितं कर्मानुष्ठानं तं संन्यासं विद्धि जानीहि । कश्चन कश्चिदपि पुरुषः असंन्यस्तसंकल्पः न संन्यस्ताः न त्यक्ताः संकल्पाः संकल्पमूलानि कर्माणि येन सः असंन्यस्तसंकल्पः योगी निश्चलांतःकरणः न भवति । हीति निश्चयेन ॥ २ ॥ आरुरुक्षोरिति । मुनेः मननशीलः मुनिः तस्य मुनेः कर्मफलतृष्णा-

योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥
यदा हि नेंद्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥
उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।

त्यागिनः कर्म शास्त्रविहितं अग्निहोत्रादि नित्यं भगवदर्पणबुद्ध्या कृतं कर्म कारणं योगारोहणे साधनं उच्यते कथ्यते । कथंभूतस्य मुनेः योगं अंतःकरणशुद्धिरूपं वैराग्यं आरुरुक्षोः आरोढुं इच्छतीति आरुरुक्षुः तस्य आरुरुक्षोः तस्यैव पूर्वं कर्मिणोपि योगारूढस्य योगं अंतःकरणशुद्धिरूपं वैराग्यं आरूढः प्राप्तः योगारूढः तस्य शमः सर्वकर्मसंन्यासः कारणं अनुष्ठेयतया ज्ञानपरिपाकसाधनं उच्यते कथ्यते ॥ ३ ॥ यदाहीति । यदा यस्मिन् चित्तसमाधानकाले योगी इंद्रियार्थेषु इंद्रियाणां अर्थाः इंद्रियार्थाः तेषु इन्द्रियार्थेषु शब्दादिविषयेषु चेत्यपरं कर्मसु नित्यनैमित्तिककाम्यलौकिकप्रतिषिद्धेषु नानुषज्जते तेषां मिथ्यात्वदर्शनेन अभिनिवेशं न करोति । हि यस्मात् कारणात् तदा तस्मिन् काले सर्वसंकल्पसंन्यासी सर्वे च ते संकल्पाश्च कर्ममूलसंकल्पाः सर्वसंकल्पाः सर्वसंकल्पान् संन्यसितुं त्यक्तुं शीलं स्वभावः यस्य सः सर्वसंकल्पसंन्यासी विद्वद्भिः पंडितैः योगारूढः योगं समाधिं आरूढः योगारूढः जीवब्रह्मणोः ऐक्यफलकारूढः उच्यते कथ्यते ॥ ४ ॥ उद्धरेदिति । मुमुक्षुः मोक्तुं इच्छतीति मुमुक्षुः एकाकी सहायशून्यो भूत्वा आत्मना स्वरूपज्ञानेन आत्मानं स्वं जीवं उद्धरेत् अंतर्बहिर्वासनारूपसंसारात् भिन्नं कुर्यात् । किंच आत्मानं नावसादयेत् अधोभागेन नयेत् विवेकद्वारा आत्मनः स्वस्य बंधुः हितकर्त्ता आत्मैव अस्ति तथा अविवेकद्वारा आत्मनः स्वस्य रिपुः शत्रुः

आत्मैव ह्यात्मनो बंधुरात्मैव रिपुरात्मनः ॥ ५ ॥
बंधुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६ ॥
जितात्मनः प्रशांतस्य परमात्मा समाहितः ।
शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥ ७ ॥
ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेंद्रियः ।

आत्मैव भवति नान्यः कश्चित् शत्रुः हितकारी च ॥ ५ ॥ बंधुरिति । येन विवेकज्ञानसंपन्नेन आत्मा कार्यकारणसंघातः आत्मनैव विवेकयुक्तेन मनसैव जितः वशीकृतः अहमिति साक्षात्कारं अपादितः संपादितः तस्य विवेकज्ञानसंपन्नस्य आत्मा स्वरूपं आत्मनः स्वस्य बंधुः हितकर्ता भवति । अनात्मनस्तु देहाभ्यासवतस्तु शत्रुवत् अपकारिवत् शत्रुत्वे शत्रोर्भावः शत्रुत्वं तस्मिन् आत्मैव स्वयमेव वर्त्तेत वर्त्तते ॥ ६ ॥ जितात्मन इति । जितात्मनः जितः आत्मा अंतःकरणं येन सः जितात्मा तस्य जितात्मनः प्राप्तसाक्षात्कारस्य अत एव प्रशांतस्य सर्वविकारातीतस्य परं केवलं आत्मा अंतःकरणं शीतोष्णसुखदुःखेषु शीतं च उष्णं च सुखं च दुःखं च शीतोष्णसुखदुःखानि तेषु तथा मानापमानयोः मानश्च अपमानश्च मानापमानौ तयोः मानापमानयोः समाहितः सम्यक् स्वरूपे आहितः तद्रूपेण अवस्थितः समाहितः । भवति इति शेषः । यद्वा परमात्मा सर्वाधिष्ठानभूतः समाहितः हृदि आविर्भूतः भवति ॥ ७ ॥ ज्ञानविज्ञानेति । योगी परमहंसपरिव्राजकः इति एवं प्रकारेण युक्तः योगारूढः विद्वद्भिः उच्यते कथ्यते । कथंभूतः योगी ।

युक्त इत्युच्यते योगी समलोष्टाश्मकांचनः ॥ ८ ॥
सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबंधुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥
योगी युंजीत सततमात्मानं रहसि स्थितः ।

ज्ञानविज्ञानतृप्तात्मा ज्ञानं च शास्त्रीयं विज्ञानं च अनुभवः ज्ञानविज्ञाने ज्ञानविज्ञानाभ्यां तृप्तः ब्रह्मानंदानुभवेन संतुष्टः आत्मा अंतःकरणं यस्य सः । पुनः कथंभूतः योगी कूटस्थः कूटवत् निश्चल इव तिष्ठतीति कूटस्थः संसारविकाररहितः । 'कूटं यंत्रे रते राशौ निश्चले लोहमुद्गरे' इति विश्वप्रकाशः । पुनः कथंभूतः योगी विजितेंद्रियः विशेषेण जितानि वशीकृतानि इंद्रियाणि येन सः । पुनः कथंभूतः योगी । समलोष्टाश्मकांचनः लोष्टं पांसुपिंडः च अश्मा पाषाणः च कांचनं सुवर्णं लोष्टाश्मकांचनानि समानि तुल्यानि लोष्टाश्मकांचनानि यस्य सः तथोक्तः ॥ ८ ॥ सुहृन्मित्रेति । सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबंधुषु सुहृत् प्रत्युपकारं अनपेक्ष्य पूर्वस्नेहसंबंधं विना हितकर्ता च मित्रं स्नेहोपकारकः च अरिः स्वकृतापकारं अनपेक्ष्य स्वभावक्रौर्येण अपकारकर्त्ता च उदासीनः विवदमानयोः उभयोः प्रेक्षकः च मध्यस्थः विवदमानयोः उभयोरपि हितैषी च द्वेष्यः स्वकृतापकारं अपेक्ष्य अपकारकर्ता च बंधुः संबंधेन उपकारकर्त्ता सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबंधवः तेषु सुहृन्मित्रार्युदासीनद्वेष्यबंधुषु साधुषु शास्त्रविहितकारिषु पापेषु शास्त्रप्रतिषिद्धकारिष्वपि समबुद्धिः समा ब्रह्मदर्शनेन एकरूपा बुद्धिर्यस्य सः समबुद्धिः विशिष्यते विशिष्टो भवति ॥ ९ ॥ योगीति । योगी योगारूढः रहसि गुहादौ योगप्रतिबंधकदुर्जनादिवर्जिते देशे स्थितः सन् उपविष्टः सन् सततं निरंतरं आत्मानं मनः

एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥
शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ ११ ॥
तत्रैकाग्र्यं मनः कृत्वा यतचित्तेंद्रियक्रियः ।

युंजीत एकाग्रं कुर्यात् । कथंभूतः योगी । एकाकी त्यक्तसर्वगृहपरिजनः । पुनः कथंभूतः योगी । यतचित्तात्मा चित्तं अंतःकरणं च आत्मा देहः चित्तात्मानौ यतौ संयतौ चित्तात्मानौ यस्य सः यतचित्तात्मा । पुनः कथंभूतः योगी । निराशीः वैराग्यदार्ढ्येन विगततृष्णः । पुनः कथंभूतः योगी । अपरिग्रहः न विद्यते परिग्रहो चित्तविक्षेपकरः यस्य सः अपरिग्रहः ॥ १० ॥ शुचाविति युग्मम् । इदं द्वाभ्यां श्लोकाभ्याम् । योगी योगारूढः आत्मनः स्वस्य स्थिरं निश्चलं आसनं आस्यते उपविश्यते यस्मिन् तत् आसनं शुचौ स्वभावेन संस्कारेण शुद्धे देशे जनसमुदायरहिते निर्भयगंगातटगुहादौ समे स्थाने प्रतिष्ठाप्य स्थापयित्वा तत्र तस्मिन्निति तत्र आसने उपविश्य उपवेशनं कृत्वा ऐकाग्र्यं विक्षेपरहितं मनः अंतःकरणं कृत्वा आत्मविशुद्धये आत्मनः अंतःकरणस्य विशुद्धिः ब्रह्मसाक्षात्कारयोग्यता तस्यै आत्मविशुद्धये योगं उपायभूतं समाधिं युंज्यात् अभ्यसेत् । कथंभूतः योगी । यतचित्तेंद्रियक्रियः चित्तं अंतःकरणं चेत्यपरं इंद्रियाणि ज्ञानेंद्रियकर्मेंद्रियाणि चित्तेंद्रियाणां क्रियाः वृत्तयः चित्तेंद्रियक्रियाः यताः उपरताः चित्तेंद्रियक्रियाः यस्य सः तथोक्तः । कथंभूतं आसनम् । नात्युच्छ्रितं अति अत्यंतं उच्छ्रितं उच्चं न भवति तत् नात्युच्छ्रितम् । पुनः कथंभूतं आसनम् । नातिनीचं अति अत्यंतं नीचं न भवति तत् नातिनीचम् । पुनः कथंभूतं आसनम् । चैलाजिनकुशोत्तरं चैलं मृदुवस्त्रादि

उपविश्यासने युंज्याद्योगमात्मविशुद्धये ॥ १२ ॥
समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३ ॥
प्रशांतात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।

च अजिनं मृदुव्याघ्रचर्मादि चैलाजिने कुशेभ्यः दर्भेभ्यः उत्तरे चैलाजिने यस्मिन् तत् चैलाजिनकुशोत्तरम्—' कुशानां उपरि अजिनं अजिनस्य उपरि चैलं वस्त्रमिति ज्ञेयम् । 'पाठक्रमादर्थक्रमो बलीयान्'—इति न्यायात् ॥११-१२॥ सममिति प्रशांतेति द्वाभ्याम् । इदमपि युग्मम् । योगी आसनारूढः स्थिरो भूत्वा दृढप्रयत्नो भूत्वा स्वं स्वकीयं नासिकाग्रं नासिकायाः अग्रं नासिकाग्रं संप्रेक्ष्य अवलोक्य नासिकाग्रावलोकनं तु दृष्टेः स्थिरतायैव न तु योगः मनसः स्थैर्याभावात् योगो न सिद्ध्यति । चेत्यपरं दिशः अनवलोकयन् सन् न अवलोकयतीति अनवलोकयन् आसीत तिष्ठेत । कथंभूतः योगी । समं अवक्रं कायशिरोग्रीवं कायः शरीरमध्यः च शिरः मस्तकः च ग्रीवा कायशिरोग्रीवम् । प्राण्यंगत्वादेकवद्भावः । मूलाधारादारभ्य मूर्ध्नपर्यंतं अचलं अकंपं धारयन् धारयतीति धारयन् । पुनः कथंभूतः योगी । प्रशांतात्मा प्रकर्षेण शांतः रागादिदोषरहितः आत्मा अंतःकरणं यस्य सः । पुनः कथंभूतः योगी । विगतभीः विगता गता भीः सर्वकर्मपरित्यागे युक्तत्वायुक्तत्वशंका यस्य सः विगतभीः । पुनः कथंभूतः योगी । ब्रह्मचारिव्रते ब्रह्मचारिणां व्रतं ब्रह्मचर्यगुरुशुश्रूषाभिक्षाभोजनादिव्रतं ब्रह्मचारिव्रतं तस्मिन् स्थितः । पुनः कथंभूतः । मनः अंतःकरणं संयम्य विषयाकारवृत्तिशून्यं कृत्वा युक्तः. योगयुक्तः । पुनः कथंभूतः । मच्चित्तः मयि परमेश्वरे परमात्मनि सगुणे अथवा निर्गुणे

मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥१४॥
युंजन्नेवं सदात्मानं योगी नियतमानसः।
शांतिं निर्वाणपरमां मत्संस्थामधिगच्छति॥ १५ ॥
नात्यश्नतस्तु योगोस्ति न चैकांतमनश्नतः।

चित्तं अंतःकरणं यस्य सः मच्चित्तः। पुनः कथंभूतः योगी। मत्परः अहमेव परो परमानंदरूपत्वात् परः पुरुषार्थो यस्य सः मत्परः एवं विषयाकारवृत्तिनिरोधेन भगवदेकाकारचित्तवृत्तियुक्तः संप्रज्ञातसमाधिं आसीत यथाशक्ति उपविशेत। न तु स्वेच्छया उत्तिष्ठेत। इयं भाष्यकाराणां मधुसूदनचिदानंदश्रीधराणां व्याख्या॥ १४॥ युंजन्नेवमिति। योगी योगोऽस्यास्तीति योगी एवं उक्तप्रकारेण सदा अनवरतं आत्मानं आत्मभासयुक्तं मनः युंजन् सन् युंजतीति युंजन् अभ्यासवैराग्याभ्यां समाहितं कुर्वन् सन् शांतिं मोक्षाख्यां शांतिं अधिगच्छति प्राप्नोति। कथंभूतः योगी। नियतमानसः नियतं निरुद्धं मानसं मनः येन सः यद्वा नियताः निरुद्धाः मानसाः वृत्तिरूपविकाराः येन सः। कथंभूतां शांतिम्। निर्वाणपरमां वगति दुर्गंधं वाति तद्वाणं निर्गतं वाणं शरीरादिप्रपंचजातं यस्मात् तत् निर्वाणं निर्वाणं ब्रह्म परमं प्रकृष्टं यस्यां सा निर्वाणपरमा ताम्। पुनः कथंभूताम्। मत्संस्थां तिष्ठतीति स्था सम्यक् स्था संस्था मयि संस्था मत्संस्था तां मत्संस्थां मद्रूपाम्॥ १५॥ नात्यश्नत इति। हे अर्जुन! अत्यश्नतः अशनं नियमितभोजनं अतीत्य अतिक्रम्य अश्नाति भक्षयतीति अत्यश्नन् तस्य अत्यश्नतः अधिकं भुंजानस्य योगः नास्ति न सिद्ध्यति चेत्यपरं एकांतं अत्यंतं अनश्नतः अशनं भक्षणं न करोतीति अनश्नन् तस्य अनश्नतः अत्यंतं अभुंजानस्य निराहारस्य योगः न सिद्ध्यति

न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन॥ १६ ॥
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७ ॥
यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।

चेत्यपरं अतिस्वप्नशीलस्य अत्यंतं स्वप्ने निद्रायां शीलं स्वभावो यस्य सः अतिस्वप्नशीलः तस्य योगः न भवति चेत्यपरं जाग्रतः जागर्तीति जाग्रन् तस्य जाग्रतः अत्यंतजागरणशीलस्य योगः न भवति ॥१६॥ युक्ताहार इति। योगिनः योगोस्यास्तीति योगी तस्य योगिनः योगयुक्तस्य योगः स्वाभिलषितयोगः दुःखहा दुःखं योगवैकल्पदुःखं अथवा जन्ममरणदुःखं हंति निवर्त्तयतीति दुःखहा भवति। कथंभूतस्य योगिनः। युक्ताहारविहारस्य आद्रियत इति आहारः विहरत इति विहारः आहारः अन्नं च विहारः संचारः आहारविहारौ युक्तौ परिमितौ योगानुकूलौ योगशास्त्रोक्तौ आहारविहारौ यस्य सः युक्ताहारविहारः तस्य। पुनः कथंभूतस्य। कर्मसु कर्तव्येषु युक्तचेष्टस्य युक्ता परिमिता चेष्टा व्यापारः यस्य सः युक्तचेष्टा तस्य। पुनः कथंभूतस्य योगिनः। युक्तस्वप्नावबोधस्य स्वप्नः निद्रा च अवबोधः जागरः स्वप्नावबोधौ युक्तौ परिमितौ स्वप्नावबोधौ यस्य सः युक्तस्वप्नावबोधः तस्य युक्तस्वप्नावबोधस्य ॥ १७ ॥ यदेति। यदा यस्मिन् काले विनियतं विशेषेण नियतं नियमितं विनियतं सर्वशून्यतां आपादितं चित्तं विगतरजस्तमस्कं अंतःकरणं आत्मन्येव आत्मनि स्वाधिष्ठाने अवतिष्ठते निश्चलं भवति तदा तस्मिन् सर्ववृत्तिनिरोधकाले युक्तः समाहितचित्तः। विद्वद्भिरिति शेषः। इति एवं प्रकारेण उच्यते कथ्यते। कथंभूतः युक्तः। सर्वकामेभ्यः सर्वे च ते कामाश्च

निस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥१८॥
यथा दीपो निवातस्थो नेंगते सोपमा स्मृता ।
योगिनो यतचित्तस्य युंजतो योगमात्मनः ॥१९॥
यत्रोपरमते चित्तं निरुद्धं योगसेवया ।

सर्वकामाः तेभ्यः सर्वकामेभ्यः दोषदर्शनेन दृष्टादृष्टविषयेभ्यः निस्पृहः निर्गता गता स्पृहा तृष्णा यस्य सः ॥१८॥ यथा दीप इति । यथा चलनहेत्वभावात् दीपः निवातस्थःसन् निर्गतः गतः वातः वायुः यस्मात्सः निवातः निवाते वायुरहितदेशे तिष्ठतीति निवातस्थः न इंगते न चलति सा प्रसिद्धा उपमा दृष्टांतः योगिनः योगयुक्तस्य योगज्ञैः स्मृता चिंतिता । कथंभूतस्य योगिनः । यतचित्तस्य यतं नियतं चित्तं अंतःकरणं यस्य सः यतचित्तः तस्य यतचित्तस्य निरुद्धसर्वचित्तवृत्तेः । पुनः कथंभूतस्य आत्मनः । आत्मविषयं योगं युंजतः युंजतीति युंजन् तस्य युंजतः अभ्यसतः ॥ १९ ॥ यत्रेति । पंडितः तं चित्तवृत्तिनिरोधं योगसंज्ञितं संज्ञा संजाता यस्य सः संज्ञितः योगेन संज्ञितः चिह्नितः योगसंज्ञितः तं विद्यात् जानीयात् इति चतुर्थेनान्वयः । यत्र यस्मिन् परिणामे चित्तं अंतःकरणं योगसेवया योगस्य सेवा योगसेवा तया योगाभ्यासेन निरुद्धं सत् रुद्धं सत् उपरमते आत्मनिष्ठं भवति । चेत्यपरं यत्र यस्यां अवस्थायां आत्मना स्वरूपेण आत्मानं प्रपंचं पश्यन् पश्यतीति पश्यन् सन् आत्मनि स्वरूपे तुष्यति तुष्टिं प्राप्नोति । अयं चिदानंदाभिप्रायः । अथवा यत्र यस्मिन् परिणामे आत्मना शुद्धसत्त्वमात्रेण अंतःकरणेन आत्मानं प्रत्यक् चैतन्यं सच्चिदानंदघनं अनंतमद्वितीयं पश्यन् वेदांतप्रमाणजन्या वृत्त्या साक्षात्कुर्वन् आत्मन्येव परमानंदघने तुष्यति

यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ २० ॥
सुखमात्यंतिकं यत्तद्बुद्धिग्राह्यमतींद्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥२१॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिँस्थितो न दुःखेन गुरुणापि विचाल्यते ॥२२॥
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।

संतोषं प्राप्नोति । देहेंद्रियसंघाते न संतोषं प्राप्नोति । अयं मधुसूदनश्रीधरयोरभिप्रायः ॥ २० ॥ सुखमिति । किं च यत्र यस्मिन् अवस्थाविशेषे यत् सुखं परमानंदरूपं अस्ति तत् सुखं योगीवेत्ति अनुभवति । कथंभूतं सुखम् । आत्यंतिकं अंतं अतिक्रम्य वर्त्तत इति अत्यंतं अत्यंतमेव आत्यंतिकं अनंतं निरतिशयं ब्रह्मस्वरूपम् । पुनः कथंभूतं सुखम् । बुद्धिग्राह्यं बुद्ध्या रजस्तमोमलरहितया सत्त्वमात्रवाहिन्या ग्रहीतुं योग्यं ग्राह्यम् । पुनः कथंभूतं सुखम् । अतींद्रियं इंद्रियाणि अतिक्रम्य वर्त्तत इति अतीन्द्रियं विषयेंद्रियसंबंधातीतं चेत्यपरं अयं विद्वान् यत्र यस्मिन् सुखे स्थितः सन् स्थितिं प्राप्तः सन् तत्त्वतः आत्मस्वरूपात् नैव चलति पराग्वृत्तिर्न भवति ॥२१॥ यं लब्ध्वेति । किं च योगी यं परमानंदरूपं लाभं लब्ध्वा प्राप्य ततः तस्मात् परमानंदलाभात् परं अपरं लाभं अधिकं उत्कृष्टं न मन्यते । योगी यस्मिन् निरतिशयानंदे ब्रह्मणि स्थितः सन् तादात्म्यं प्राप्तः सन् गुरुणापि महतापि दुःखेन दुष्टत्वेन स्वरूपं खनतिं बहिर्निःसारयति अथवा पृथक्करोति इति दुःखं दुःखेन जन्ममरणदुःखेन न विचाल्यते स्वरूपात् न प्रचलितो भवति ॥ २२ ॥ तं विद्यादिति । पंडितः तं चित्तवृत्तिनिरोधं योगसंज्ञितं योगेन संज्ञा संजाता

स निश्चयेन योक्तव्यो योगो निर्विण्णचेतसा ॥२३॥

यस्य सः योगसंज्ञितः तं योगसंज्ञितं योगचिह्नितं विद्यात् जानीयात्। कथंभूतं तं चित्तवृत्तिनिरोधम्। दुःखसंयोगवियोगं दुःखेन संयोगः दुःखसंयोगः दुःखसंयोगेन वियोगो यस्य सः दुःखसंयोगवियोगः तम्। महाफलः योगः चित्तवृत्तिनिरोधरूपः योगः अनिर्विण्णचेतसा अनिर्विण्णं निर्वेदरहितं च तत् चेतः अंतःकरणं च अनिर्विण्णचेतः तेन अनिर्विण्णचेतसा निश्चयेन शास्त्राचार्योपदेशजनितेन योक्तव्यः अभ्यसनीयः अनिर्विण्णचेतसा एतावता कालेन योगः न सिद्धः किं अतः परं कष्टं इत्यनुतापः निर्वेदः तद्रहितेन चेतसा इह जन्मनि जन्मांतरे वा योगः सिद्धयति त्वरया किं इत्येवं धैर्ययुक्तेन मनसा तदेतत् गौडपादाः उदाजह्रुः उदाहरणं कथयामासुः। 'उत्सेक उदधेर्यद्वत् कुशाग्रेणैव बिंदुना'। तद्वत् मनसो निग्रहः उत्सेकः शोषणाध्यवसायेन जलोद्धरणम्। अत्र संप्रदायविदः आख्यायिकां आचक्षंते—'कस्यचित् पक्षिणः अंडानि तीरस्थानि तरंगवेगेन समुद्रः उपजहार। स च पक्षी समुद्रं शोषयिष्याम्येवेति प्रवृत्तः। स्वमुखाग्रेण एकैकं जलबिंदुं उपरि चिक्षेप। तदा च बहुभिः पक्षिभिः बंधुवर्गैः वार्यमाणोपि नैवोपरराम। यदृच्छया तत्र आगतेन नारदेन निवारितोपि अस्मिन् जन्मनि जन्मांतरे वा येन केनाप्युपायेन समुद्रं शोषयिष्याम्येवेति प्रतिजज्ञे। ततश्च दैवानुकूल्यात् कृपालुर्नारदो गरुडं तत्साहाय्याय प्रेषयामास। समुद्रस्त्वज्ज्ञातीयद्रोहेण त्वामवमन्यते इति वचनेन ततो गरुडपक्षवातेन शुष्यन् समुद्रो भीतस्तान्यंडानि तस्मै पक्षिणे ददौ—' इति एवं अखेदेन मनोनिरोधे परमधर्मे प्रवर्तमानं योगिनं ईश्वरः पक्षिण इव अनुगृह्णाति। ततः तस्य योगिनः अभिमतं सिद्धयतीति भावः। इत्ययं मधुसूदनाभिप्रायः ॥ २३ ॥

संकल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेंद्रियग्रामं विनियम्य समंततः ॥ २४ ॥
शनैः शनैरुपरमेत् बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिंतयेत् ॥२५॥
यतो यतो निश्चरति मनश्चंचलमस्थिरम् ।

संकल्प इति । किंच एवं वक्ष्यमाणप्रकारेण योगं अभ्यसमानं योगिनं उत्तमं सुखं उपैति—इति चतुर्थेनान्वयः । योगप्राप्तौ साधनानि अहं योगी सर्वान् ब्रह्मलोकपर्यंतान् संपूर्णान् अशेषतः सवासनान् कामान् काम्यंते इति कामाः काम्यंते इच्छंते तान् कामान् मनोरथान् त्यक्त्वा समंततः आसमंताद्भागे इंद्रियग्रामं इंद्रियाणां ग्रामः इंद्रियग्रामः तं इंद्रियग्रामं बाह्यांतःकरणसमुदायं मनसा सह विनियम्य विशेषेण नियम्य बुद्ध्या निश्चयवृत्त्या शनैः शनैः गुरूपदिष्टमार्गेण मंदं मंदं उपरमेत् उपरमं कुर्यात् । उप स्वरूपसमीपे रमं रमयतीति रमः तं रमं प्रीतिं संपादयेत् । कथंभूतान् कामान् । संकल्पप्रभवान् संकल्पात् प्रभवो येषां ते संकल्पप्रभवाः तान् । कथंभूतया बुद्ध्या धृतिगृहीतया धृत्या धैर्येण गृहीता धृतिगृहीता तया । किंच योगी मनः अंतःकरणं आत्मसंस्थं तिष्ठति तत् स्थं सम्यक् स्थं संस्थं आत्मन्येव संस्थं आत्मसंस्थं कृत्वा किंचिदपि अन्यदपि न चिंतयेत् ॥२५॥ यत इति । मनः अंतःकरणं यतः यतः यस्मात् यस्मात् शब्दादिविषयात् चंचलं सत् विक्षिप्तं सत् निश्चरति समाधिविरोधिनीं वृत्तिं उत्पादयति तथा लयहेतूनां निद्राप्रमादीनां मध्ये यतः यतः निमित्तात् मनः स्थिरं सत् लयाभिमुखं सत् निश्चरति समाधिविरोधिनीं निद्राख्यां वृत्तिं उत्पादयति ततः ततः विक्षेपनिमित्तात्

ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २६ ॥
प्रशांतमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शांतरजसं ब्रह्मभूतमकल्मषम् ॥ २७ ॥
युंजन्नेवं सदात्मानं योगी विगतकल्मषः ।

चेत्यपरं लयनिमित्तात् एतत् मनः नियम्य निर्वृत्तिकं कृत्वा आत्मन्येव स्वप्रकाशपरमानंदघने वशं नयेत् निरुंध्यात् । यथा न विक्षिप्येत न लीयेत तथैव प्रविलापयेत् ॥ २६ ॥ प्रशांतमनसमिति । उत्तमं निरतिशयं सुखं ब्रह्मसुखं एनं प्रस्तुतं योगिनं उपैति प्राप्नोति प्रत्यग्रूपेण आविर्भवति । हि इति निश्चयेन । कथंभूतं योगिनम् । प्रशांतमनसं प्रकर्षेण शांतं उपशमं गतं मनो यस्य सः प्रशांतमनाः तम् । पुनः कथंभूतं योगिनम् । शांतरजसं शांतं रजः रजोगुणः यस्य सः शांतरजाः तं शांतरजसं विक्षेपशून्यम् । पुनः कथंभूतं योगिनम् । अकल्मषं न विद्यते कल्मषं लयहेतु तमः यस्य सः अकल्मषः तम् । अकल्मषं संसारहेतुधर्मादिरहितं लयशून्यम् । पुनः कथंभूतम् । ब्रह्मभूतं ब्रह्मैव सर्वमिति निश्चयेन समं वा ब्रह्मप्राप्तं जीवन्मुक्तमित्यर्थः । अयं मधुसूदनाभिप्रायः । कथंभूतं सुखम् । ब्रह्मभूतं सिद्धब्रह्मरूपम् । पुनः कथंभूतं सुखम् । शांतरजसं गुणातीतम् । पुनः कथंभूतं सुखम् । अकल्मषं प्रपंचदोषरहितम् । अयं चिदानंदाभिप्रायः ॥२७॥ युंजन्निति । योगी योगयुक्तः सुखेन अनायासेन अत्यंतं अंतं नाशं अतीत्य अतिक्रम्य वर्त्तत इति अत्यंतं सुखं सुष्टु प्रपंचं खनति अनात्मत्वेन दूरीकरोति तत् सुखं विज्ञानमानंदं ब्रह्म अश्नुते व्याप्नोति अहं ब्रह्मेति व्याप्तिं करोति । कथंभूतः योगी । एवं प्रकारेण सदा निरंतरं सद्रूपेण आत्मानं मनः युंजन् युंजतीति युंजन् स्वनिष्ठं

सुखेन ब्रह्मसंस्पर्शमत्यंतं सुखमश्नुते ॥ २८ ॥
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९ ॥
यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥३०॥

कुर्वन् । पुनः कथंभूतः योगी । विगतकल्मषः विशेषेण गतं अदर्शनं नीतं कल्मषं विवर्त्तरूपं प्रपंचजातं यस्य सः । कथंभूतं सुखम् । ब्रह्म संस्पर्शं ब्रह्मणः संस्पर्शो तादात्म्यं यस्मिन् तत् ब्रह्मसंस्पर्शम् ॥ २८ ॥ सर्वभूतस्थमिति । योगी योगयुक्तः सर्वभूतस्थं सर्वाणि च तानि भूतानि च सर्वभूतानि सर्वभूतेषु स्थावरजंगमेषु शरीरेषु तिष्ठतीति सर्वभूतस्थः तं आत्मानं प्रत्यक्चेतनं साक्षिणं आनंदघनं विवेकेन ईक्षते पश्यति । चेत्यपरं आत्मनि साक्षिणि सर्वभूतानि सर्वाणि च तानि भूतानि च सर्वभूतानि स्थावरजंगमानि विवेकेन ईक्षते पश्यति । कथंभूतः योगी । योगयुक्तात्मा योगेन वृत्तिनिरोधरूपेण युक्तः समाहितः आत्मा अंतःकरणं यस्य सः । पुनः कथंभूतः योगी । सर्वत्र सर्वेष्विति सर्वत्र सर्वेषु स्थावरजंगमेषु समदर्शनः समं ब्रह्मैव दर्शनं अवलोकनं यस्य सः ॥ २९ ॥ यो मामिति । यः योगी सर्वत्र भूतमात्रे आत्मत्वेन मां सदानंदरूपं पश्यति । चेत्यपरं सर्वं भूतमात्रं मयि आत्मनि आत्मत्वेन पश्यति तस्य योगिनः अहं न प्रणश्यामि अदृश्यो न भवामि परोक्षत्वेन तिष्ठामि । चेत्यपरं सः योगी सर्वत्र समदर्शी मे मम न प्रणश्यति अदृश्यो न भवति । उभयोः एक-रूपत्वात् परस्परं तादात्म्येन अवस्थानं भवतीति तात्पर्यम् ॥ ३०॥

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः।
सर्वथा वर्त्तमानोपि स योगी मयि वर्त्तते ॥ ३१ ॥
आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।

सर्वभूतस्थितमिति । यः समदर्शी एकत्वं आत्मैकतां आस्थितः सन् आश्रितः सन् सर्वभूतस्थितं सर्वाणि च तानि भूतानि च सर्वभूतानि सर्वभूतेषु भूतमात्रेषु स्थितः अधिष्ठानतया स्थितः सर्वभूतस्थितः तं मां ईश्वरं भजति अनुभवति अहं ब्रह्मास्मीति वेदांतवाक्यज्ञानेन साक्षात्करोति सः योगी सर्वथा सर्वप्रकारेण वर्त्तमानोपि कर्मत्यागेन विद्यमानोपि मयि सर्वाधिष्ठाने परमात्मनि वर्त्तते जीवन्नेव मदैक्यं प्राप्नोति । सर्वकर्मत्यागेन याज्ञवल्क्यादिवत् विहितेन कर्मणा जनकादिवत् निषिद्धेन कर्मणा च दत्तात्रेयादिवत् भवति ॥ ३१ ॥
आत्मौपम्येनेति । हे अर्जुन! यः परमहंसपरिव्राट् आत्मौपम्येन आत्मैव उपमा यस्य सः आत्मौपमः आत्मौपमस्य भावः आत्मौपम्यं तेन आत्मौपम्येन आत्मदृष्टांतेन सर्वत्र प्राणिजाते सुखं यदि वा अथवा दुःखं समं तुल्यं पश्यति अवलोकयति । यथा स्वस्य आत्मनः अनिष्टं अकल्याणं न संपादयति तथा परस्यापि अन्यस्यापि अकल्याणं न संपादयति । द्वेषशून्यत्वात् । यथा स्वस्य आत्मनः इष्टं कल्याणं संपादयति तथा परस्यापि अन्यस्यापि कल्याणं संपादयति । रागशून्यत्वात् । सः निर्वासनतया शांतात्मा योगी ब्रह्मवित् परमः श्रेष्ठः ममापि मतः मान्यः अस्ति । तत्त्वज्ञानाभ्यासेन चेत्यपरं मनोनाशाभ्यासेन वासनाक्षयाभ्यासेन च रागद्वेषशून्यतया य योगी स्वपरदुःखादिषु समदृष्टिः वर्त्तते सः योगी परमः श्रेष्ठः मम मतः मान्यः अस्ति। यस्तु योगी विषमदृष्टिः वर्त्तते सः योगी त-

सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२ ॥

अर्जुन उवाच

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।
एतस्याहं न पश्यामि चंचलत्वात्स्थितिं स्थिराम् ॥ ३३ ॥
चंचलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।

त्वज्ञानवानपि अपरमः अमान्यः ॥ ३२ ॥ योयमिति । हे मधुसूदन ! मधोः मधुनाम्नः दैत्यस्य सूदनं नाशनं यस्मात्सः मधुसूदनः तत्संबुद्धौ हे मधुसूदन ! यः अयं सर्वत्र समदृष्टिलक्षणः योगः युज्यते अनेनेति योगः युज्यते जीवः ब्रह्मणा सह ऐक्यं प्राप्यत इति योगः शास्त्रप्रसिद्धः साम्येन समत्वेन त्वया सर्वज्ञेन ईश्वरेण प्रोक्तः प्रकर्षेण कथितः । अहं एतस्य त्वदुक्तस्य सर्वमनोवृत्तिनिरोधलक्षणस्य योगस्य स्थितिं विद्यमानतां स्थिरां दीर्घकालानुवर्त्तिनीं मनसः चंचलत्वात् चंचलस्य भावः चंचलत्वं तस्मात् न पश्यामि नानुभवामि ॥ ३३ ॥ चंचलमिति । हे कृष्ण ! कर्षतीति कृष्णः तत्संबुद्धौ हे कृष्ण ! कर्षति भक्तानां पापादिदोषान् सर्वथा निवारयितुं अशक्यानपि निवारयति ! हे कृष्ण! हे सदानंदस्वरूप! मनः अंतःकरणं चंचलं स्वभावेनैव चपलं अस्ति इति अहं अनुभवामि । हि इति निश्चयेन । कथंभूतं मनः । प्रमाथि प्रकर्षेण शरीरं चेत्यपरं इंद्रियाणि मथितुं क्षोभयितुं शीलं स्वभावः यस्य तत् प्रमाथि । पुनः कथंभूतं मनः । बलवत् बलं विद्यते यस्य तत् बलवत् विचारेणापि जेतुं अशक्यम् । पुनः कथंभूतं मनः । दृढं विषयवासनानुबद्धतया दुर्भेदं दुःखेन कष्टेन भेदितुमशक्यं दुर्भेदम् अहं तस्य मनसः निग्रहं निरोधं वायोरिव

तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३४ ॥

श्रीभगवानुवाच ।

असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौंतेय वैराग्येण च गृह्यते ॥ ३५ ॥
असंयतात्मना योगो दुष्प्राप इति मे मतिः ।

सुदुष्करं सर्वथा निग्रहं कर्तुं अशक्यं मन्ये जानामि यथा आकाशे दोधूयमानस्य वायोः कुंभादिषु निरोधनं अशक्यं तद्वत् ॥ ३४ ॥ असंशयमिति । हे महाबाहो! महांतौ साक्षात् महादेवेनापि कृतप्रहरणौ बाहू यस्य सः महाबाहुः तत्संबुद्धौ हे महाबाहो! मनः अंतःकरणं दुर्निग्रहं दुःखेनापि निगृहीतुं अशक्यं दुर्निग्रहं चलं स्वभावंचचलं अस्ति । इति त्वं असंशयं नास्त्येव संशयो यस्मिन् तत् असंशयं सत्यं ब्रवीषि। तथापि एवं सत्यपि हे कौंतेय! हे पितृष्वसृपुत्र! 'त्वं मया अवश्यमेव सुखी कर्तव्यः' इति स्नेहानुबंधसूचनेन आश्वासयति। योगिनां मनः अभ्यासेन परमात्माकारप्रत्ययावृत्त्या चेत्यपरं वैराग्येण विषयवैतृष्ण्येन गृह्यते वशीक्रियते । तदुक्तं योगशास्त्रे—'मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः। यः संप्रज्ञातनामासौ समाधिरभिधीयते'—इति ॥ ३५ ॥ असंयतात्मनेति। असंयतात्मना असंयतः उत्पन्नेपि तत्त्वसाक्षात्कारे वेदांतव्याख्यानादिव्यासंगात् आलस्यादिदोषात् अभ्यासवैराग्याभ्यां अनिरुद्धः आत्मा अंतःकरणं येन सः असंयतात्मा तेन असंयतात्मना तत्त्वसाक्षात्कारवतापि योगिना योगः मनोवृत्तिनिरोधः दुष्प्रापः दुःखेनापि प्राप्तुं न शक्यते इति एवंप्रकारेण मे मम मतिः निश्चयः। अस्तीति शेषः। केन योगः प्राप्यते।

वश्यात्मना तु यतता शक्यो वाप्तुमुपायतः ॥ ३६ ॥

अर्जुन उवाच ।

अयतिः श्रद्धयोपेतो योगाच्चालितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति॥ ३७ ॥
कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।

वश्यात्मना तु वश्यः वैराग्यपरिपाकेन वासनाक्षये सति स्वाधीनः विषयपारतंत्र्यशून्यः आत्मा अंतःकरणं यस्य सः वश्यात्मा तेन वा एतादृशेन योगिना योगः सर्वचित्तवृत्तिनिरोधः उपायतः उपायात् पुरुषकारस्य लौकिकस्य वैदिकस्य प्रारब्धकर्मापेक्षया प्राबल्यात् अवाप्तुं चित्तचांचल्यनिमित्तानि प्रारब्धकर्माणि अभिभूय पराभूय प्राप्तुं शक्यः समर्थः । कथंभूतेन योगिना । यतता यततीति यतन् तेन यतता वैराग्येण अभ्यासं कुर्वता ॥ ३६ ॥ अयतिरिति । हे कृष्ण ! हे सदानंदरूप ! पूर्वं प्रथमं श्रद्धया आस्तिक्यबुद्ध्या उपेतः सन् युक्तः सन् योगे प्रवृत्तः सन्नपि पश्चात् अयतिः सन् यततीति यतिः न यतिः अयतिः प्रयत्नशिथिलः सन् योगात् योगाभ्यासात् चलितमानसः चलितं योगफलं अप्राप्तं मानसं यस्य सः चलितमानसः तथोक्तः सन् योगसंसिद्धिं योगस्य संसिद्धिः पुनरावृत्तिरहितं ज्ञानं योगसंसिद्धिः तां अप्राप्य न प्राप्य तत्त्वज्ञः मृतः सन् कां गतिं गम्यत इति गतिः तां गतिं फलं वा सुगतिं वा दुर्गतिं गच्छति प्राप्नोति कर्मणां परित्यागात् चेत्यपरं ज्ञानस्य अनुत्पत्तेः ॥ ३७ ॥ कच्चिदिति । हे महाबाहो ! महांतः सर्वेषां भक्तानां सर्वोपद्रवनिवारणसमर्थाः अथवा पुरुषार्थचतुष्टयदानसमर्थाः चत्वारः बाहवो यस्य सः महाबाहुः तत्संबुद्धौ हे महाबाहो ! हे अनंतब्रह्मांडकटाहधारक! ब्रह्मणः पथि ब्रह्मप्राप्तिमार्गे ज्ञाने

अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥ ३८ ॥
एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥ ३९ ॥

श्रीभगवानुवाच ।

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।

विमूढः सन् अनुत्पन्नब्रह्मात्मैक्यसाक्षात्कारः सन् चेत्यपरं अप्रतिष्ठः सन् देवयानपितृयानमार्गगमनहेतुभ्यां उपासनाकर्मभ्यां साधनाभ्यां रहितः सन् एतादृशः तत्त्वज्ञः उभयभ्रष्टः सन् ज्ञानमार्गात् चेत्यपरं कर्ममार्गात् विभ्रष्टः सन् छिन्नाभ्रमिव वायुना छिन्नमिव विशकलितमिव यथा पूर्वस्मात् मेघात् भ्रष्टं उत्तरमेघं अप्राप्तं अभ्रं वृष्ट्ययोग्यं अंतराले नश्यति । तथा योगभ्रष्टोपि पूर्वस्मात् कर्ममार्गात् विच्छिन्नः उत्तरं ज्ञानमार्गं अप्राप्तः सन् अंतराले नश्यति कच्चित् वा न नश्यति किम् ॥ ३८ ॥ एतन्मे इति । हे कृष्ण! हे सर्वज्ञ! त्वं मे मम एतत् इमं पूर्वोपदर्शितं संशयं साकांक्षं प्रश्नं अशेषतः संशयमूलाधर्माद्युच्छेदेन छेत्तुं अपनेतुं विनाशेतुं अर्हसि योग्यो भवसि । त्वदन्यः त्वत् परमेश्वरात् सर्वज्ञात् सर्वशास्त्रकृतः गुरोः कारुणिकात् अन्यः त्वदन्यः कश्चित् ऋषिः वा देवः सर्वज्ञः अस्य योगभ्रष्टपरलोकगतिविषयस्य संशयस्य उभयतः संविधानप्रत्ययस्य छेत्ता सम्यक् उत्तरदानेन नाशयिता नोपपद्यते न संभवति । हि इति निश्चयेन । तस्मात् त्वमेव प्रत्यक्षदर्शी सर्वस्य परमो गुरुः मम संशयमेनं छेत्तुं अर्हसीत्यर्थः ॥ ३९ ॥ पार्थ नैवेहेति । हे पार्थ! हे कुंतीपुत्र! कुंतीपुत्र इत्यनेन मातुलेयसंबंधेन

वश्यात्मना तु यतता शक्यो वाप्तुमुपायतः ॥ ३६ ॥

अर्जुन उवाच ।

अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।

अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३७ ॥

कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।

वश्यात्मना तु वश्यः वैराग्यपरिपाकेन वासनाक्षये सति स्वाधीनः विषयपारतंत्र्यशून्यः आत्मा अंतःकरणं यस्य सः वश्यात्मा तेन वा एतादृशेन योगिना योगः सर्वचित्तवृत्तिनिरोधः उपायतः उपायात् पुरुषकारस्य लौकिकस्य वैदिकस्य प्रारब्धकर्मापेक्षया प्राबल्यात् अवाप्तुं चित्तचांचल्यनिमित्तानि प्रारब्धकर्माणि अभिभूय पराभूय प्राप्तुं शक्यः समर्थः। कथंभूतेन योगिना। यतता यततीति यतन् तेन यतता वैराग्येण अभ्यासं कुर्वता ॥ ३६ ॥ अयतिरिति। हे कृष्ण ! हे सदानंदरूप ! पूर्वं प्रथमं श्रद्धया आस्तिक्यबुद्ध्या उपेतः सन् युक्तः सन् योगे प्रवृत्तः सन्नपि पश्चात् अयतिः सन् यततीति यतिः न यतिः अयतिः प्रयत्नशिथिलः सन् योगात् योगाभ्यासात् चलितमानसः चलितं योगफलं अप्राप्तं मानसं यस्य सः चलितमानसः तथोक्तः सन् योगसंसिद्धिं योगस्य संसिद्धिः पुनरावृत्तिरहितं ज्ञानं योगसंसिद्धिः तां अप्राप्य न प्राप्य तत्त्वज्ञः मृतः सन् कां गतिं गम्यत इति गतिः तां गतिं फलं वा सुगतिं वा दुर्गतिं गच्छति प्राप्नोति कर्मणां परित्यागात् चेत्यपरं ज्ञानस्य अनुत्पत्तेः ॥ ३७ ॥ कच्चिदिति । हे महाबाहो ! महांतः सर्वेषां भक्तानां सर्वोपद्रवनिवारणसमर्थाः अथवा पुरुषार्थचतुष्टयदानसमर्थाः चत्वारः बाहवो यस्य सः महाबाहुः तत्संबुद्धौ हे महाबाहो ! हे अनंतब्रह्मांडकटाहधारक! ब्रह्मणः पथि ब्रह्मप्राप्तिमार्गे ज्ञाने

अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥ ३८

एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः।
त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥ ३९॥

श्रीभगवानुवाच।

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते।

विमूढः सन् अनुत्पन्नब्रह्मात्मैक्यसाक्षात्कारः सन् चेत्यपरं अप्रतिष्ठः सन् देवयानपितृयानमार्गगमनहेतुभ्यां उपासनाकर्मभ्यां साधनाभ्यां रहितः सन् एतादृशः तत्त्वज्ञः उभयभ्रष्टः सन् ज्ञानमार्गा चेत्यपरं कर्ममार्गात् विभ्रष्टः सन् छिन्नाभ्रमिव वायुना छिन्नमि विशकलितमिव यथा पूर्वस्मात् मेघात् भ्रष्टं उत्तरमेघं अप्राप्तं अवृष्ट्ययोग्यं अंतराले नश्यति। तथा योगभ्रष्टोपि पूर्वस्मात् कर्ममार्गात् विच्छिन्नः उत्तरं ज्ञानमार्गं अप्राप्तः सन् अंतराले नश्यां कच्चित् वा न नश्यति किम् ॥ ३८ ॥ एतन्म इति। हे कृष्ण हे सर्वज्ञ! त्वं मे मम एतत् इमं पूर्वोपदर्शितं संशयं साकां प्रश्नं अशेषतः संशयमूलाधर्माद्युच्छेदेन छेत्तुं अपनेतुं विनाशे अर्हसि योग्यो भवसि। त्वदन्यः त्वत् परमेश्वरात् सर्वज्ञा सर्वशास्त्रकृतः गुरोः कारुणिकात् अन्यः त्वदन्यः कश्चित् ऋषि वा देवः सर्वज्ञः अस्य योगभ्रष्टपरलोकगतिविषयस्य संशयस उभयतः संविधानप्रत्ययस्य छेत्ता सम्यक् उत्तरदानेन नाशयित नोपपद्यते न संभवति। हि इति निश्चयेन। तस्मात् त्वमेव प्रत्यक्षदर्श सर्वस्य परमो गुरुः मम संशयमेनं छेत्तुं अर्हसीत्यर्थः ॥ ३९ पार्थ नैवेहेति। हे पार्थ! हे कुंतीपुत्र! कुंतीपुत्र इत्यनेन मातुलेयसंबंधे

न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥४०॥
प्राप्य पुण्यकृताँल्लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥
अथवा योगिनामेव कुले भवति धीमताम् ।

गोप्यमपि त्वदुद्देशेन कथयामि तस्य श्रद्धायोगे प्रवृत्तस्य यथाशास्त्रं कृतसर्वकर्मसंन्यासस्य वेदांतश्रवणादि कुर्वतः अंतराले मृतस्य इह अस्मिन् मनुष्यलोके वक्ष्यमाणप्रकारेण विनाशः अनिष्टं नास्त्येव । हीति अव्ययं विकल्पे । हि अथवा अमुत्र परलोके विनाशः अनिष्टं नास्त्येव । हे तात! इति लोकरीत्या लालयन् संबोधयति । कश्चिदपि कल्याणकृत् कल्याणं परमपुरुषार्थं करोति साधयतीति कल्याणकृत् दुर्गतिं दुष्टा चासौ गतिश्च दुर्गतिः तां दुर्गतिं इह अकीर्त्ति परत्र कीटकादिरूपां नारकीं योनिं न गच्छति न प्राप्नोति । अयं तु सर्वोत्कृष्ट एव सन् दुर्गतिं न गच्छति इति किमु वक्तव्यम् ॥ ४० ॥ प्राप्येति । योगभ्रष्टोऽपि द्विविधः एकः मंदाभ्यासवान् मृतः द्वितीयः चिरकालाभ्यस्तयोगः आसन्नफलकाले मृतः द्वयोर्मध्ये प्रथमः योगभ्रष्टः मंदाभ्यासवान् मृतः सन् पुण्यकृतां पुण्यं कुर्वंति ते पुण्यकृतः तेषां पुण्यकृतां अश्वमेधयाजिनां लोकान् ब्रह्मलोकान् प्राप्य गत्वा तेषु ब्रह्मलोकेषु शाश्वतीः ब्रह्मपरिमाणेन अक्षयाः समाः संवत्सरान् उषित्वा वासं कृत्वा दिव्यान् भोगान् अनुभूय भोगावसाने शुचीनां सदाचाराणां श्रीमतां लक्ष्मीवतां महाराजचक्रवर्तिनां गेहे कुले अजातशत्रुजनकादिवत् अभिजायते जन्म प्राप्नोति भोगवासनाप्राबल्यात् ब्रह्मलोकांते सर्वकर्मसंन्यासायोग्यो महाराजो भवतीत्यर्थः ॥ ४१ ॥ मंदाभ्यासवतः योगभ्रष्टस्य गतिं उक्त्वा इदानीं चिरकालाभ्यस्तस्य योगभ्रष्टस्य गतिमाह । अथवेति । अथेत्यनंतरं

एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४२ ॥
तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनंदन ॥ ४३ ॥
पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोपि सः ।

पूर्वोक्तगतिकथनानंतरं वा पक्षांतरसूचनार्थः योगभ्रष्टः चिरकालाभ्यस्तः मृतः सन् श्रद्धावैराग्यादिकल्याणगुणाधिक्ये भोगवासनाविरहात् पुण्यकृतां अश्वमेधयाजिनां लोकान् ब्रह्मलोकान् अप्राप्यैव योगिनां दरिद्राणां ब्राह्मणानां धीमतां ब्रह्मविद्यावतां कुले वंशे भवति जन्म प्राप्नोति। लोके कर्मभूमौ अनेकसुकृतसाध्यत्वात् मोक्षपर्यवसायित्वात् एतत् ईदृशं जन्म शुकादिवत् दुर्लभतरं अतिशयेन दुर्लभं इति दुर्लभतरं दुर्लभादपि दुर्लभं अस्ति। यत् ईदृशं जन्म लोके सर्वप्रमादकारणशून्यं भोगवासनाशून्यत्वेन केनचित्पुण्यातिशयेन दुर्लभम्॥४२॥
तत्र तमिति। तत्र तस्मिन्निति तत्र तस्मिन् द्विप्रकारे जन्मनि योगभ्रष्टः तं ब्रह्मात्म्यैकविषयं बुद्धिसंयोगं बुद्धेः ज्ञानस्य संयोगः पूर्वसंस्कारेण संबंधः बुद्धिसंयोगः तं बुद्धिसंयोगं ज्ञानसंस्कारं लभते प्राप्नोति। कथंभूतं बुद्धिसंयोगम्। पौर्वदेहिकं पूर्वदेहे पूर्वजन्मनि भवः पौर्वदेहिकः तं पौर्वदेहिकं सर्वकर्मसंन्यासगुरूपसदनश्रवणमनननिदिध्यासनानां मध्ये यावत्पर्यंतं अनुष्ठितं चेत्यपरं ततस्तदनंतरं तल्लाभानंतरं भूयः अधिकं संसिद्धौ अविलंबेन साक्षात्कैवल्यप्राप्तौ यतते प्रयत्नं करोति। हे कुरुनंदन! तवापि शुचीनां श्रीमतां कुले योगभ्रष्टजन्म जातं इति पूर्ववासनावशात् अनायासेनैव ज्ञानलाभो भविष्यति इति सूचयितुं महाप्रभावस्य कुरोः कीर्तनम् ॥ ४३ ॥
पूर्वाभ्यासेनेति। सः योगभ्रष्टः तेन अविचिरव्यवहितजन्मोपचितेन

जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४ ॥
प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४५ ॥
तपस्विभ्योऽधिको योगी ज्ञानिभ्योपि मतोऽधिकः ।

पूर्वाभ्यासेन पूर्वश्चासौ अभ्यासश्च पूर्वाभ्यासः तेन पूर्वाभ्यासेन प्राक् अर्जितज्ञानसंस्कारेण केनचित्प्रतिबंधेन अवशेपि मोक्षसाधनाय अप्रयतमानोपि ह्रियते स्ववशीक्रियते अकस्मादेव भोगवासनाभ्यः व्युत्थाय मोक्षसाधनोन्मुखः क्रियते । पश्य । यथा त्वमेव युद्धे प्रवृत्तः ज्ञानाय अप्रयतमानोपि पूर्वसंस्कारप्राबल्यात् अकस्मादेव रणभूमौ ज्ञानोन्मुखः अभूः जातः। अनेकजन्मसहस्रव्यवहितोपि ज्ञानसंस्कारः स्वकार्यं करोत्येव । हे अर्जुन ! योगस्य मोक्षसाधनस्य जिज्ञासुः ज्ञातुं इच्छतीति जिज्ञासुः शब्दब्रह्म कर्मप्रतिपादकं वेदं अतिवर्त्तते अतिक्रम्य तिष्ठति । कर्माधिकारातिक्रमेण ज्ञानाधिकारी भवतीत्यर्थः ॥ ४४ ॥ प्रयत्नादिति । योगी योगोस्यास्तीति योगी पूर्वोपचितसंस्कारवान् तेनैव योगप्रयत्नपुण्येनैव संशुद्धकिल्बिषः सन् सम्यक् उत्तमप्रकारेण शुद्धं धौतं किल्बिषं ज्ञानप्रतिबंधकं पापं यस्य सः संशुद्धकिल्बिषः ततः साधनपाकात् परां प्रकृष्टां गतिं मुक्तिं याति प्राप्नोति । नास्त्येवात्र कश्चित्संशय इत्यर्थः । कथंभूतः योगी । प्रयत्नात् पूर्वकृतप्रयत्नात् यतमानः यततेऽसौ यतमानः प्रयत्नातिरेकं कुर्वन् । पुनः कथंभूतः योगी। अनेकजन्मसंसिद्धः अनेकानि च तानि जन्मानि च अनेकजन्मानि अनेकजन्मभिः संसिद्धः अनेकजन्मसंसिद्धः संस्कारातिरेकेण चेत्यपरं पुण्यातिरेकेण प्राप्तचरमजन्मा ॥ ४५ ॥ तपस्विभ्य इति । योगी तत्त्वज्ञानोत्पत्त्यनंतरं मनोनाशवासनाक्षयकारी तपस्विभ्यः प्रशस्तं तपो

कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ४६ ॥
योगिनामपि सर्वेषां मद्गतेनांतरात्मना।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥४७॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु० अभ्यासयोगो नाम षष्ठोऽध्यायः ॥ ६ ॥

---

येषां ते तपस्विनः तेभ्यः तपस्विभ्यः कृच्छ्रचांद्रयणादितपःपरायणेभ्यः अधिकः उत्कृष्टः। अस्तीति शेषः। किं च योगी कर्मिभ्यः कर्म येषामस्ति ते कर्मिणः तेभ्यः कर्मिभ्यः दक्षिणासहितज्योतिष्टोमादिकर्मानुष्ठायिभ्यः अधिकः उत्कृष्टः अस्ति। चेत्यपरं कर्मिणां तपस्विनां अज्ञत्वेन मोक्षानर्हत्वात् योगी अपरोक्षज्ञानवान् ज्ञानिभ्योपि परोक्षज्ञानवद्भ्योपि अधिको मतः अधिकमान्यः अस्ति। मनोनाशवासनाक्षयत्वेन जीवन्मुक्तो योगी अधिको मतः मम संमतः। हे अर्जुन! तस्मात् कारणात् त्वं योगी योगवान् भव ॥ ४६ ॥
योगिनामिति। सर्वेषां संपूर्णानां योगिनां वसुरुद्रादित्यादिक्षुद्रदेवताभक्तानां मध्ये यः पुरुषः मद्गतेन मयि भगवति वासुदेवे गतं पुण्यपरिपाकविशेषात् प्रीतिवशात् वा प्राप्तं मद्गतं तेन मद्गतेन मन्निष्ठेन अंतरात्मना अंतकःरणेन श्रद्धावान् सन् श्रद्धा भक्तिः विद्यते यस्य सः श्रद्धावान् अतिशयेन श्रद्धायुक्तः सन् मां नारायणं ईश्वरं सगुणं वा निर्गुणं भजते सेवते सततं चिंतयति। स एव मद्भक्तः योगी युक्ततमः सर्वेभ्यः समाहितचित्तेभ्यः युक्तेभ्यः श्रेष्ठः मे मम परमेश्वरस्य सर्वज्ञस्य मतः निश्चितः मान्यः अस्ति। समानेपि योगाभ्यासक्लेशे समानेपि भजनायासे मद्भक्तिशून्येभ्यः मद्भक्तस्यैव श्रेष्ठत्वाद्धेतोः त्वं मद्भक्तः परमः युक्ततमः अनायासेन भवितुं अर्हसीति भावः ॥४७॥

इति श्रीबालबोधिन्यां श्रीमद्भगवद्गीताटीकायां षष्ठोऽध्यायः ॥

श्रीभगवानुवाच ।

मय्यासक्तमनाः पार्थ योगं युंजन् मदाश्रयः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥१॥
ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोन्यज्ज्ञातव्यमवशिष्यते ॥ २ ॥

श्रीः । यद्योगजन्यं विज्ञानं स्फोटयन् करुणानिधिः। कृतार्थं कृतवान् भक्तं स कृष्णः शरणं मम ॥१॥ मय्यासक्तमना इति । हे पार्थ ! पृथायाः कुंत्याः अपत्यं पुमान् पार्थः तत्संबुद्धौ हे पार्थ ! हे कुंतीपुत्र ! त्वं योगं पूर्वोक्तं योगं युंजन् सन् युंजतीति युंजन् मनःसमाधानं कुर्वन् असंशयं न विद्यते संशयो यस्मिन् कर्मणि यथा भवति तथा असंशयं गतसंदेहं यथा स्यात्तथा समग्रं विभूतिबलैश्वर्यादिसहितं मां परमात्मानं यथा येन प्रकारेण ज्ञास्यसि ज्ञातुं एष्यसि तत् मया वाच्यमानं शृणु । कथंभूतः त्वम् । मयि अंतर्यामिणि आसक्तमनाः आसक्तं प्रेम्णा संलग्नं मनो यस्य सः। पुनः कथंभूतः त्वम् । मदाश्रयः अहमेव आश्रयो यस्य सः मदाश्रयः ॥ १ ॥ ज्ञानं तेऽहमिति । अहं अंतर्बहिः अंतः अंतर्यामी बहिः सारथिः ते तुभ्यं जिज्ञासवे सविज्ञानं विज्ञानेन अनुभवेन सहितं सविज्ञानं ज्ञानं ज्ञायते तत् ज्ञानं साधनं इदं वक्ष्यमाणप्रकारेण अशेषतः साकल्येन वक्ष्यामि कथयिष्यामि। यत् ज्ञानं नित्यचैतन्यरूपं ज्ञात्वा वेदांतजन्यमनोवृत्तिविषयीकृत्य इह विज्ञानानुभवे व्यवहारभूमौ भूयः पुनरपि अन्यत् किंचिदपि ज्ञातव्यं ज्ञातुं योग्यं ज्ञातव्यं नावशिष्यते अवशिष्टं किंचित् ज्ञातव्यं अस्ति इति कांक्षितं न भवति तन्मात्रज्ञानेनैव त्वं कृतार्थो भविष्यसि ॥२॥

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥३॥
भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।

मनुष्याणामिति । मनुष्यव्यतिरिक्तानां अनंतजीवानां श्रेयो ज्ञानमेव नास्ति । ज्ञानवतां मनुष्याणां ज्ञानमेव श्रेयः । अयं चिदानंदाभिप्रायः । मनुष्याणां शास्त्रीयज्ञानकर्मयोग्यानां सहस्रेषु मध्ये कश्चित् एकः पुरुषः अनेकजन्मसुकृतसमासादितनित्यानित्यवस्तुविवेकः सन् सिद्धये सत्त्वशुद्धिद्वारा ज्ञानोत्पत्तये यतति प्रयत्नं करोति । यततामपि यतंति प्रयत्नं कुर्वंति ते यतंतः तेषां यततां ज्ञानाय यतमानानां सिद्धानां प्रागर्जितसुकृतानां साधकानामपि मध्ये कश्चित् एकः श्रवणमनननिदिध्यासनपरिपाकांते मां ईश्वरं तत्त्वतः अभेदेन वेत्ति साक्षात्करोति ॥ ३ ॥ भूमिरिति । पंचतन्मात्राणि अहंकारः महान् अव्यक्तं इति अष्टौ प्रकृतयः संति । पंचमहाभूतानि पंच ज्ञानेंद्रियाणि पंच कर्मेंद्रियाणि उभयसाधारणं मनश्च इति षोडशविकाराः उच्यंते । एतानि चतुर्विंशति तत्त्वानि । तत्र भूमिः पृथिवी आपः उदकानि अनलः तेजः वायुः प्रसिद्धः खं आकाशः इमानि पंचमहाभूतानि । गंधरसरूपस्पर्शशब्दात्मिकानि पंचतन्मात्राणि लक्ष्यंते । बुद्ध्यहंकारशब्दौ स्वार्थौ । मनःशब्देन अव्याकृतं लक्ष्यते । अथवा मनःशब्देन स्वकारणं अहंकारः लक्ष्यते । पंचतन्मात्रसन्निकर्षात् । बुद्धिशब्दः अहंकारकारणे महत्तत्त्वे मुख्यवृत्तिरेव । अहंकारशब्देन सर्ववासनावासितं अविद्यात्मकं अव्यक्तं लक्ष्यते । इति उक्तप्रकारेण इयं अपरोक्षा प्रकृतिः मायाख्या पारमेश्वरी शक्तिः अनिर्वचनीयस्वभावा त्रिगुणात्मिका अष्टधा भिन्ना अष्टभिः प्रकारैः भेदं आगता । अस्यां

अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥
एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।

प्रकृत्यां सर्वोपि जडवर्गः अंतर्भवति ॥ ४ ॥ अपरेयमिति । हे महाबाहो ! इयं प्रागुक्ता अष्टधा प्रकृतिः सर्वा चेतनवर्गरूपा अपरा निकृष्टा जडत्वात् चेत्यपरं संसाररूपबंधत्वात् कथिता । इतः अस्याः इति इतः अस्याः अचेतनवर्गरूपायाः क्षेत्रलक्षणायाः प्रकृतेः अन्यां विलक्षणां जीवभूतां जडमपि जगत् जीवयति चेतनं करोतीति जीवभूता तां जीवभूतां चेतनात्मिकां क्षेत्रज्ञलक्षणां मे मम परां आत्मभूतां विशुद्धां प्रकृतिं त्वं विद्धि जानीहि । यया क्षेत्रज्ञलक्षणया जीवभूतया अंतः अनुप्रविष्टया प्रकृत्या इदं अचेतनजातं जगत् गच्छतीति जगत् नामरूपात्मकं रज्जुसर्पवत् स्वरूपविवर्त्तरूपं धार्यते अविद्यमानमपि स्वसत्तास्फुरणतया सच्चिद्रूपवत् प्रदर्श्यते । अष्टधायाः विवर्त्तभूतायाः प्रकृतेः सकाशात् अहं विलक्षणः इति मत्वा जीवन्मुक्तो भवतीति भावः ॥ ५ ॥ एतद्योनीनीति । त्वं एतद्योनीनि एते परापरे प्रकृती योनी कारणे येषां तानि एतद्योनीनि सर्वाणि चेतनाचेतनात्मकानि निखिलानि भूतानि कार्यकारणरूपाणि इति अनेन प्रकारेण उपधारय अविस्मरणेन मनसि बुद्ध्यस्व । अहं परमेश्वरः सर्वज्ञः अनंतशक्तिमायोपाधिः परमात्मा कृत्स्नस्य चराचरात्मकस्य जगतः गच्छतीति जगत् तस्य जगतः आगमापायिरूपस्य प्रपंचस्य प्रभवः प्रभवति यस्मादिति प्रभवः कार्यकारणरूपः तथा प्रलयः प्रकर्षेण सर्वं लीयते यस्मिन्निति प्रलयः विनाशकारणं अस्मि । स्वप्नतुल्यस्यैव प्रपंचस्य

अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥
मत्तः परतरं नान्यत् किंचिदस्ति धनंजय।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥
रसोहमप्सु कौंतेय प्रभास्मि शशिसूर्ययोः।

मायिकस्य अहमेव उपादानं चेत्यपरं द्रष्टा अस्मि इति शेषः ॥ ६ ॥ मत्त इति। हे धनंजय! धनं आत्मधनं जयतीति धनंजयः तत्संबुद्धौ हे धनंजय! मत्तः सर्वज्ञात् सर्वशक्तेः सर्वकारणात् निमित्तोपादानात् परमात्मनः सकाशात् अन्यत् विलक्षणं वस्तुभूतं किंचिदपि परमाणुमात्रमपि परतरं अतिशयेन परं इति परतरं प्रशस्यतरं सर्वस्य जगतः सृष्टिसंहारयोः स्वतंत्रं कारणं नास्ति। स्वप्नवत् इदं सर्वं मायया दृश्यजातं मयि सर्वाधिष्ठाने सर्वकारणे परमात्मनि प्रोतं ग्रथितम्। सूत्रे मणिगणाः। यथा सूत्राधारेण मणिगणाः वर्त्तंते तथा इदं सर्वं मदाधारेण सद्रूपं भाति अथवा सूत्रे तैजसात्मनि हिरण्यगर्भे स्वप्नदृशि स्वप्नप्राप्तमणिगणा इव। कनके कुंडलादिवत् इति योग्यो दृष्टांतः ॥ ७ ॥ रसोहमिति। हे कौंतेय! हे कुंतीपुत्र! अप्सु उदकेषु अहं रसः अस्मि रसरूपे मयि अपः उदकानि प्रोताः ग्रथिताः उदकेषु अहं रसरूपः उपासकेन ध्येयः। शशिसूर्ययोः शशी च सूर्यश्च शशिसूर्यौ तयोः शशिसूर्ययोः निशाकरदिवाकरयोः प्रभा शीतोष्णप्रकाशिनी अहं अस्मि प्रभारूपे मयि शशिसूर्यौ प्रोतौ ग्रथितौ। सर्ववेदेषु सर्वे च ते वेदाश्च सर्ववेदाः तेषु प्रणवः ओंकारः अहं अस्मि प्रणवरूपे मयि सर्वे वेदाः प्रोताः। खे आकाशे शब्दः अहं अस्मि। शब्दरूपे मयि खं आकाशं प्रोतम्। नृषु मनुजेषु पौरुषं पुरुष-

प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥
पुण्यो गंधः पृथिव्यां च तेजश्चास्मि विभावसौ ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥
बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥१०॥

कारः उद्योगः अहं अस्मि । पुरुषकारोद्योगे मयि सर्वे मनुजाः प्रोताः ॥ ८ ॥ पुण्यो गंध इति । किं च पृथिव्यां भूमौ पुण्यः सुरभिः अविकृतः गंधः पृथिवीमात्ररूपः अहं अस्मि । चेत्यपरं विभावसौ अग्नौ तेजः दहनपचनप्रकाशनादिसामर्थ्यं अहं अस्मि । चेत्यपरं सर्वभूतेषु सर्वाणि च तानि भूतानि च सर्वभूतानि तेषु सर्वभूतेषु स्थावरजंगमेषु जीवनं प्राणधारणं आयुः अहं अस्मि । तपस्विषु प्रशस्तं तपो येषां ते तपस्विनः तेषु तपस्विषु वानप्रस्थादिषु तपः शीतोष्णक्षुत्पिपासादिद्वंद्वसहनसामर्थ्यरूपं अहं अस्मि । तद्रूपे मयि तपस्विनः प्रोताः ॥ ९ ॥ बीजमिति । किं च हे पार्थ ! पृथायाः कुंत्याः अपत्यं पुमान् पार्थः तत्संबुद्धौ हे पार्थ ! त्वं सर्वभूतानां सर्वाणि च तानि भूतानि च सर्वभूतानि तेषां सर्वभूतानां स्थावरजंगमानां सनातनं नित्यं बीजांतरानपेक्षं बीजं सर्वबीजकारणं मां परमात्मानं विद्धि जानीहि । एकस्मिन्नेव मयि सर्वबीजे सर्वेषां प्रोतत्वमित्यर्थः । बुद्धिमतां बुद्धिर्विद्यते येषां ते बुद्धिमंतः तेषां बुद्धिः तत्त्वातत्त्वविवेकसामर्थ्यं अहं अस्मि । बुद्धिरूपे मयि बुद्धिमंतः प्रोताः ग्रथिताः । तथा तेजस्विनां प्रशस्तं तेजो येषां ते तेजस्विनः तेषां तेजस्विनां प्रभावातिशयानां तेजः प्रभावातिशयः अहं अस्मि । तेजोरूपे मयि तेजस्विनः प्रोताः ॥ १० ॥

बलं बलवतां चाहं कामरागविवर्जितम्।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११ ॥
ये चैव सात्त्विका भावा राजसास्तामसाश्च ये।
मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि॥१२॥
त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत्।

बलमिति। किंच हे भरतर्षभ! हे भरतश्रेष्ठ! बलवतां बलं विद्यते येषां ते बलवंतः तेषां बलवतां सात्त्विकधर्मानुष्ठानसामर्थ्यवतां बलं सात्विकधर्मानुष्ठानसामर्थ्यं अहं अस्मि। कथंभूतं बलम्। कामरागविवर्जितं कामः प्राप्तेषु अभिलाषः रागः प्राप्तेष्वपि भूयः अधिकसंपादनार्थं तृष्णा कामरागौ कामरागाभ्यां विवर्जितं रहितं कामरागविवर्जितं चेत्यपरं भूतेषु चतुरः वर्णान् अभिलक्ष्य जातेषु धर्माविरुद्धः धर्मेण अविरुद्धः धर्माविरुद्धः स्वदारेषु पुत्रोत्पत्तिहेतुमात्रेण उपयोगी कामः विषयः अहं अस्मि। सर्वं मयि प्रोतम्॥११॥ ये चैवेति। किंच ये अन्ये सात्त्विकाः शमदमादयः चेत्यपरं ये प्रसिद्धाः राजसाः रजसः रजोगुणस्य इमे राजसाः कामलोभादयः चेत्यपरं तामसाः तमसः तमोगुणस्य इमे तामसाः क्रोधमोहादयः भावाः अवस्थाविशेषाः प्राणिनां स्वकर्मवशात् जायंते उत्पन्नाः भवंति। त्वं मत्त एव अधिष्ठानभूतादेव जायमानान् तान् सात्त्विकादिभावान् विद्धि जानीहि। तेषु सात्त्विकादिभावेषु अहं न वर्त्ते जीववत् तदधीनो न भवामि। ते तु सात्त्विकादिभावास्तु मदधीनाः संतः मयि परमेश्वरे वर्त्तंते ॥ १२ ॥ त्रिभिरिति। एभिः इदानीं उक्तैः त्रिभिः त्रिविधैः भावैः शमदमकामलोभक्रोधमोहादिभिः सर्वं संपूर्णं इदं प्रत्यक्षं जगत् जंगमधर्मं ब्राह्मणादिरूपं मोहितं सत् स्व-

मोहितं नाभिजानाति मामेभ्यः परमव्ययम्॥ १३ ॥
दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यंते मायामेतां तरंति ते ॥ १४ ॥
न मां दुष्कृतिनो मूढाः प्रपद्यंते नराधमाः ।

रूपं विस्मार्य अन्यथात्वं नीतं सत् मां स्वात्मभूतं सर्वतः वर्त्तमानं नाभिजानाति स्वात्मानं न पश्यति । कथंभूतं माम् । एभ्यः भावेभ्यः परं एभिर्भावैः अस्पृष्टं एतेषां भावानां नियंतारं अत एव अव्ययं न विद्यते व्ययो नाशः यस्य तत् अव्ययं निर्विकारम् । कथंभूतैः भावैः। गुणमयैः गुणप्रचुराः गुणमयाः तैः गुणमयैः सत्त्वरजस्तमोगुणविकारैः ॥ १३ ॥ दैवीति । दैवी देवस्य इयं दैवी देवस्य द्योतनात्मकस्य इयं एषा प्रत्यक्षा अन्यथा संतं आत्मानं अन्यथा प्रदर्शयंती मम विष्णोः माया मा यातीति माया मा निषेधं स्वरूपतिरस्कारं याति दर्शयतीति माया मदाश्रया त्रिभिः गुणमयैः भावैः सर्वं जगत् मोहयति । हीति निश्चयेन । कथंभूता माया । गुणमयी गुणप्रचुरा गुणमयी सत्त्वादिगुणप्रचुरा । पुनः कथंभूता माया । दुरत्यया दुःखेन कष्टेन अत्येतुं अतिक्रमितुं अशक्या दुरत्यया । 'भगवदाश्रया माया ब्रह्मादिभिरपि अनतिक्रमणीया इति श्रुत्वा मादृशेन कथं कर्त्तव्यम्' -इति व्याकुलितं अर्जुनं आलक्ष्य अवलोक्य सोपायं प्रोत्साहयति प्रकर्षेण उत्साहयति आनंदयति । मदीया माया ब्रह्मादीनामपि जेतुं अशक्या इति ज्ञात्वा तान् विहाय ये अनेकजन्मसुकृतोपचयवंतः पुरुषाः मामेव सर्वांतर्यामिणं प्रपद्यंते भजंति आत्मत्वेन जानंति ते पुरुषाः एतां मदीयां मायां तरंति न त्वन्ये । अयं चिदानंदाभिप्रायः ॥ १४॥ न मामिति । हे अर्जुन ! नराधमाः नरेषु मध्ये अधमाः नराधमाः इह लोके साधुभिः

मायया पहृतज्ञाना आसुरं भावमाश्रिताः ॥ १९ ॥
चतुर्विधा भजंते मां जनाः सुकृतिनोऽर्जुन ।

निंदिताः परत्र परलोके अनर्थसहस्रभाजः मां परमेश्वरं वासुदेवं न प्रपद्यंते न भजंति । 'अहो दौर्भाग्यं तेषाम्'-इत्यभिप्रायः । कथंभूताः नराधमाः । दुष्कृतिनः दुष्टं कृतं कृत्यं येषामस्ति ते दुष्कृतिनः पापेन सह नित्ययोगिनः पापकर्माणः । पुनः कथंभूताः नराधमाः । मूढाः इदं अर्थसाधनं इदं अनर्थसाधनं इति विवेकशून्याः । पुनः कथंभूताः नराधमाः । मायया शरीरेंद्रियसंघाततादात्म्यभ्रांतिरूपेण परिणतया मायया अपहृतज्ञानाः अपहृतं प्रतिबद्धं ज्ञानं विवेकसामर्थ्यं येषां ते अपहृतज्ञानाः । पुनः कथंभूताः । आसुरं असुषु इंद्रियेषु रमंत इति असुराः असुराणां विषयपराणां अयं आसुरः तं आसुरं भावं हिंसानृतादिस्वभावं आश्रिताः आसमंतात् आश्रित्य स्थिताः आश्रिताः प्राप्ताः ॥१९॥ चतुर्विधा इति । हे अर्जुन! चतुर्विधाः चत्वारः विधाः प्रकाराः येषां ते चतुर्विधाः प्रकारचतुष्टयोपेताः सुकृतिनः पूर्वजन्मकृतपुण्यसंचयाः जनाः सफलजन्मानः मां परमेश्वरं नारायणं वासुदेवं भजंते सेवंते । तेषां चतुर्णां मध्ये त्रयः सकामाः एकः निष्कामः इत्येवं चतुर्विधाः आर्त्तः आर्त्या शत्रुव्याध्याद्यापदाग्रस्तः आर्त्तः तन्निवृत्तिं इच्छन् । यथा मखभंगेन कुपिते इंद्रे वर्षति सति व्रजवासिजनः । यथा जरासंधकारागारवर्त्ती राजनिचयः । यथा द्यूतसभायां वस्त्राकर्षणे द्रौपदी चेत्यपरं ग्राहग्रस्तो गजेंद्रः । तथा जिज्ञासुः ज्ञातुमिच्छतीति जिज्ञासुः मुमुक्षुः आत्मज्ञानार्थी । यथा मुचुकुंदः यथा मैथिलः जनकः चेत्यपरं श्रुतदेवः चेत्यपरं निवृत्ते प्रवृत्ते मौसले उद्धवः । तथा अर्थार्थी अर्थस्य भोगस्य अर्थो यस्यास्तीति अर्थार्थी इह लोके परत्र परलोके भोगोपकरणं लिप्सुः ।

आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोत्यर्थमहं स च मम प्रियः ॥१७॥
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।

यथा इह लोके सुग्रीवः चेत्यपरं बिभीषणः च उपमन्युः परत्र परलोके ध्रुवः एते त्रयोपि भगवद्भजनेन मायां तरंति । एते त्रयः सकामाः व्याख्याताः ।इदानीं चतुर्थः ज्ञानी निष्कामः उच्यते । ज्ञानी ज्ञानेन भगवत्तत्त्वसाक्षात्कारेण नित्ययुक्तः तीर्णमायः निवृत्तसर्वकामः । हे भरतर्षभ! त्वमपि जिज्ञासुः वा ज्ञानी वा कतमः अहं भक्तः इति मा शंकीष्ठाः । निष्कामभक्तः ज्ञानी यथा सनकादिः च नारदः च प्रह्लादः च पृथुः च शुकः । शुद्धप्रेमभक्ताः यथा गोपिकादयः च अक्रूरः च युधिष्ठिरः। कंसशिशुपालादयः भयात् च द्वेषात् भगवद्गतिं प्राप्ताः । अयं मधुसूदनाभिप्रायः ॥ १६ ॥ तेषामिति । तेषां चतुर्विधानां भक्तानां मध्ये ज्ञानी तत्त्वज्ञानवान् निवृत्तसर्वकामः विशिष्यते विशिष्टो भवति । सर्वोत्कृष्ट इत्यर्थः । कथंभूतः ज्ञानी । नित्ययुक्तः नित्ये आत्मस्वरूपे युक्तः सक्तः नित्ययुक्तः सर्वदा अप्रच्युतात्मस्वरूपः । पुनः कथंभूतः ज्ञानी । एकभक्तिः एकस्मिन् भगवति भक्तिः अनुरक्तिर्यस्य सः एकभक्तिः अथवा एका असाधारणा भक्तिः भजनं यस्य सः तथोक्तः । हि यस्मात्कारणात् अहं ज्ञानिनः ज्ञानयुक्तस्य अत्यर्थं अतिशयेन प्रियः निरुपाधिप्रेमास्पदं अस्मि चेत्यपरं सः ज्ञानी मम सर्वात्मनः परमेश्वरस्य प्रियः आत्मा प्रियोतिशयेन भवति ॥१७ ॥ उदारा इति । एते सर्वे आर्त्तादयः त्रयः उदाराः मदुपासकत्वेन श्रेष्ठाः महांतः मोक्षभाजश्च संति। पूर्वजन्मार्जितानेकसुकृतराशित्वात्। अन्य-

आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥१८॥
बहूनां जन्मनामंते ज्ञानवान् मां प्रपद्यते ।

था हि मां न भजेयुः । किं तु ज्ञानी तु आत्मैव अहमेव अस्मि। हि इति निश्चयेन मे मम मतं निश्चयः अस्ति । सः ज्ञानी युक्तात्मा सन् युक्तः मयि स्थितः आत्मा चित्तं यस्य सः तथोक्तः सन् मामेव सर्वात्मानमेव गतिं गम्यते प्राप्यते इति गतिः तां गतिं सर्वागमैः प्रतिपादितां आस्थितः आसमंतात् मामेव अधिष्ठाय स्थितः मद्रूपेण अवस्थितः। कथंभूतां गतिम् । अनुत्तमां न विद्यते उत्तमा यस्याः सा अनुत्तमा तां अनुत्तमां सर्वोत्तमाम् ॥ १८ ॥ बहूनामिति । यः कश्चित् पुरुषः बहूनां असंख्यानां जन्मनां सर्गाणां किंचित्पुण्योपचयहेतूनां अंते चरमे जन्मनि सर्वसुकृतविपाकरूपे ज्ञानवान् सन् ज्ञानं विद्यते यस्य सः तथोक्तः सन् मां सर्वात्मकं निरुपाधिसर्वास्पदं प्रपद्यते सर्वात्मभावेन भजति । कथंभूतः यः । सर्वं वासुदेवः इति ज्ञानवान्। इदं सर्वं 'यदयमात्मा' इति श्रुतेः । यत् किंचित् दृश्यते श्रूयते तत्सर्वं वासुदेवः सर्वाणि भूतानि वसंति यस्मिन् सः वसुः तानि भूतानि स्वसत्तास्फुरणेन द्योतयति प्रकाशयति इति देवः। यद्वा दीव्यतीति देवः दीव्यति स्वस्वव्यवहारयोग्यानि करोतीति देवः वसुश्चासौ देवश्च वसुदेवः वसुदेव एव वासुदेवः । यद्वा देवकार्यार्थं वसुदेवात् देवकीपतेः आविर्भूतः वासुदेवः निर्विशेषं ब्रह्म इति एवं प्रकारेण ज्ञानवान् ज्ञानं विद्यते यस्य सः अतः हेतोः सः एवं विज्ञानपूर्वकमद्भक्तिमान् महात्मा महान् अत्यंतशुद्धः आत्मा अंतःकरणं यस्य सः महात्मा जीवन्मुक्तः सर्वोत्कृष्टः तत्समः अन्यो नास्ति अधिकस्तु नास्त्येव अतः हेतोः सुदुर्लभः सुतरां मनुष्याणां सहस्रेषु दुःखेनापि कष्टेनापि लब्धुं प्राप्तुं

वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥
कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यंते ऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥२०॥
यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥२१॥

अशक्यः सुदुर्लभः जनानां प्रत्यक्षगोचरः न भवति ॥ १९ ॥ कामैस्तैस्तैरिति । ये पुरुषाः तैः तैः प्रसिद्धैः इहामुत्रभोगविशेषैः कामैः काम्यंत इति कामाः तैः कामैः स्रक्चंदनवनिताभिलाषैः पुत्र-कीर्तिशत्रुजयादिविषयैः हृतज्ञानाः संतः हृतं अपहृतं ज्ञानं अंतःकरणं येषां ते हृतज्ञानाः गतविवेकाः अन्यदेवताः अन्याश्च ताः देवताश्च अन्यदेवताः वासुदेवातिरिक्तेंद्रादिदेवान् प्रपद्यंते अत्यादरेण इंद्रादीन् देवान् सेवंते । किं कृत्वा । तं तं तत्तद्देवताराधने प्रसिद्धं नियमं जपोपवासप्रदक्षिणानमस्कारादिरूपं आस्थाय आश्रित्य अवलंब्येत्य-र्थः ।कथंभूताः ये । स्वया स्वकीयया प्रकृत्या असाधारणया पूर्वाभ्या-सवासनया नियताः वशीकृताः । ते पुरुषाः कथं मां भजंतीति तात्प-र्यम् ॥२०॥ यो यो यां यामिति । तेषां मध्ये यः यः कामी क्षुद्र-फलेप्सुः भक्तः भजकः यां यां प्रसिद्धां तत्तत्फलप्राप्त्यर्थं भजनीयां तनुं मूर्तिं देवतां श्रद्धया जन्मांतरवासनाबलप्रादुर्भूतया भक्त्या संयु-क्तः सन् अर्चितुं पूजयितुं इच्छति इच्छां करोति तस्य तस्य कामिनः भक्तस्य अहं अंतर्यामी तामेव तत्तद्देवताविषयामेव पूर्ववासनावशात् प्राप्तां भक्तिं अचलां न चला अचला तां अचलां स्थिरां श्रद्धां विद-धामि करोमि । न तु मद्विषयां श्रद्धां तस्य तस्य करोमीत्यर्थः ॥२१॥

स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हितान् ।।२२।।
अंतवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान्देवयजो यांति मद्भक्ता यांति मामपि ।। २३ ।।
अव्यक्तं व्यक्तिमापन्नं मन्यंते मामबुद्धयः ।

स तयेति । सः देवताभक्तः कामी तया मद्दत्तया श्रद्धया स्थिरया भक्त्या युक्तः सन् संयुक्तः सन् तस्याः देवतायाः आराधनं पूजनं ईहते करोति उपसर्गरहितः सन् आराधयति चेत्यपरं ततः देवतायाः सकाशात् कामान् ईप्सितमनोरथान् लभते प्राप्नोति । कथंभूतान् कामान् । मयैव सर्वज्ञेन सर्वकर्मफलदायिना तत्तद्देवतांतर्यामिणा विहितान् तत्तत्फलविपाकसमये निर्मितान् । पुनः कथंभूतान् कामान् । हितान् मनःप्रियानित्यर्थः ।। २२ ।। अंतवत्त्विति । तेषां देवतांतरोपासकानां जनानां तत्तद्देवताराधनजं फलं तु अंतवत् अंतः विनाशः विद्यते. यस्य तत् अंतवत् भवति । यथा मद्भक्तानां विवेकिनां अनंतं फलं भवति तथा तेषां न भवति । कथंभूतानां तेषाम् । अल्पमेधसां अल्पे क्षुद्रे तुच्छे विनाशशीले फले मेधा बुद्धिः येषां ते अल्पमेधसः तेषां अल्पमेधसां अल्पफलाभिलाषिणां देवयजः देवान् इंद्रादीन् यजंति ते देवयजः मदन्यदेवताराधनपराः देवान् स्वर्गस्थान् इंद्रादीन् यांति स्वर्गं गत्वा देवैः दत्तान् कर्मफलभोगान् प्राप्नुवंति । मद्भक्ता अपि मामेव अधनं ईश्वरमेव भजंति ते मद्भक्ताः ममोपासकाः मां अक्षयं शश्वदेकरूपं यांति प्राप्नुवंति । मद्भक्तानां चेत्यपरं अन्यदेवताभक्तानां महदंतरमिति भावः ।। २३ ।। अव्यक्तमिति । अल्पबुद्धयः अल्पा विवेकशून्या बुद्धिर्येषां

परं भावमजानंतो ममाव्ययमनुत्तमम् ॥ २४ ॥
नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोयं नाभिजानाति लोको मामजमव्ययम् ॥२५॥

ते अल्पबुद्धयः दृश्याभिनिविष्टमतयः अव्यक्तं न व्यक्तः अव्यक्तः तं अव्यक्तं प्रपंचातीतं व्यक्तिरहितं सर्वकारणं मां परमेश्वरं सर्वांतर्यामिणं व्यक्तिं कार्यरूपतां आपन्नं मत्स्यकूर्मरामकृष्णाद्यवतारेण कंचित् जीवं मन्यंते । कथंभूताः अल्पबुद्धयः । मम सर्वांतर्यामिणः परं सर्वकारणरूपं भावं स्वरूपं अजानंतः जानंति ते जानंतः न जानंतः अजानंतः । कथंभूतं भावम् । अव्ययं न विद्यते व्ययो नाशः यस्य सः अव्ययः तं अव्ययं नित्यम् । पुनः कथंभूतं भावम् । अनुत्तमं न विद्यते उत्तमं यस्मात्सः अनुत्तमः तं अनुत्तमं साक्षिचैतन्यं आविर्भावतिरोभावरहितम् ॥२४॥ नाहमिति । अहं सर्वाधिष्ठानभूतः परमात्मा सर्वस्य बहिर्दृष्टेः लोकस्य प्रकाशः स्वेन रूपेण प्रकटः न भवामि किं तु केषांचित् भक्तानां प्रकटो भवामीत्यभिप्रायः । कथंभूतः अहम् । योगमायासमावृतः योगस्य मम संकल्पस्य वशवर्त्तिनी माया योगमाया योगमायया अयं अभक्तः जनः मां स्वरूपेण न जानातु इति संकल्पानुविधायिन्या मायया समावृतः सम्यक् आवृतः अयं चतुर्विधभक्तविलक्षणः लोकः मूढः सन् स्वरूपज्ञानशून्यः सन् मां परमेश्वरं न अभिजानाति किंतु विपरीतदृष्ट्या मां मनुष्यमेव मन्यते । कथंभूतं माम् । अजं जन्ममरणशून्यम् । पुनः कथंभूतम् । अव्ययं नाशशून्यम् । कथंभूतः लोकः । योगमायासमावृतः योगस्य अघटितघटनापटोः मम परमेश्वरस्य माया योगमाया योगमायया समावृतः आच्छादितः अत एव योगमायामोहितत्वात् अयं लोकः मूढः मूर्खः भूत्वा मां अजं अव्ययं स्वात्मभूतं न जानाति ॥२५॥

वेदाहं समतीतानि वर्त्तमानानि चार्जुन।
भविष्याणि च भूतानि मां तु वेद न कश्चन ॥२६॥
इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत।

वेदाहमिति। हे अर्जुन! अहं चिदात्मा सर्वज्ञः समतीतानि अतिक्रांतानि चेत्यपरं वर्त्तमानानि विद्यमानानि चेत्यपरं भविष्याणि आगामिनि काले जनिष्यमाणानि एवं कालत्रयवर्तीनि भूतानि स्थावरजंगमानि सर्वाणि वेद जानामि। इत्यत्र संशयो नास्तीत्यर्थः। मन्मायया मोहितः कश्चन कोपि मां तु सर्वदर्शिनं तु मदनुग्रहभाजनं मद्भक्तं विना न वेद न जानाति। मन्मायामोहितत्वात्। अतः हेतोः मत्तत्त्ववेदनाभावादेव प्रायेण प्राणिनः मां न भजंते इत्यभिप्रायः ॥ २६ ॥ इच्छाद्वेष इति। हे भारत! हे भरतवंशोद्भव! सर्गे सृज्यत इति सर्गः तस्मिन् सर्गे मातुः सकाशात् स्थूलदेहोत्पत्तिरूपसर्गे सर्वभूतानि सर्वाणि च तानि भूतानि च सर्वभूतानि सर्वे प्राणिनः तदानीमेव प्राप्तेन द्वंद्वमोहेन द्वंद्वयोः सुखदुःखयोः अथवा शीतोष्णयोः लाभालाभयोः मोहः अभिनिवेशः द्वंद्वमोहः तेन द्वंद्वमोहेन अहं सुखी अहं दुःखी इत्यादिविपर्यासेन सुखदुःखाद्यभिनिवेशेन संमोहं स्वात्मानं विस्मृत्य अन्यथा देहोहमित्यादिभावं यांति प्राप्नुवंति। कथंभूतेन द्वंद्वमोहेन। इच्छाद्वेषसमुत्थेन इच्छा च द्वेषश्च इच्छाद्वेषौ इच्छाद्वेषाभ्यां अनुकूलप्रतिकूलविषयाभ्यां समुत्था समुत्पत्तिः यस्य सः इच्छाद्वेषसमुत्थः तेन इच्छाद्वेषसमुत्थेन। सर्वाणि भूतानि मातृतो जन्मावसरे गर्भजातं ज्ञानं विस्मृत्य अन्यथाभावजनकं मोहं यांतीति भावः। हे परंतप! परं मोहरूपं शत्रुं तापयतीति परंतपः तत्संबुद्धौ हे परंतप! सर्वज्ञः परमात्मा आशीर्वचनेन स्वाभिप्रेतज्ञाने अर्जुनं अधिकारिणं करोति

सर्वभूतानि संमोहं सर्गे यांति परंतप ॥ २७ ॥
येषां त्वंतगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वंद्वमोहनिर्मुक्ता भजंते मां दृढव्रताः ॥ २८ ॥
जरामरणमोक्षाय मामाश्रित्य यतंति ये ।

इति गम्यते । अयं चिदानंदाभिप्रायः ॥ २७ ॥ येषामिति । येषां तु इतरलोकविलक्षणानां तु पुण्यकर्मणां पुण्यरूपाणि कर्माणि येषां ते पुण्यकर्माणः तेषां पुण्यकर्मणां अनेकजन्मसु पुण्याचरणशीलानां मदुद्देशेन नित्यनैमित्तिककर्मानुष्ठानवतां प्रसिद्धानां जनानां जननधर्मिणां सफलजन्मनां तैः तैः पुण्यकर्मभिः पापं ज्ञानप्रतिबंधकं पापं अंतगतं नाशं प्राप्तम् । अस्तीति शेषः । ते पुण्यकर्माणः द्वंद्वमोहनिर्मुक्ताः संतः द्वंद्वयोः सुखदुःखयोः मोहः द्वंद्वमोहः द्वंद्वमोहेन रागद्वेषादिनिबंधनविपर्यासेन निर्मुक्ताः रहिताः द्वंद्वमोहनिर्मुक्ताः मां परमात्मानं भजंते वासुदेवः सर्वमिति ज्ञात्वा सप्रेमज्ञानसंपत्तिं कुर्वंति । कथंभूताः ते । दृढव्रताः दृढं व्रतं नियमः येषां ते दृढव्रताः अचलसंकल्पाः ॥ २८ ॥ जरामरणमोक्षायेति । ये पुण्यकर्मानुष्ठानेन शुद्धसत्त्वानुभवोभयलोकवितृष्णाः किं च संसारदुःखात् निर्विण्णाः जरामरणमोक्षाय जन्म रातीति जरा यद्वा जायते ऽसौ जः जं जीवभावं रातीति जरा अथवा प्रसिद्धैव अस्तु मरणं विनाशः जन्म विना मरणं नास्तीति प्रसिद्धम् । जरा च मरणं च जरामरणे जरामरणाभ्यां मोक्षः तत्संबंधराहित्यं जरामरणमोक्षः तस्मै जरामरणमोक्षाय तदर्थं मां परमात्मानं आश्रित्य सोहं इत्यंगीकृत्य यतंति परमात्मनः साक्षात्काराय प्रयत्नं कुर्वंति । मदर्पितानि फलाभिसंधिशून्यानि विहितानि कर्माणि कुर्वंतीति भावः । ते पुरुषाः क्रमेण

ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥२९॥
साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।
प्रयाणकालेपि च मां ते विदुर्युक्तचेतसः ॥ ३० ॥

इति श्रीमद्भगवद्गीतासू० ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः ॥ ७ ॥

---

शुद्धांतःकरणाः संतः तत् जगत्कारणमायाधिष्ठानं ब्रह्म परं शुद्धं निर्गुणं तत्पदलक्ष्यं मां विदुः जानंति । तथा अध्यात्मं आत्मानं शरीरं अधिकृत्य प्रकाशमानं कृत्स्नं उपाध्यपरिच्छिन्नं त्वंपदलक्ष्यं विदुः। चैत्यपरं कर्म तदुभयवेदनसाधनगुरूपसदनश्रवणमननादि अखिलं निरवशेषं फलाव्यभिचारि असिपदं विदुः जानंति इत्यर्थः ॥२९॥ साधिभूताधिदैवमिति । ये पुण्यकर्मानुष्ठानेन शुद्धसत्त्वानुभवाः युक्तचेतसः संतः युक्तं मदेकनिष्ठं चेतो अंतःकरणं येषां ते युक्तचेतसः अनुलक्ष्येण उत्पन्नसाक्षात्काराः संतः साधिभूताधिदैवं अधिभूतं च अधिदैवं च अधिभूताधिदैवे अधिभूताधिदैवाभ्यां सह वर्त्तत इति साधिभूताधिदैवः तं चैत्यपरं साधियज्ञं अधियज्ञेन सह वर्त्तत इति साधियज्ञः तं साधियज्ञं अधिभूतादिशब्दानां अर्थं भगवानेव अंतराध्याये व्याख्यास्यति । मां परमात्मानं विदुः चिंतयंति जानंतीत्यर्थः । ते पुरुषाः युक्तचेतसः संतः सर्वदा मयि समाहितचेतसः संतः प्रयाणकाले प्राणोत्क्रमणकाले इंद्रियग्रामस्य अत्यंतव्यग्रतायामपि अयत्नेनैव मत्कृपया मां सर्वात्मानं विदुः जानंति । तेषां मृतिकालेपि मदाकारैव चित्तवृत्तिः पूर्वोपचितसंस्कारपाटवात् भवति । तथा च ते मद्भक्तियोगात् कृतार्था एवेति भावः ॥ ३० ॥ ॥ इति श्रीबालबोधिन्यां श्रीमद्भगवद्गीताटीकायां सप्तमोऽध्यायः ॥ ७ ॥ ॥

अर्जुन उवाच ।

किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।
अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥
अधियज्ञः कथं कोत्र देहेस्मिन् मधुसूदन ।

श्रीः । पूर्वाध्यायांते श्रीमद्भगवता उक्तानां ब्रह्माध्यात्मादिसप्तानां पदार्थानां तत्त्वं जिज्ञासुः अर्जुनः उवाच किं तद्ब्रह्मेति द्वाभ्याम् । हे पुरुषोत्तम! पुरुषाभ्यां क्षराक्षराभ्यां उत्तमः अधिकतमः तत्संबुद्धौ यद्वा उद्गतं तमः अज्ञानं यस्मात्सः उत्तमः पुरौ शरीरे शेरत इति पुरुषाः जीवाः पुरुषेभ्यः उत्तमः विलक्षणः तत्संबुद्धौ हे पुरुषोत्तम हे सर्वज्ञ! तत् ज्ञेयत्वेन उक्तं ब्रह्म सोपाधिकं वा निरुपाधिकं किं कथ्यते चेत्यपरं अध्यात्मं आत्मानं देहं अधिकृत्य अधिष्ठानं कृत्वा तिष्ठति तत् अध्यात्मं किं श्रोत्रादींद्रियग्रामः वा प्रत्यक्चैतन्यं कथ्यते । तथा कर्म अखिलं यज्ञरूपं वा अन्यत् अस्ति किम्? । अधिभूतं भूतं पृथिव्यादिपंचभूतं अधिकृत्य अधिष्ठानं कृत्वा वर्त्तते इति अधिभूतं किंवा समस्तमेव कार्यजातं किं प्रोक्तम्? तथा अधिदैवं देवताविषयं वा अनुध्यानं वा सर्वदेवतेषु आदित्यमंडलादिषु अविच्छिन्नं सघनं चैतन्यं किं उच्यते?॥ १ ॥अधियज्ञ इति । किं च हे मधुसूदन! एतत्संबोधनेन परमकारुणिकत्वात् आयासेनापि सर्वोपद्रवनिवारकस्य भगवतः अनायासेन मत्संदेहोपद्रवनिवारणं उचितमेवेति सूचयन् संबोधयति । अत्र अस्मिन् देहे अधियज्ञः यज्ञं अधिगतः इति अधियज्ञः दैवतात्मा वा परब्रह्म अस्ति वा कः कथं केन प्रकारेण चिंतनीयः अथवा अस्मिन् देहे वर्त्तते वा देहात् बहिः वर्त्तते? । किं च निय-

प्रयाणकाले च कथं ज्ञेयोसि नियतात्मभिः ॥ २ ॥

श्रीभगवानुवाच।

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥
अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम्।

तात्मभिः नियतः नियमितः आत्मा चित्तं येषां ते नियतात्मानः तैः संयतचित्तैः प्रयाणकाले मरणावसरे त्वं परमात्मा कथं केन प्रकारेण ज्ञेयः असि ज्ञातुं योग्योसि? । एतत् सर्वं सर्वज्ञत्वात् परमकारुणिकत्वाच्च शरणागतं मां प्रति कथय ॥ २ ॥ प्रश्नक्रमेण श्रीभगवान् उत्तरं ददाति। अक्षरमिति त्रिभिः। त्वं अक्षरं न क्षरति न नश्यति तत् अक्षरं जगतः मूलकारणं चैतन्यं ब्रह्म विद्धि। कथंभूतं ब्रह्म। परमं सदैव एकरूपत्वात् सर्वोत्कृष्टं स्वभावः स्वस्यैव ब्रह्मण एव अंशतः जीवरूपेण भवनं स्वभावः अध्यात्मं आत्मानं देहद्वयं भोक्तृभोगायतनत्वेन अधिकृत्य वर्त्तते तत् अध्यात्मं उच्यते अध्यात्मशब्देन कथ्यते। विसर्गः—'अग्नौ प्रास्ताऽऽहुतिः सम्यक् आदित्यं उपतिष्ठते। आदित्यात् जायते वृष्टिः वृष्टेः अन्नं अन्नात् प्रजाः भवंति'—इति क्रमेण विसर्गः कर्मसंज्ञितः कर्म इति संज्ञा नाम संजाता यस्य सः कर्मसंज्ञितः देवतोद्देशेन द्रव्यत्यागरूपः यज्ञः उच्यते। कथंभूतः विसर्गः। भूतभावोद्भवकरः भूतानां जरायुजाण्डजस्वेदजोद्भिज्जानां भावः अविद्यमानानामपि विद्यमानत्वं भूतभावः भूतभावस्य उद्भवः उत्पत्तिः भूतभावोद्भवः भूतभावोद्भवं करोतीति तथोक्तः ॥ ३ ॥ अधिभूतमिति। किं च क्षरः क्षरति प्रतिक्षणं क्षरति नश्यतीति क्षरः भावः

अधियज्ञोहमेवात्र देहे देहभृतांवर ॥ ४ ॥
अंतकाले च मामेव स्मरन् मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥
यं यं वापि स्मरन् भावं त्यजत्यंते कलेवरम् ।

यत्किंचित् जन्मवद्वस्तु कार्यकारणरूपः सर्वोपि पदार्थः अधिभूतं भूतानि पृथिव्यादीनि च प्राणिमात्राणि अधिकृत्य भवति तत् अधिभूतं उच्यते । चेत्यपरं पुरुषः पूर्णत्वात् पुरुषः सूर्यः आत्मा जगतः स्थावरस्य पुरुषो हिरण्यगर्भः अधिदैवतं दैवतानि आदित्यादीनि अधिकृत्य चक्षुरादीनींद्रियाणि अनुगृह्णातीति अधिदैवतं उच्यते । अत्र अस्मिन् देहे मनुष्यदेहे आत्मा अंतर्यामित्वेन वर्त्तमानः अधियज्ञः सर्वयज्ञाधिष्ठाता सर्वयज्ञफलदाता सर्वयज्ञाभिमानिनी विष्णवाख्यदेवता अहमेव वासुदेवः यज्ञरूपेण वर्ते । हे देहभृतांवर! सर्वप्राणिनां श्रेष्ठ! अनेन संबोधनेन त्वमेवं ज्ञातुं अर्हसि । मनुष्यदेहे वर्त्तमानानां इदमेव ज्ञातुं उचितमिति भावः ॥४॥ अंतकाले चेति । अंतकाले मरणकाले मामेव भगवंतं वासुदेवं अधियज्ञं सगुणं वा निर्गुणं स्मरन् सदा चिंतयन् यः मद्भक्तः कलेवरं इदं स्थूलशरीरं मुक्त्वा त्यक्त्वा प्रयाति प्रकर्षेण सर्वजीववैलक्षण्येन अर्चिरादिमार्गेण याति गच्छति सः मद्भक्तः मद्भावं मम भावः मद्भावः तं मद्रूपतां याति मया सह ऐक्यभावं प्राप्नोति । अयं अर्थवादः न मंतव्यः । अत्र मदुक्ते विषये अयं अर्थवादः इति संशयः नास्ति । किं तु वास्तवोयमर्थः ॥५॥ यं यं वापीति । हे कौंतेय! पितृष्वसुः पुत्रत्वेन स्नेहातिशयं सूचयति । हे कुंतीपुत्र! न केवलं मां अनुस्मरन् मद्भावं यातीति नियमः किं तर्हि पुरुषः यं यं भावं मानुषं वा अन्यं वा निकृष्टं भावं वा वासना-

तंतमेवैति कौंतेय सदा तद्भावभावितः ॥ ६ ॥
तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥ ७ ॥
अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।

विशेषं वा देवताविशेषं अन्यदपि यत्किंचित् स्मरन् स्मरतीति स्मरन्सन् चिंतयन्सन् अंते प्राणवियोगकाले कलेवरं स्थूलदेहं त्यजति सः पुरुषः तं तं भावं पूर्वोक्तं देवतादिरूपं याति प्राप्नोति। अंतकाले तद्भावस्मरणे को हेतुः? अहमेव। कथंभूतः पुरुषः। सदा सर्वदा तद्भावभावितः तस्मिन् देवताविशेषादौ भावः भावना वासना तद्भावः तद्भावेन तच्चिंतनवासितांतःकरणेन भावितः संभावितः तद्भावभावितः ॥ ६ ॥ तस्मादिति। हे सखे! मां स्मरन् कलेवरं त्यक्त्वा यः पुरुषः मद्भावं याति अत्र संशयः नास्ति इति कथितम्। तस्मात् स्मरणात् त्वं सर्वेषु कालेषु सर्वासु अवस्थासु मां सगुणं ईश्वरं वा सर्वसाक्षिणं अनुस्मर अनुलक्ष्येण चिंतनं कुरु। यदि अंतःकरणाशुद्धिवशात् निरंतरं अनुस्मर्तुं न शक्नोषि न समर्थोऽसि तर्हि अंतःकरणशुद्धये युद्ध्य च अंतःकरणशुद्ध्यर्थं युद्धादिकं स्वधर्मं कुरु। एवं च नित्यनैमित्तिकानुष्ठानेन अशुद्धिक्षयात् त्वं मयि भगवति वासुदेवे अंतर्यामिणि अर्पितमनोबुद्धिः सन् मनश्च बुद्धिश्च मनोबुद्धी अर्पिते मनोबुद्धी येन सः अर्पितमनोबुद्धिः चिंताविषयं संकल्पात्मकांतःकरणवृत्तिरूपं मनः अंतर्याम्य अहं तेन यथानियुक्तोऽस्मि तथा करोमि इति निश्चयात्मिका बुद्धिः मां भगवंतं वासुदेवमेव एवंक्रमेण एष्यसि प्राप्स्यसि। असंशयः अत्र त्वया संशयः न कर्तव्यः ॥ ७ ॥ अभ्यासेति। हे पार्थ! यः पुरुषः चेतसा चिंतनात्मकांतःकरणवृत्तिना अभ्यासपाटवेन परमं उत्कृष्टं पुरुषं पूर्णं दिव्यं दिवि द्योत-

परमं पुरुषं दिव्यं याति पार्थानुचिंतयन् ॥ ८ ॥

कविं पुराणमनुशासितारम्
अणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिंत्यरूपम्
आदित्यवर्णं तमसः परस्तात् ॥ ९ ॥

नात्मनि आदित्ये भवः दिव्यः तं दिव्यं द्योतनात्मकं स्वयंप्रकाशं अनु निरंतरं चिंतयन् सन् अंतःकरणवृत्त्या शास्त्राचार्योपदेशं ध्यायन् सन् प्रयाणकाले तमेव याति प्राप्नोति । कथंभूतेन चेतसा । अभ्यासयोगयुक्तेन अभ्यास एव प्रत्ययावृत्तिरेव योगः अभ्यासयोगः तेन युक्तं समाहितम् । पुनः कथंभूतेन चेतसा । नान्यगामिना न विद्यते अन्यत्र गंतुं शीलं यस्य तत् नान्यगामि तेन नान्यगामिना ॥ ८ ॥ कविमिति । कविं सर्वज्ञं 'यः सर्वज्ञः सर्ववित्' इति श्रुतेः । पुराणं पुरापि नवः पुराणः तं पुराणं चिरंतनं अनुशासितारं अनुलक्षेण शास्तीति अनुशासिता तं अनुशासितारं सर्वेषां नियंतारं अणोः सूक्ष्मादपि अणीयांसं अतिशयेन अणुः इति अणीयान् तं अणीयांसं अतिसूक्ष्मतरं सर्वस्य स्थावरजंगमस्य धातारं निर्माणकं अचिंत्यरूपं चिंतयितुं योग्यं चिंत्यं चिंत्यं रूपं यस्य सः चिंत्यरूपः चिंत्यरूपः न भवतीति अचिंत्यरूपः तं वाङ्मनसयोः अगोचररूपं आदित्यवर्णं आदित्य इव वर्णः प्रकाशः यस्य सः आदित्यवर्णः तम् । सूर्यः यथा स्वमंडलं प्रकाशयन् सन् त्रैलोक्यमपि प्रकाशयति तद्वत् अयमपि ब्रह्मांडं अंतर्बहिः प्रकाशयति सूर्यमपि प्रकाशयति तमसः अज्ञानात् परस्तात् विलक्षणम् यः पुरुषः उक्तलक्षणं परमात्मानं अनुस्मरेत् सः पुरुषः तं पुरुषं दिव्यं स्वयं प्रकाशमानं उपैति प्राप्नोति । इति द्वितीयेनान्वयः ॥ ९ ॥

प्रयाणकाले मनसाऽचलेन
भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्
स तं परं पुरुषमुपैति दिव्यम् ॥ १० ॥
यदक्षरं वेदविदो वदंति
विशंति यद्यतयो वीतरागाः ।
यदिच्छंतो ब्रह्मचर्यं चरंति

प्रयाणकाल इति । किं च यः पुरुषः भक्त्या प्रेम्णा युक्तः सन् संयुक्तः सन् प्रयाणकाले मरणावसरे अचलेन अचंचलेन मनसा मत्स्मरणसंलग्नचेतसा भ्रुवोर्मध्ये नासामूले आज्ञाचक्रे प्राणं पंचवृत्तिकं वायुं सम्यक् उत्तमप्रकारेण आवेश्य आ समंतात् आकृष्य प्रवेश्य संस्थाप्य वा मां परमेश्वरं अनुस्मरन् सः पुरुषः प्रसिद्धं परं परमं उत्कृष्टं पुरुषं पूर्णं दिव्यं स्वयंप्रकाशं उपैति सामीप्येन तादात्म्यं प्राप्नोति । कथंभूतेन मनसा । योगबलेन योग एव चित्तवृत्तिनिरोध एव बलं यस्य तत् योगबलं तेन ॥ १० ॥ यदक्षरमिति । वेदविदः वेदं वेदार्थं विदंति ते वेदविदः वेदार्थज्ञाः गृहस्थाः तमेव परमं दिव्यं पुरुषं यत् प्रसिद्धं अक्षरं ब्रह्मेति वदंति । वीतरागाः वीतः गतः रागो विषयप्रीतिः येभ्यस्ते वीतरागाः ईषणात्रयव्युत्थायिनः यतंते ते यतयः प्रयत्नशीलाः संन्यासिनः यत् पदं विशंति प्रविशंति सायुज्यं गच्छंति । नैष्ठिकाः यदिच्छंतः संतः यस्य पदस्य प्राप्तिं इच्छंतः संतः गुरुकुले ब्रह्मचर्यं नैष्ठिकव्रतं चरंति आचरंति । अहं ते तुभ्यं तत् प्रसिद्धं पदं पद्यते गम्यते इति पदं स्वरूपं

तत्ते पदं संग्रहेण प्रवक्ष्ये ॥ ११ ॥
सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥ १२॥
ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।

संग्रहेण संक्षेपेण प्रवक्ष्ये वक्ष्यामि तत्प्राप्त्युपायं कथयिष्यामि । कथं मया ज्ञेयं इति व्याकुलो मा भूत् ॥ ११ ॥ सर्वद्वाराणीति । यः पुरुषः सर्वद्वाराणि सर्वाणि च तानि द्वाराणि च सर्वद्वाराणि शब्दादिप्रवेश-मार्गाणि श्रोत्रादींद्रियाणि संयम्य स्वस्वविषयेभ्यः परावृत्य चेत्यपरं मनः संकल्पविकल्पात्मकचित्तवृत्तिवासनारूपं हृदि हृदये निरुध्य रोधयित्वा अभ्यासवैराग्याभ्यां निर्वृत्तिकतां आपाद्य अंतः विषय-चिंतां अकृत्वा किंच मूर्ध्नि भ्रुवोर्मध्ये ब्रह्मरंध्रे आत्मनः स्वस्य प्राणं मुखनासिकासंचारिणं वायुं आधाय संस्थाप्य तदुपरि गुरूपदिष्टमा-र्गेण आवेश्य योगधारणां योगेन आसनादिनियमेन धारणा तां आ-त्मविषयसमाधिरूपां धारणां आस्थितः सन् आश्रितः सन् ॥ १२ ॥ ओमिति । किंच एकाक्षरं अकारोकारमकारसंज्ञं उत्पत्तिस्थितिसं-हाराधिष्टानं पंचाशन्मातृकात्मकं वेदादिरूपेण ब्रह्मादिभ्यः स्वयं राति संरक्षतीति एकाक्षरं अरूपेण सर्वेषु अक्षरेषु प्रविश्य सर्वं सेश्वरं व्या-प्नोति अथवा अक्षेषु इंद्रियेषु रमति तत् अक्षरं अथवा न क्षरति तत् अक्षरं सर्ववेदोपसंहारेऽपि अविनाशि एकं च तत् अक्षरं च एकाक्षरं ॐकारवाच्यं ब्रह्म बृहत्त्वात् बृंहणत्वाद्वा ब्रह्म व्याहरन् उच्चारयन् प्रणवजपं कुर्वन् सन् यः भिक्षुः मां प्रणवरूपिणं परमात्मानं अनुस्मरन् अनुलक्षेण स्मरन् अहमेव परमात्मा इति भावयन् देहं त्यजन् सन् मरणकाले त्यक्तुं इच्छन् सन् प्रयाति पुनरावृत्तिराहित्येन गच्छति सः

यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥ १३ ॥
अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४ ॥
मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।

परमहंसः परमां पुनरावृत्तिरहितां गतिं परमां काष्ठां याति ॥१३॥ हे अर्जुन! निरंतरं मां स्मरन् देहावसाने मां याति इति किं चित्रम्? । यतः जीवतोपि निरंतरं मां स्मरतः तस्य अहं स्वरूपत्वेन सुलभोस्मि इत्यभिप्रायेणाह । अनन्येति । यः पुरुषः अनन्यचेताः सन् नास्ति अन्यस्मिन् मदन्ये चेतः अंतःकरणं यस्य सः तथोक्तः सततं आदेहपातपर्यंतं नित्यशः निरंतरं मां परमात्मानं स्मरति तस्य प्रसिद्धस्य योगिनः मां आत्मत्वेन स्मरतः अहं सुलभः सुखेन अनायासेन लब्धुं योग्यः अस्मि । कथंभूतस्य योगिनः । नित्ययुक्तस्य नित्यं नित्यस्वरूपे युक्तः तस्य नित्ययुक्तस्य सदा समाहितचेतसः यः जीवन् सन् सर्वं अनात्मत्वेन ज्ञात्वा मां परमात्मानं स्मरन् सन मद्रूपो भवति प्रारब्धवशात् मृते सति मां प्राप्नोति इति किमु वक्तव्यम्? । हे पार्थ! अहं तत्र अतिसुलभः अस्मि त्वं मा भैषीः ॥ १४ ॥ मामुपेत्येति । महात्मानः महति ब्रह्मणि आत्मा मनो येषां ते महात्मानः यद्वा महान् व्यापकः आत्मा येषां ते अथवा मदेकचित्तत्वात् महान् अपरिमितः आत्मा चित्तं येषां ते महात्मानः वाक्यार्थज्ञानसंपन्नाः मां परमात्मानं उपेत्य जीवंतो मदैक्यं प्राप्य पुनः जन्म मातृपितृमलजन्यं नाप्नुवंति न प्राप्नुवंति । किं तु परमां उत्कृष्टां संसिद्धिं पुनरावृत्तिरहितां मोक्षाख्यां गताः प्राप्ताः अथवा ये संसिद्धिं गताः ते पुनः जन्म न प्राप्नुवंति । किं कृत्वा । मां परमात्मानं उपेत्य

नाप्नुवंति महात्मानः संसिद्धिं परमां गताः ॥१५॥
आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौंतेय पुनर्जन्म न विद्यते ॥ १६ ॥
सहस्रयुगपर्यंतमहर्यद्ब्रह्मणो विदुः ।

इत्यन्वयः । कथंभूतं जन्म । दुःखालयं दुःखानां सर्वेषां दुःखनां आलयं स्थानम् । पुनः कथंभूतं जन्म । अशाश्वतं शाश्वतं न भवति तत् अशाश्वतं प्रतिक्षणध्वंसि ॥ १५ ॥ आ ब्रह्मभुवनादिति । हे अर्जुन! आ ब्रह्मभुवनात् भवंति भूतानि यस्मिन्निति भुवनं ब्रह्मणः भुवनं सत्यलोकः ब्रह्मभुवनं ब्रह्मभुवनं अभिव्याप्य इति आब्रह्मभुवनं तस्मात् लोकाः सर्वे प्राणिनः पुनरावर्त्तिनः पुनः पुनः आवर्त्तनशीलाः पुनरावर्त्तिनः संसरणभाजः संति । ब्रह्मलोकस्यापि विनाशित्वात् । तत्रस्थानां अनुत्पन्नज्ञानानां अवश्यंभावि पुनर्जन्म । ये पुरुषाः एवं क्रममुक्तिफलाभिः उपासनाभिः ब्रह्मलोकं प्राप्ताः तेषामेव तत्रोत्पन्नज्ञानानां ब्रह्मणा सह मोक्षः अन्येषां नास्त्येव । हे कौंतेय ! मां परमात्मानं उपेत्य तु प्राप्य तु पुनः जन्म न विद्यते नास्ति । हे अर्जुन ! हे कौंतेय ! इति संबोधनद्वयेन स्वरूपतः कारणतः ज्ञानसंपत्तेः शुद्धिः सूचिता ॥१६॥ सहस्रेति । ये जनाः ब्रह्मणः हिरण्यगर्भस्य प्रजापतेः यत् प्रसिद्धं अहः दिनं मनुष्यपरिमाणेन सहस्रयुगपर्यंतं सहस्रं युगानि चतुर्युगानि सहस्रयुगानि सहस्रयुगानि पर्यंतः अवसानं यस्य तत् सहस्रयुगपर्यंतं विदुः जानंति । 'चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते'--इति पौराणिकं वचनम् । तथा ब्रह्मणः प्रजापतेः रात्रिं युगसहस्रांतां युगानां चतुर्युगानां सहस्रं युगसहस्रं युगसहस्रं अंतः पर्यवसानं यस्याः सा तां विदुः जानंति । ते जनाः महर्लोकादिवासिनः भृग्वादयः अहोरात्र-

रात्रिं युगसहस्रांतां तेऽहोरात्रविदो जनाः ॥१७॥
अव्यक्तात् व्यक्तयः सर्वाः प्रभवंत्यहरागमे ।
रात्र्यागमे प्रलीयंते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥
भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।

विदः अहश्च रात्रिश्च अहोरात्रं अहोरात्र विदंति ते अहोरात्रविदः संति । चिरकालं लोकं ब्रह्मलोकं प्राप्य पुनः आ वर्त्तंते ब्रह्मलोकव्यतिरिक्ताः जनाः पुनः आवर्त्तंते इति किमु वक्तव्यम्? ॥ १७ ॥ अव्यक्तादिति । अहरागमे अह्नः दिवसस्य आगमः प्रादुर्भावः अहरागमः तस्मिन् अहरागमे ब्रह्मलोके दिनप्रादुर्भावे प्रजापतेः प्रबोधसमये अव्यक्तात् न व्यक्तं अव्यक्तं तस्मात् अव्यक्तात् मूलकारणात् श्रीनारायणाख्यात् मत्तः सर्वाः संपूर्णाः व्यक्तयः हिरण्यगर्भादिमूर्त्तयः प्रभवंति प्रादुर्भवंति व्यवहारक्षमतया अभिव्यज्यंते । पुनश्च रात्र्यागमे रात्रेः आगमः प्राप्तिः रात्र्यागमः तस्मिन् रात्र्यागमे स्थित्यवसाने ब्रह्मणः स्वापकाले पूर्वोक्ताः सर्वाः व्यक्तयः हिरण्यगर्भादिमूर्त्तयः तत्रैव तस्मिन्नेव अव्यक्तसंज्ञके श्रीमन्नारायणे मयि प्रलीयंते लीनाः भवंति । ब्रह्मलोके सूर्योदयास्तमयाभावेपि दिनरात्राभिधानं ज्ञेयम् ॥ १८ ॥ भूतग्राम इति । यः भूतसमूहः पूर्वं रात्र्यागमे अव्यक्तसंज्ञके श्रीनारायणे विलीनो जनः स एव पूर्वस्मिन् कल्पे स्थितः अयं एतस्मिन् कल्पे जायमानोपि न तु प्रतिकल्पं अन्यः अन्यः भूतग्रामः भूतानां चराचरप्राणिनां ग्रामः समूहः भूतग्रामः स्थावरजंगमलक्षणः भूतसमुदायः अहरागमे अह्नः दिवसस्य आगमः प्राप्तिः तस्मिन् अहरागमे भूत्वाभूत्वा उत्पद्य उत्पद्य पुनः कर्मक्षये अवशः सन् प्रलयाधीनः सन् रात्र्यागमे रात्रेः

रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९ ॥

परस्तस्मात्तु भावोन्योऽव्यक्तोव्यक्तात् सनातनः ।
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥२०॥

अव्यक्तोक्षर इत्युक्तस्तमाहुः परमां गतिम् ।

आगमः प्राप्तिः रात्र्यागमः तस्मिन् प्रलीयते लीनो भवति पुनरपि अहरागमे प्रभवति उत्पन्नो भवति । घटीयंत्रवत् अजस्रं उत्पत्ति-प्रलयौ अनुभवति । ते इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतंगो वा दंशो वा मशको वा यद्यद्भवति तदा तथैव भवंति । 'सूर्याचंद्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चांतरिक्षम्'—इति श्रुतेः ॥१९॥ परस्तस्मादिति । तस्मात् चराचर-स्थूलप्रपंचकारणभूतात् अव्याकृतात् हिरण्यगर्भाख्यात् परः व्यति-रिक्तः वा श्रेष्ठः अन्यः विलक्षणः अव्यक्तः केनापि प्रकारेण व्यक्तः स्पष्टः न भवतीति अव्यक्तः रूपादिहीनतया चक्षुराद्यगोचरः अस्पष्टः भावः सद्रूपता सनातनः चिरंतनः एतादृशः यः भावः । अस्ति इति शेषः । सः भावः हिरण्यगर्भे इव सर्वेषु समग्रेषु भूतेषु चराचरभूतेषु नश्यत्सु सत्सु न विनश्यति उत्पद्यमानेष्वपि नोत्पद्यते हिरण्यगर्भस्य तु कार्यस्य भूताभिमानित्वात् उत्पत्तिविनाशाभ्यां युक्तत्वं उत्पत्तिविनाशौ न तु परमेश्वरस्य ॥ २० ॥ अव्य-क्त इति । मया यः भावः अव्यक्तः अतींद्रियः अक्षरः कारणा-वस्थायां क्षरंत्यां सत्यामपि न क्षरतीति अक्षरः इति एवंप्रकारेण उक्तः कथितः । वेदवादिभिः इति शेषः । वेदांतज्ञाः तं भावं परमां उत्कृष्टां गतिं गम्यत इति गतिः तां गतिं उत्पत्तिविनाशशून्यस्वप्रका-शपरमानंदरूपां गतिं पुरुषार्थविश्रांतिं आहुः कथयंति । मानिनः इति

यं प्राप्य न निवर्तंते तद्धाम परमं मम ॥ २१ ॥
पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यांतःस्थानिभूतानि येन सर्वमिदं ततम् ॥ २२ ॥
यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।

शेषः । यं भावं प्राप्य लब्ध्वा न निवर्त्तंते पुनर्जन्म न प्राप्नुवंति । सिंधुं प्राप्य सैंधवमिवेत्यर्थः । तत् प्रसिद्धं मम विष्णोः परमं उत्कृष्टं धाम स्वरूपं त्वं जानीहि इति शेषः ॥२१॥ पुरुषः स पर इति । हे पार्थ! सः प्रसिद्धः परः अक्षरात् परः पुरुषः सर्वस्मात् पुरा आस इति पुरुषः परमात्मा अहमेव अनन्यया न विद्यते अन्यो यस्यां सा अनन्या तया अनन्यया अव्यभिचारिण्या प्रेमलक्षणया भक्त्या भजनेन लभ्यः लब्धुं योग्यः लभ्यः भवामि । तत्त्वमस्यादिवाक्य-श्रवणानंतरं भजनविरोधभयेऽत्र वाच्यार्थद्वयत्यागपुरःसरं एकाकीभा-वभजनेन अहं लभ्यः इति तात्पर्यम् । यस्य परमात्मनः मम अंतस्थानि अंतः अभ्यंतरे तिष्ठंति तानि यत्सत्तायां वर्त्तमानानि भूतानि आकाशा-दीनि स्थावरांतानि संति येन सच्चिद्रूपेण मया सर्वं अव्यक्तादिस्थावरांते इदं परोक्षापरोक्षविषयं ततं व्याप्तम् रज्ज्वादिना सर्पादिवत् ॥२२॥ यत्रेति । प्राणोत्क्रमणानंतरं यत्र यस्मिन् काले कालाभिमानिनीदेवतो-पलक्षिते मार्गे प्रयाताः गताः योगिनः चेत्यपरं उपासकाः चेत्यपरं कर्मिणः अनावृत्तिं अपरावृत्तिं चेत्यपरं आवृत्तिं परावृत्तिं यांति गच्छंति । देवयानमार्गे उत्तरायणे प्रयाताः उपासकाः अनावृत्तिं यांति पितृयानमार्गे दक्षिणायने प्रयाताः कर्मिणः आवृत्तिं यांति । तथापि एवं सत्यपि पितृयानमार्गे गताः आवर्त्तंत एव । केपि क्रममुक्तिभाजः देवयानमार्गे गता यदि तर्हि केचित् आवर्त्तंते भोगांते क्रमेण मुच्यंते ।

प्रयाता यांति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥
अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छंति ब्रह्म ब्रह्मविदो जनाः ॥२४॥
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।

हे भरतर्षभ ! अहं तं देवयानपितृयानकालं कालाभिमानिनीदेवतोपलक्षितं मार्गं वक्ष्यामि कथयामि ॥ २३ ॥ अग्निरिति । अग्निज्योतिःशब्दाभ्यां अर्चिरभिमानिनी देवता लक्ष्यते । अहः इति दिवसाभिमानिनी देवता लक्ष्यते । शुक्लः इति शुक्लपक्षाभिमानिनी देवता लक्ष्यते । उत्तरायणं उत्तरायणरूपाः षण्मासाः इति उत्तरायणाभिमानिनी देवता लक्ष्यते । एतच्च अन्यासामपि श्रुत्युक्तानां संवत्सरदेवलोकादिदेवतानां उपलक्षणार्थं एवंभूतः यः मार्गः वर्त्तते तत्र तस्मिन् देवयानमार्गे प्रयाताः गताः ब्रह्मविदः सगुणब्रह्मोपासकाः जनाः भगवदुपासकाः ब्रह्म सगुणं ब्रह्म गच्छंति प्राप्नुवंति यथाक्रमेण अतिवाहिकाभिः देवताभिः उत्तरोत्तरं नीताः संतः ब्रह्मलोकं प्राप्नुवंति । न पुनर्यांति इति अपुनरावृत्तिः दर्शिता ॥ २४ ॥ धूम इति । धूमशब्देन कर्मोपलक्षितं धूमः धूमाभिमानिनी देवता लक्ष्यते । रात्रिः रात्र्यभिमानिनी देवता लक्ष्यते । तथा कृष्णः कृष्णपक्षः कृष्णपक्षाभिमानिनी देवता लक्ष्यते । दक्षिणायनं दक्षिणायनरूपाः षण्मासाः षण्मासाभिमानिन्यः तिस्रः देवताः लक्ष्यंते । एताभिः देवताभिः मार्गः उपलक्षितः तत्र तस्मिन् पितृयानमार्गे प्रयातः सन् मृतः सन् योगी कर्मयोगी चांद्रमसं ज्योतिः तदुपलक्षितं स्वर्गलोकं वा पितृलोकं 'कर्मणा पितृलोक' इति श्रुतेः । प्राप्य तत्र श्रौतस्मार्त्तकर्म-

तत्र चांद्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५ ॥
शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्यया ऽऽवर्तते पुनः ॥ २६ ॥
नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।
तस्मात् सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७ ॥

फलं भुक्त्वा निवर्त्तते पुनः मृत्युलोकं प्राप्नोति । उपासकानां अपुनरावृत्तिः कर्मिणां पुनरावृत्तिः अर्थात् तदुभयरहितानां क्षुद्रयोनिप्राप्तिः दर्शिता ॥ २५ ॥ उक्तौ मार्गौ उपसंहरति । शुक्लकृष्णे इति । एते इदानीं कथिते शुक्लकृष्णे शुक्ला प्रकाशमयत्वेन अर्चिरादिगतिः च कृष्णा तमोमयत्वेन धूमादिगतिः शुक्लकृष्णे देवयानपितृयानलक्षणे गती गम्येते इति गती मार्गौ जगतः ज्ञानकर्माधिकारिणः जन्ममरणे गच्छतः प्राणिनः शाश्वते यावत् साक्षात्कारं वर्त्तमाने मते मम चेत्यपरं वेदस्य मान्ये आस्ताम् । संसारस्य अनादित्वात् । तयोः मार्गयोः मध्ये पुरुषः एकया देवयानमार्गेण अनावृत्तिं मोक्षं याति गच्छति । अन्यया तद्विलक्षणेन धूममार्गेण पितृयानेन पुनः आवर्त्तते जन्म प्राप्नोति ॥ २६ ॥ नैत इति । हे पार्थ! कश्चन कश्चिदपि योगी ध्याननिष्ठः एते उक्तलक्षणे सृती मार्गौ जानन् सन् जानातीति जानन् क्रमेण एका मोक्षाय अपरा संसाराय इति जानन् न मुह्यति न मोहं प्राप्नोति केवलं धूमादिमार्गप्रापकं कर्म न करोति । हे अर्जुन! त्वं तस्मात् योगस्य अपुनरावृत्तिफलत्वात् सर्वेषु सर्वासु कालेषु अवस्थासु योगयुक्तः योगेन मदैक्येन युक्तः संबद्धः योगयुक्तः समाहितचित्तः भव अपुनरावृत्तये स्थिरो भव ॥ २७॥ वेदेष्विति । वेदेषु दर्भपवित्रपाणि-

वेदेषु यज्ञेषु तपःसु चैव
दानेषु यत्पुण्यफलं प्रदिष्टम् ।
अत्येति तत्सर्वमिदं विदित्वा
योगी परं स्थानमुपैति चाद्यम् ॥ २८ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु० ब्रह्माक्षरनिर्देशो नामाष्टमोऽध्यायः ॥ ८ ॥

त्वप्राङ्मुखत्वगुर्वधीनत्वादिभिः सम्यक् अधीतेषु यज्ञेषु अंगोपांगसाहित्येन श्रद्धया सम्यक् अनुष्ठितेषु तपःसु शास्त्रोक्तेषु मनोबुद्ध्याद्यैकाग्र्येण श्रद्धया स्नुतप्तेषु चेत्यपरं दानेषु तुलापुरुषादिषु देशे काले च पात्रे च श्रद्धया सम्यक् दत्तेषु यत् प्रसिद्धं पुण्यफलं पुण्यस्य धर्मस्य फलं स्वर्गराज्यादिफलं पुण्यफलं प्रदिष्टं शास्त्रेण कथितं योगी योगो मदैक्यं यस्यास्तीति योगी ध्याननिष्ठः इदं पूर्वोक्तसप्तप्रश्नद्वारेणोक्तं विदित्वा सम्यगनुष्ठानपर्यंतं ज्ञात्वा तत् प्रसिद्धं सर्वं संपूर्णं अत्येति अतिक्रम्य गच्छति । किं च आद्यं सर्वेषां कारणानां कारणं अत एव परं उत्कृष्टं स्थानं सर्वाधिष्ठानं उपैति प्रतिपद्यते । ब्रह्मैव प्राप्नोतीत्यर्थः ॥ २८ ॥ इति श्रीबालबोधिन्यां श्रीमद्भगवद्गीताटीकायां अष्टमोऽध्यायः ॥ ८ ॥



श्रीभगवानुवाच ।

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥
राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥

श्रीः। इदं त्विति। हे अर्जुन! अहं ते तुभ्यं पूर्वाध्याये उक्तमेव इदं तु वक्ष्यमाणं अधुना प्रोच्यमानं ज्ञानं शब्दप्रमाणकं ब्रह्म तत्त्वविषयकं साक्षान्मोक्षं प्रति साधनकं प्रवक्ष्यामि प्रकर्षेण वक्ष्यामि। ज्ञानेन इहैव साक्षात्कारं प्राप्य विमुक्तः सन् जीवन्मुक्तः सन् प्रारब्धकर्मक्षये विदेहकैवल्यं प्राप्नोति। कथंभूतं ज्ञानम्। गुह्यतमं अतिशयेन गुह्यं इति गुह्यतमं अत्यंतगोपनीयम्। पुनः कथंभूतं ज्ञानम्। विज्ञानसहितं विज्ञानेन अनुभवेन सहितं युक्तम् त्वं यत् ज्ञानं ज्ञात्वा प्राप्य साक्षात्कृत्य अशुभात् संसारदुःखात् मोक्ष्यसे मुक्तो भविष्यसि। कथंभूताय ते। अनसूयवे न विद्यते असूया मयि दोषारोपणं यस्य सः अनसूयुः तस्मै पुनः पुनः स्वमाहात्म्यमेव उपदिशति एवं परमकारुणिके मयि दोषदृष्टिरहिताय॥१॥ किंच। पुनः कथंभूतं ज्ञानम्। राजविद्या सर्वासां विद्यानां राजा इति राजविद्या। पुनः कथंभूतम्। राजगुह्यं सर्वेषां गुह्यानां राजा इति राजगुह्यं अनेकजन्मसुकृतसाध्यं पवित्रं पवेः मृत्योः त्रायते संरक्षते इति पवित्रं जन्मार्जितसंचितशोधकं इदं अनेकजन्मसहस्रसंचितानां सर्वेषामपि पापानां स्थूलसूक्ष्ममात्रस्थानां तत्कारणस्य अज्ञानस्य सद्य एव उच्छेदकम्। पुनः कथंभूतम्। उत्तमं उद्गतं तमः गुणत्रयं यस्मात् तत् उत्तमं संसारदोषशोधकत्वेन सर्वोत्कृष्टम्। पुनः

अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप ।
अप्राप्य मां निवर्तंते मृत्युसंसारवर्त्मनि ॥ ३ ॥
मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥

कथंभूतम् । प्रत्यक्षावगमं अवगम्यते अनेनेति अवगमः प्रत्यक्षः अवगमः साक्षिप्रत्ययः यस्मिन तत् । पुनः कथंभूतम् । धर्म्यं विषयेंद्रियाधिष्ठानत्वेन तत्प्रकाशकत्वेन वर्त्तमानम् । पुनः कथंभूतम् । कर्त्तुं साक्षात्कर्तुं सुसुखं अनायासेनैव अनुभवसिद्धम् । पुनः कथंभूतम् । अव्ययं अस्य फलतः व्ययो नास्ति इति अव्ययं अक्षयफलम् ॥२॥ अश्रद्दधाना इति । हे परंतप ! परं अहंकाररूपं अनादिशत्रुं तापयति दूरीकरोतीति परंतपः तत्संबुद्धौ हे अर्जुन! अस्य प्रत्यक्षत्वेन वर्त्तमानस्य धर्मस्य आत्मज्ञानलक्षणस्य अश्रद्दधानाः श्रद्दधानाः भक्तियुक्ताः न भवंति ते अश्रद्दधानाः अस्मिन् धर्मे श्रद्धारहिताः पुरुषाः पुरीषवत् शरीरस्थाः मां स्वरूपभूतं वासुदेवं अप्राप्य (किं वक्तव्यं मत्प्राप्त्युपायमपि अप्राप्य) मृत्युसंसारवर्त्मनि मृत्युयुक्तश्चासौ संसारश्च मृत्युसंसारः मृत्युसंसार एव वर्त्म मार्गः तस्मिन् निवर्त्तंते नितरां वर्त्तंते वर्तनं कुर्वंति आत्मानं विस्मृत्य अनेकविधं संसारं अनुभवंति । सर्वदा जननमरणप्रबंधेन नारकीतिर्यगादियोनिष्वेव भ्रमंतीत्यर्थः ॥ ३ ॥ तदेवं वक्तव्यतया प्रस्तुतस्य ज्ञानस्य स्तुत्या श्रोतारं अभिमुखीकृत्य तदेव ज्ञानं कथयति । मया ततमिति । मया कारणभूतेन सत्यज्ञानानंतमूर्त्तिना इदं साक्षिप्रत्यक्षं सर्वं दृष्टश्रुतं जगत् गच्छतीति जगत् जंगमधर्मं चराचरविश्वं नश्वरं स्वसत्तास्फुरणाभ्यां ततं व्याप्तम् । अन्यदपि ममैश्वर्यं शृणु । कथंभूतेन मया । अव्यक्तमूर्त्तिना अव्यक्ता

न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः॥ ५॥
यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान्।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय॥ ६॥

अतींद्रिया मूर्त्तिः स्वरूपं यस्य सः तेन निर्विशेषस्वरूपेण सर्वभूतानि सर्वाणि च तानि भूतानि अव्यक्तादीनि स्थावरांतानि मत्स्थानि मयि कारणभूते तिष्टंति तानि तथोक्तानि संति। चेत्यपरं अहं तेषु भूतेषु नावस्थितः न तिष्ठामि असंगत्वात्॥ ४॥ न चेति। किंच मयि कल्पितानि भूतानि पृथिव्यादीनि स्थावरांतानि सत्यत्वेन मत्स्थानि मयि तिष्टंति तानि न संति। त्वं अर्जुनः प्राकृतां मनुष्यबुद्धिं हित्वा मे मम ऐश्वरं ईश्वरस्य अयं ऐश्वरः तं योगं युक्तिं अघटितघटनाचातुर्यं पश्य अवलोकय। मदीययोगमायावैभवस्य अवितर्क्यत्वात् न किंचित् विरुद्धमित्यर्थः। अन्यदपि आश्चर्यं पश्येत्याह। भूतभृत् भूतानि बिभर्ति धारयतीति भूतभृत् भूतभावनः भूतानि भावयति पालयतीति भूतभावनः एवंभूतः मम आत्मा परं स्वरूपं भूतस्थः भूतेषु तिष्ठतीति भूतस्थः न भवति। यथा जीवः देहं बिभ्रत् पालयन् अहंकारेण युक्तः सन् तिष्ठति। एवं अहं भूतानि धारयन पालयन् अपि तेषु भूतेषु न तिष्ठामि निरहंकारत्वात्॥ ५॥ यथेति। यथैव असंगस्वभावे आकाशस्थितः आकाशे स्थितः वायुः वातीति वायुः पवनः नित्यं सर्वदा उत्पत्तिस्थितिसंहारकालेषु सर्वदा चलनस्वभावः अत एव सर्वत्रगः सर्वत्र सर्वस्थलेषु गच्छतीति सर्वत्रगः। सर्वगः अस्तीति शेषः। कथंभूतः वायुः। महान् महाभूतात्मकः एतादृशोपि वायुः कदाचिदपि आकाशेन सह न संसृज्यते न संगच्छते तथैव असंग-

सर्वभूतानि कौंतेय प्रकृतिं यांति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥७॥
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८ ॥

स्वभावे मयि संश्लेषं संयोगराहित्येन विना सर्वाणि संपूर्णानि भूतानि आकाशादीनि मत्स्थानि मयि तिष्ठंति तानि मत्स्थानि संति । इति एवं प्रकारेण त्वं उपधारय जानीहि । विचार्य इति शेषः । अधिष्ठानव्यतिरेकेण अध्यस्ताभावात् अनन्यत्वं उक्तम् ॥ ६ ॥ सर्वभूतानीति । हे कौंतेय ! सर्वभूतानि सर्वाणि च तानि भूतानि च सर्वभूतानि ब्रह्मादिस्तंबपर्यंतानि कल्पक्षये कल्पस्य क्षयः नाशः तस्मिन् कल्पक्षये प्रलयकाले मामिकां मम इयं मामिका तां मदीयशक्तिरूपां प्रकृतिं प्रकर्षेण कृतिः प्रयत्नविशेषः सर्गादिजननानुकूलसामर्थ्यं यस्याः सा तां प्रकृतिं त्रिगुणात्मिकां मायां स्वकारणभूतां यांति । तत्रैव सूक्ष्मरूपेण लीयंते इत्यर्थः । पुनश्च कल्पादौ कल्पस्य आदिः प्रथमं कल्पादिः तस्मिन् सर्गकाले तत्तत्कर्मसापेक्षः अहं सर्वज्ञः सर्वशक्तिः ईश्वरः तानि सर्वभूतानि विसृजामि विविधं यथा कर्म यथा श्रुतं तथा सृजामि प्रकृतौ अविभागापन्नानि विभागेन व्यनज्मि प्रकटयामि ॥ ७ ॥ प्रकृतिमिति । अहं निमित्तोपादानकारणभूतः स्वां स्वकीयां प्रकृतिं मायाख्यां अनिर्वचनीयां कार्यजननानुकूलशक्तिं अवष्टभ्य पुरस्कृत्य सत्तास्फूर्तिभ्यां दृढीकृत्य इमं प्रत्यक्षदृष्टं कृत्स्नं समग्रं भूतग्रामं भूतानां ग्रामः समुदायः तं भूतग्रामं प्रलये लीनं चतुर्विधं भूतसमुदायं कर्मादिपरवशं पुनः पुनः तत्तत्सर्गकाले विसृ-

न च मां तानि कर्माणि निबध्नंति धनंजय ।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९ ॥
मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनानेन कौंतेय जगद्विपरिवर्त्तते ॥ १० ॥

जामि विशेषेण विविधप्रकारेण निर्माणं करोमि। स्वसत्तारूपां प्रकृतिं कारणत्वेन पुरस्कृत्य स्वरूपेण निमित्तोहं भूतग्रामं विसृजामीत्यर्थः। कथंभूतं भूतग्रामम्। प्रकृतेः प्राचीनकर्मसंस्कारस्य वशात् तद्वशवर्तित्वात् अवशं अस्वाधीनं प्राचीनकर्मसंस्काराधीनम् ॥ ८ ॥
न चेति। हे धनंजय! धनंजयतीति धनंजयः तत्संबुद्धौ हे धनंजय! युधिष्ठिरराजसूयार्थं सर्वान् राज्ञः जित्वा धनं आहृतवान् इति महान् प्रभावः सूचितः। तानि सृष्ट्यादीनि कर्माणि कर्त्तव्यानि मां सर्वातीतं सर्वकारणं न निबध्नंति बंधनं नापादयंति। यथा राजामात्यादिवासनानुसारेण इंद्रजालादीनि स्वनिर्मातारं न निबध्नंति तद्वत्। कथंभूतं माम्। उदासीनवत् उदासीनेन तुल्यं उदासीनवत् उदासीनमिव आसीनं स्थितम्। पुनः कथंभूतं माम्। तेषु प्रसिद्धेषु कर्मसु सृष्ट्यादिकार्येषु असक्तं अहं करोमीत्यभिमानलक्षणेन संगेन रहितम्। यथा गृही गृहं प्राप्तं अतिथिकर्मादीनि स्वनिमित्तानि प्राप्तानि आतिथ्यादिगृहकार्याणि न निबध्नंति तद्वत्। जीवस्तु साहंकारेण करोति तेन तस्य बंधः मम अत्र निरहंकारत्वात् कर्मबंधो नास्ति इति ज्ञेयम् ॥ ९ ॥
मयेति। मया सर्वतः दृश्यमात्रस्वरूपेण अध्यक्षेण अधिष्ठात्रा निमित्तेन प्रकृतिः मदीया माया त्रिगुणात्मिका सचराचरं चराचराभ्यां सहितं सचराचरं स्थावरजंगमं विश्वं सूयते जनयति। हे कौंतेय! हेतुना निमित्तेन अनेन अध्यक्षत्वेन जगत् स्थावरजंगमात्मकं विश्वं विपरि-

अवजानंति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानंतो मम भूतमहेश्वरम् ॥ ११ ॥
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥१२॥

वर्त्तते विविधाकारेण देवमनुष्यतिर्यगादिरूपेण प्रतिकल्पं आवर्त्तते जन्ममरणे अनुभवति ॥१०॥ अवजानंतीति । मूढाः अविवेकिनः मूर्खाः जनाः मां परमात्मानं अपरिच्छिन्नं अवजानंति अवमन्यंते साक्षात् ईश्वरोयं इति नाद्रियंते । किंतु निंदंति । कथंभूतं माम् । मानुषीं मनुष्यस्य इयं मानुषी तां तनुं शरीरं आश्रितं अधिष्ठितम् । अयं मनुष्यः इति भ्रांत्या आच्छादितांतःकरणाः मम सत्यज्ञानानंतादिलक्षणस्य परं सर्वोत्कृष्टं भावं पारमार्थिकं तत्त्वं सत्तां अजानंतः सतः अवजानंतः संतः मां परमात्मानं नाद्रियंते निंदंति । कथंभूतं भावम् । भूतमहेश्वरं महांश्चासौ ईश्वरश्च महेश्वरः भूतानां आकाशादीनां महेश्वरः तं कारणम् ॥ ११ ॥ मोघाशा इति । कथंभूताः मूढाः । मोघाशाः सर्वरूपं मां अवज्ञाय मत्तः अन्यं देवतांतरं मह्यं ईप्सितं फलं दास्यति इति मोघाः निष्फलाः आशाः येषां ते मोघाशाः अत एव मां अंतर्यामिणं विस्मृत्य साहंकारेण मोघकर्माणः मोघानि संसारारंभकत्वात् निष्फलानि कर्माणि नित्यनैमित्तिकादीनि येषां ते मोघकर्माणः अत एव मोघज्ञानाः एकमेवाद्वितीयं ब्रह्म इति एकत्वज्ञानं अनादृत्य मोघं निष्फलं ज्ञानं नानाकुतर्काश्रितं शास्त्रज्ञानं येषां ते मोघज्ञानाः अत एव विचेतसः सात्त्विकज्ञानशून्यत्वात् विक्षिप्तचित्ताः पिशाचतुल्या इत्यर्थः । अत एव राक्षसीं राक्षसानां देहाहंकारेण स्वात्मानं तिरस्कुर्वतां इयं राक्षसी तां तामसीं हिंसाप्र-

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजंत्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३ ॥
सततं कीर्तयंतो मां यतंतश्च दृढव्रताः ।
नमस्यंतश्च मां भक्त्या नित्ययुक्ता उपासते ॥१४॥

सुरीं चेत्यपरं आसुरीं असुराणां शरीरमेव स्वीकृत्य नानाविषयैः तल्लालनं कुर्वतां इयं आसुरी तां कामदर्पादिबहुलां चेत्यपरं मोहिनीं मोहानां आत्मपरविवेकभावशून्यानां इयं मोहिनी तां कुंभकर्णनिद्रातुल्यां केवलां तामसीं बुद्धिभ्रंशकरीं प्रकृतिं स्वभावं श्रिताः आश्रित्य स्थिताः । 'त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः । कामः क्रोधस्तथा लोभः' इत्युक्तनरकद्वारभागितया नरकयातनामेव सततं अनुभवंतीत्यर्थः।तेषां जीवितेन सर्वोपि व्यवहारः निष्फल इति भावः॥१२॥

महात्मानस्त्विति। हे पार्थ! महात्मानः महति अपरिच्छिन्ने मयि आत्मा चित्तं येषां ते महात्मानः अथवा महान् अनेकजन्मसु कृतसुकृतैः संस्कृतः आत्मा चित्तं येषां ते महात्मानः अक्षुद्रचित्ताः अनन्यमनसः संतः मद्व्यतिरेकेण न अन्यस्मिन् मनो येषां ते अनन्यमनसः भूतादिं सर्वजगत्कारणं अव्ययं अविनाशिनं मां ईश्वरं ज्ञात्वा साक्षात्कृत्य भजंति सेवंते । आत्मना सह सर्वं वासुदेव इति उपासंत इत्यर्थः । कथंभूताः महात्मानः। दैवीं देवस्य स्वयंप्रकाशस्य विष्णोः इयं दैवी तां दैवीं प्राप्त्युपायभूतां प्रकृतिं स्वभावं आश्रिता अधिष्ठिताः ॥१३॥

सततमिति।केचन सततं निरंतरं मां सर्वात्मानं कीर्त्तयंतः संतः कीर्त्तयंति ते कीर्त्तयंतः यथा घटकुंडलादीनां मृत्सुवर्णादिवत् सर्वं ब्रह्मादिस्तंबपर्यंतं अंतर्बहिर्व्याप्य श्रीभगवान् नारायणः वासुदेवः परमात्मा व्यवस्थितः इति कीर्त्तनं कुर्वन्तः संतः उपासते भजंति । अपरे मां सर्वात्मकं

ज्ञानयज्ञेन चाप्यन्ये यजंतो मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १५ ॥
अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।

शास्त्रेण ज्ञात्वा साक्षात्कारायैव यतंतः संतः यतंति ते यतंतः प्रयत्नं कुर्वंतः संतः भजंति । किंच केचन दृढव्रताः संतः दृढं सर्वात्मको वासुदेव इति यथाश्रुतमेव दृढं व्रतं मानसनियमो येषां ते दृढव्रताः उपासते । किंच केचन मां हृदयस्थं अनुभूय भक्त्या साधनभक्तिसंस्कारप्रेम्णा नमस्यंतः संतः नमस्यंति ते नमस्यंतः यथा उच्चैः पतितं जलं निम्नप्रदेशं लुंठति यथा सफलवृक्षः मूलपर्यंतं नम्रो भवति तथा सर्वभूतानि नमस्कुर्वंतः संतः उपासते भजंति । अन्ये नित्ययुक्ताः संतः नित्ये नित्यस्वरूपे युक्ताः नित्ययुक्ताः द्वैतप्रत्ययतिरस्कारेण अद्वैतप्रत्ययस्वीकारेण समाहिताः भूत्वा उपासते भजंति ॥ १४ ॥ ज्ञानयज्ञेनेति । किंच अन्ये ज्ञाननिष्ठाः ज्ञानयज्ञेन ज्ञानमेव यज्ञः ज्ञानयज्ञः तेन ज्ञानयज्ञेन वासुदेवः सर्वमिति सर्वात्मत्वदर्शनज्ञानेन मां सर्वांतर्यामिणं यजंतः संतः यजंति ते यजंतः उपासते भजंति । यथा यज्ञपुरुषे हविरादिहुतं सत् तद्रूपमेव भवति तथा ज्ञानरूपे मयि सर्वं दृश्यजातं अंतर्भावितं सत् मद्रूपं भवति । केचन एकत्वेन गुरुमुखात् तत्त्वमस्यादिवाक्यश्रवणानंतरं वाक्यार्थज्ञानेन उपासते उप सामीप्येन आसते आसनं कुर्वंति । तद्रूपेण तिष्ठंतीत्यर्थः । केचित् असंभावनाविपरीतभावनाभ्यां मध्यमप्रज्ञाः पृथक्त्वेन ब्रह्माहमस्मीति उपासते उपासनं कुर्वंति । अन्ये बहुधा बहुप्रकारेण विश्वतोमुखं सर्वतोमुखं सर्वरूपं मां उपासते । भावयंतीत्यर्थः ॥ १५ ॥ उक्तं विश्वतोमुखत्वं स्पष्टयति अहमिति चतुर्भिः । अहं

मंत्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १६ ॥
पिताहमस्य जगतो माता धाता पितामहः ।
वेद्यं पवित्रमोंकार ऋक्साम यजुरेव च ॥ १७ ॥
गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।

वासुदेवः क्रतुः श्रौतोऽग्निष्टोमादिः । अस्मि इति शेषः । इति केचन भावयंति इति सर्वत्रानुषंगः । अहं वासुदेवः यज्ञः स्मार्त्तः पंचयज्ञादिः यद्वा क्रतुः सयूपः यज्ञः अयूपः अहं वासुदेवः स्वधा पितॄनुद्दिश्य श्राद्धादिः अस्मि । अहं वासुदेवः औषधं व्रीहियवादिप्रभवं अन्नं अस्मि । अहं वासुदेवः मंत्रः कर्मोपयुक्तः याज्या पुरोनुवाक्यादिः अस्मि । अहमेव आज्यं होमसाधनं अस्मि । अहं अग्निः हवनीयादिः होमाधिकरणं अस्मि । अहं वासुदेवः हुतं आज्यादिहोमः अस्मि । एतत्सर्वं अहमेवेत्यर्थः । क्रियाकारकं फलजातं किमपि भगवदतिरिक्तं नास्ति ॥ १६ ॥ पिताहमिति । अस्य विद्यमानस्य जगतः विश्वस्य अहं वासुदेवः पिता जनकः अस्मि । अहं माता जननी च अस्मि । अहं धाता कर्मफलनिर्माता पोषयिता वा अस्मि । अहं पितामहः पितुः पिता अस्मि । अहं वेद्यं वेदितुं ज्ञातुं योग्यं वेद्यं ज्ञेयमात्रं अस्मि । अहं पवित्रं पूयते अनेनेति पवित्रं पावनं शुद्धिहेतुर्गंगास्नानं गायत्रीजपादि अस्मि । अहं ॐकारः प्रणवः वेदमूलं अस्मि । अहं वासुदेवः ऋक् ऋग्वेदः चेत्यपरं साम सामवेदः च यजुः यजुर्वेदः एवकारात् अथर्वांगिरसोपि गृह्यंते अहं सर्वमस्मि ॥ १७ ॥ किंच गतिरिति । अहं गतिः गम्यते प्राप्यते इति गतिः फलं अस्मि । अहं भर्त्ता पालयिता अस्मि । अहं प्रभुः स्वामी मदीयः अयं इति स्वीकर्त्ता । अहं साक्षी सर्वशुभा-

प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥१८॥
तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १९ ॥
त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयंते ।

शुभद्रष्टा । अहं निवासः निवसंति यस्मिन्निति निवासः प्राणिनां भोगस्थानम् । अहं शरणं शीर्यते क्षीयते दुःखमस्मिन्निति शरणं प्रपन्नार्त्तिहृत् सुहृत् प्रत्युपकारानपेक्षः सन् उपकारी अहं । प्रभवः प्रकर्षेण भवति यस्मादिति प्रभवः चराचरस्रष्टा । अहं प्रलयः प्रकर्षेण लीयंते अनेनेति प्रलयः संहर्त्ता । अहं स्थानं तिष्ठति अस्मिन्निति स्थानं स्थितिः। अहं निधानं निधीयते यस्मिन्निति निधानं प्रलयस्थानम् । अहं बीजं चराचरकारणम् । अहं अव्ययं व्ययरहितम् । अविनाशीत्यर्थः ॥ १८ ॥ तपामीति । किंच हे अर्जुन! अहं तपामि ग्रीष्मकाले सूर्यात्मना जगतः संतापं करोमि । अहं वर्षं वृष्टिं निगृह्णामि आकर्षामि । कदाचित्तु अहं वर्षं वृष्टिं उत्सृजामि विमुंचामि । किंच अहं अमृतं देवानां सर्वप्राणिनां जीवनं चेत्यपरं अहं मृत्युः मर्त्यानां सर्वप्राणिनां विनाशः अस्मि च अहं सत् स्थूलं दृश्यं कार्यजातं असत् सूक्ष्मं अदृश्यं कारणं अस्मि । एतत् सर्वं अहमेव इति मत्वा मामेव बहुधा उपासते ॥ १९ ॥ एकत्वेन वा पृथक्त्वेन ये पुरुषाः मां परमेश्वरं श्रीवासुदेवं न भजंति तेषां पुरुषाणां पुनः पुनः जन्ममरणप्रवाहः भवति इति आह द्वाभ्याम् । त्रैविद्या इति । तिस्रः विद्याः ऋग्यजुःसामलक्षणाः विद्याः येषां ते त्रिविद्याः त्रिविद्या एव त्रैविद्याः अ-

ते पुण्यमासाद्य सुरेंद्रलोक-
मश्नंति दिव्यान् दिवि देवभोगान् ॥ २० ॥
ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशंति ।

थवा तिस्रः विद्याः अधीयते जानंति ते त्रैविद्याः । वेदत्रयोक्तकर्मतत्परा इत्यर्थः । इंद्रादिरूपेण मां वासुदेवं अवजानंतः संतः अवजानंति अपमानयंति ते अवजानंतः अज्ञानेन देवतांतरोद्देशेन मामेव यज्ञैः वेदत्रयविहितैः यज्ञैः इष्ट्वा पूजयित्वा स्वर्गतिं स्वर्गस्य गतिः फलं स्वर्गतिः तां अंतवत् स्वर्गफलं प्रार्थयंते इच्छंति । कथंभूताः त्रैविद्याः । सोमपाः सोमं यज्ञं संपाद्य तच्छेषं सोमं पिबंति ते सोमपाः अत एव पूतपापाः तेनैव सोमपानेन पूतं पापं येषां ते पूतपापाः शोधितैकमनसः । ते त्रैविद्याः पुण्यं पुण्यफलसाध्यं सुरेंद्रलोकं सुराणां देवानां इंद्रः सुरेंद्रः तस्य इंद्रस्य लोकः तं सुरेंद्रलोकं इंद्रलोकं आसाद्य प्राप्य दिवि स्वर्गलोके देवभोगान् देवानां भोगाः देवभोगाः तान् देवभोगान् अश्नंति भुंजंति । कथंभूतान् देवभोगान् । दिव्यान् दिवि स्वर्गलोके भवाः दिव्याः तान् ॥ २० ॥ ते तमिति । ते वेदत्रयविहितकर्मपराः इंद्रादिदेवतायाजकाः तं प्रसिद्धं स्वर्गलोकं तत्रत्यं दिव्यभोगजन्यं सुखं भुंक्त्वा अनुभूय पुण्ये पुण्यकर्मणि क्षीणे सति नश्यति सति स्वर्गलोकात् च्युताः संतः भ्रष्टाः संतः मर्त्यलोकं मर्त्यानां मनुष्याणां लोकः तं मर्त्यलोकं भूप्रदेशं विशंति प्रविशंति । एवं पुनरपि पूर्वसंस्कारयोगेन ते इंद्रादिदेवतायाजकाः त्रयीधर्मं वेदत्रयीविहितं कर्म अनुप्रपन्नाः संतः अनुयुक्ताः संतः गतागतं यातायातं वारंवारं स्वर्गं गत्वा पुनः मर्त्यलोकं प्रत्यागमनं लभंते प्राप्नुवंति । कथंभूताः ते । काम-

एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभंते ॥ २१ ॥
अनन्याश्चिंतयंतो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २२ ॥
येऽप्यन्यदेवताभक्ता यजंते श्रद्धयान्विताः ।

कामाः । कामान् दिव्यभोगान् कामयंते प्रार्थयंति ते कामकामाः । कथंभूतं स्वर्गलोकम् । विशालं विपुलं मामेव देवतारूपिणं संतं विस्मृत्य तुच्छफलाशया देवतांतरं परमार्थं उद्दिश्य इष्ट्वा गमनागमनाभ्यां क्लिश्यंति न तु मां प्राप्नुवंति हा कष्टं इति भगवान् आक्रोशति ॥ २१ ॥ मद्भक्तास्तु मयि अनन्यत्वेन वर्त्तमानाः संतः प्रयासं विना अभ्युदयं चपरं निःश्रेयसं फलं प्राप्नुवंति इति आह । अनन्या इति । ये पुण्यकर्माणः जनाः सफलजन्मानः अनन्याः संतः नास्ति अन्यं मद्व्यतिरिक्तं देवतांतरं येषां ते अनन्याः मां सर्वाधिष्ठानं वासुदेवं पर्युपासते परि आसमंतात् सर्वांतर्यामिणं उपासते सेवंते । अहं वासुदेवः तेषां सफलजन्मनां नित्याभियुक्तानां नित्यं सर्वकालं अभियुक्ताः मदेकनिष्ठाः तेषां नित्याभियुक्तानां सर्वदा मच्चित्तानां योगक्षेमं योगश्च क्षेमं च योगक्षेमे योगक्षेमयोः समाहारः योगक्षेमं योगः अभ्युदयः क्षेमं निःश्रेयसं मोक्षरूपम् । यद्वा योगः अप्राप्तप्राप्तिः क्षेमं प्राप्तपरिपालनं तदुभयं तेषां अहं वहामि प्रापयामि । कथंभूताः जनाः । मां वासुदेवं चिंतयंतः चिंतयंति ते चिंतयंतः सर्वकालं मत्स्मरणं कुर्वंतः तैः अप्रार्थितमपि सर्वं ऐहामुष्मिकं संपाद्य । संरक्षामीत्यर्थः ॥ २२ ॥ येऽपीति । हे कौंतेय! ये ये इंद्रादिदेवतायाजकाः अन्यदेवताभक्ता अपि अन्याश्च ता देवताश्च अन्यदेवताः अन्यदेवतानां

तेपि मामेव कौंतेय यजंत्यविधिपूर्वकम् ॥२३॥
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च।
न तु मामभिजानंति तत्त्वेनातश्च्यवंति ते ॥ २४ ॥
यांति देवव्रता देवान् पितॄन् यांति पितृव्रताः।

भक्ताः श्रद्धयान्विताः संतः श्रद्धया भक्त्या अन्विताः संतः युक्ताः संतः यजंते पूजयंति ते इंद्रादिदेवतायाजकाः मामेव सर्वांतर्यामिणं वासुदेवमेव यज्ञेन यजंति पूजयंति इति सत्यम्। किंतु अविधिपूर्वकं यथास्यात्तथा विधिपूर्वकं न भवति यस्मिन् कर्मणि यथा भवति तथा अविधिपूर्वकं मोक्षप्रापकं विधिं विना यजंते। अतः हेतोः ते पुनरावर्त्तंत इत्यर्थः ॥ २३ ॥ अहमिति। अहमेव त्वदुपदेष्टा वासुदेव एव सर्वयज्ञानां सर्वे च ते यज्ञाश्च सर्वयज्ञाः तेषां सर्वयज्ञानां श्रौतस्मार्तकर्मणां तत्तद्देवतारूपेण भोक्ता भुनक्तीति भोक्ता भुनक्ति हविर्भागान् भक्षयतीति तथोक्तः अस्मि। चेत्यपरं अहमेव त्वदुपदेष्टा प्रभुः सर्वयज्ञफलदाता अस्मि। हि इति निश्चयेन। एवंप्रकारेण ये पुरुषाः मां वासुदेवं नाभिजानंति न मन्यंते अतः अस्मात् ममाज्ञानात् हेतोः ते अन्यथादर्शिनः पुरुषाः तत्त्वेन निश्चयेन च्यवंति स्वार्थात् भ्रष्टाः भवंति जन्ममरणद्वारा संसरंति। न तु मां प्राप्नुवंतीत्यर्थः ॥ २४ ॥ यांतीति। देवव्रताः देवानां इंद्रादीनां व्रतं भजननियमः येषां ते देवव्रताः देवान् इंद्रादीन् यांति प्राप्नुवंति। पितृव्रताः पितॄणां व्रतं श्राद्धादिनियमः येषां ते पितृव्रताः पितॄन् अर्यमादीन् यांति प्राप्नुवंति। भूतेज्याः भूतेषु विनायकमातृकादिषु इज्या पूजा येषां ते भूतेज्याः भूतानि विनायकमातृकादीनि यांति प्राप्नुवंति। एवं देवादीन् आगमापायधर्मकान् ये भजंति ते तान् प्राप्य तथैव

भूतानि यांति भूतेज्या यांति मद्याजिनोपि माम् ॥ २५ ॥
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २६ ॥
यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।

संसरंति । ये अनेकजन्मसुकृताप्तचरमजन्मानः मद्याजिनः मां यष्टुं शीलं येषां ते मद्याजिनः मद्भक्ताः मां अक्षयपरमानंदरूपं सत्यज्ञानादिलक्षणं यांति प्राप्नुवंति । सैंधवजलवत् । यथा सैंधवं जलं प्राप्य तद्रूपं भवति तथा मां प्राप्य तद्रूपाः भवंति । कारणे कार्यलयः न तु कार्ये कार्यलयः । इति कृत्वा मां प्राप्य मयि लीनाः भवंति ॥ २५ ॥ ननु—प्रभूतवित्तसाध्यैः यज्ञैः क्षययुक्तान् देवान् इष्ट्वा तदनुरूपं फलं प्राप्नुवंति । अक्षयफललाभाय तव यजने प्रभूतवित्तं अपेक्षितं स्यात् । दरिद्रस्य त्वत्प्राप्तिः अनायासेन कथं स्यात् । प्रेममात्रं अपेक्षितमस्ति इत्याशंक्याह । पत्रमिति । यः अनन्यमद्भक्तः पत्रं पुष्पं फलं तोयं उदकं भक्त्या प्रेम्णा मे मह्यं लक्ष्मीकलत्राय प्रयच्छति समर्पयति । मम तु प्रेममात्रं अपेक्षितं पत्राद्यपेक्षैव नास्ति । किं तु तदनुरोधेन तस्य यत्किंचित् भक्त्युपहृतं भक्त्या प्रेम्णा उपहृतं समर्पितं अहं मुखं प्रसार्य अश्नामि भुंजामि । ननु—पत्रं शिरसि धार्यं पुष्पं अवघ्राणयोग्यं कथमश्नासि तत्राह । प्रयतात्मनः शुद्धचित्तस्य विचार्यमाणे सति पत्रादिकं भक्षणार्हं न भवति । तथापि प्रयतात्मनः निरंतरं मद्रूपं मम स्वरूपं भावयतः पत्रादिकमपि अश्नामि भुंजामि ॥ २६ ॥ हे भगवन् ! अहमपि उक्तप्रेमभक्तसदृशः केनोपायेन भवामि इत्याकांक्षायां अतीव सुगमोपायमाह । यत्करोषीति । हे कौंतेय ! त्वं प्रेमभक्तः भवितुं इच्छसि चेत् तर्हि यत् करोषि यत् स्वाभाविकं वा वैदिकं

यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणम् ॥ २७ ॥
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबंधनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २८ ॥
समोहं सर्वभूतेषु न मे द्वेष्योस्ति न प्रियः ।

कर्म करोषि निर्वर्तयसि यत् किमपि अश्नासि भक्षयसि अथवा सर्वान् विषयान् सेवसे । यत् अग्नौ होमादिकं जुहोषि करोषि यत् ददासि स्त्रीपुत्रादिभ्यः अन्नवस्त्रादिकं प्रयच्छसि यत् तपस्यसि तपः स्वधर्मादिकं कृच्छ्रचांद्रायणादिकं करिष्यसि तत् उक्तं अनुक्तलक्षणं सर्वं मदर्पणं मयि वासुदेवे अर्पणं समर्पणं यथा भवति तथा कुरुष्व ॥ २७ ॥ शुभाशुभफलैरिति । एवं उक्तप्रकारेण क्रियमाणे सति त्वं शुभाशुभफलैः शुभानि कल्याणरूपाणि च अशुभानि अकल्याणरूपाणि शुभाशुभानि फलानि येषां तानि शुभाशुभफलानि तैः कर्मबंधनैः कर्माण्येव बंधनानि कर्मबंधनानि तैः कर्मबंधनैः जन्ममरणसंसरणद्वारा घटीयंत्रवत् बंधनैः मोक्ष्यसे विमुक्तो भविष्यसि । न तु एतावदेव । किं तु ततोप्यधिकमस्तीत्याह । त्वं विमुक्तः सन् जीवन्मुक्तः सन् क्रियमाणैः कर्मभिः असंस्पृष्टः सन् मां वासुदेवं उपैष्यसि मद्रूपेण अवशिष्यसि । कथंभूतः त्वम् । संन्यासयोगयुक्तात्मा संन्यास एव कर्माभिनिवेशफलत्याग एव योगः संन्यासयोगः संन्यासयोगेन युक्तः मयि समाहितः आत्मा अंतःकरणं यस्य सः संन्यासयोगयुक्तात्मा ॥ २८ ॥ यदि भक्तेभ्य एव मोक्षं ददासि नाभक्तेभ्यः तर्हि तवापि किं रागद्वेषादिकृतं वैषम्यमस्ति? नेत्याह । सम इति । हे पार्थ! अहं सर्वभूतेषु सर्वाणि च तानि भूतानि च सर्वभूतानि तेषु सर्वभूतेषु ब्रह्मादिमशकांतेषु समः समानः अस्मि । समत्वेन मे मम द्वेष्यः द्वेष्टुं योग्यः

ये भजंति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥२९॥
अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मंतव्यः सम्यग्व्यवसितो हि सः ॥ ३० ॥
क्षिप्रं भवति धर्मात्मा शश्वत् शांतिं निगच्छति ।

द्वेष्यः द्वेषविषयः नास्ति चेत्यपरं प्रियः प्रीतिविषयोपि नास्ति । किं तर्हि तत्राह । ये सभाग्याः मां अक्षयपरमानंदरूपं भक्त्या प्रेम्णा भजंति ते सभाग्याः मयि सर्वाधिष्ठाने वर्त्तंते । जले तरंगा इव । तेषु सभाग्येषु अहमपि वर्त्ते । तरंगेषु जलमिव । यथा सर्वत्र समः कल्पवृक्षः कल्पनायोगेन तथा तथा फलति तथा अहमपि अंतर्यामितया सर्वेषु भूतेषु समः सन् तत्तत्प्रार्थनानुसारेण फलवैषम्यं करोमि । एवं सति मम वैषम्यगंधोपि नास्तीति भावः ॥ २९ ॥ हे कौंतेय! शृणु । ये पुण्यकर्माणः अनन्यत्वेन भजंति ते मां प्राप्नुवंति इति न चित्रम् । किं तु पूर्वं दुराचारोपि अनन्यभाक् सन् मां भजते सोपि मुक्तो भवति इत्याशयेनाह । अपीति । सुदुराचारोपि सुतरां अत्यंतं दुष्टः महापापोपलक्षणः आचारः क्रिया यस्य सः दुराचारः अनन्यभाक् सन् दुराचारं विहाय मां विना अन्यं न भजतीति अनन्यभाक् मां परमात्मानं भजते चेत् तर्हि सः सुदुराचारः साधुरेव वेदांगत्वेन यज्ञाद्यनुष्ठानेनैव मंतव्यः ज्ञातव्यः । पंडितैरिति शेषः । हि यस्मात् फलसाम्यात् हेतोः सः सुदुराचारः सम्यग्व्यवसितः सम्यक् शोभनं व्यवसितं निश्चयः यस्य सः सम्यग्व्यवसितः अस्ति । अनेकासह्यदुःखदं दुराचारं विहाय परमानंदे मज्जने प्रवृत्तत्वात् शोभनाध्यवसायवान् इत्यर्थः ॥ ३० ॥ साधुत्वमेव प्रकटयति । क्षिप्रमिति । सः दुराचारः मां परमेश्वरं भजन् सन् क्षिप्रं शीघ्रं धर्मात्मा धर्मस्व-

कौंतेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ३१ ॥
मां हि पार्थ व्यपाश्रित्य येपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेपि यांति परां गतिम् ॥३२॥
किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।

रूपः भवति तदनु शीघ्रं शश्वत् शाश्वतीं शांतिं सर्वोपरमलक्षणां मद्रूपेण अवस्थितिं निगच्छति नितरां प्राप्नोति । त्वमपि इदानीं भीष्मादिवधं कुर्वन् सन् मयि अनन्यतया नाशं न प्राप्स्यसि किंच कुतर्काः कर्कशवादिनः एतत् न मन्येरन् इति शंकाव्याकुलं अर्जुनं प्रोत्साहयति । हे कौंतेय ! त्वं पटहकोलाहलादिमहाघोषपूर्वकं विवदमानानां सभां गत्वा बाहुं उत्क्षिप्य निःशंकं प्रतिजानीहि प्रतिज्ञां कुरु । अथवा हे कौंतेय ! त्वं ब्रह्मादिलोकपालानां सभासु गत्वा उच्चैः स्वरेण प्रौढवादेन सर्वेषु शृण्वत्सु सत्सु प्रतिजानीहि एवं प्रतिज्ञां कुरु । कथमिति मे मम परमेश्वरस्य दुराचारयुक्तोपि अनन्यभक्तः न प्रणश्यति नानाविधदुःखसंकुलं संसारं न प्राप्नोति । अपि तु कृतार्थ एव भवति ॥ ३१ ॥ आचारभ्रष्टं मद्भक्तिः पवित्रीकरोति इति अत्र किं चित्रम्? । यतः हेतोः मद्भक्तिः दुष्टकुलान् अनधिकारिणोपि संसारात् मोचयतीत्याह । मां हीति । हे पार्थ! ये दुराचारेण प्रसिद्धाः पापयोनयः पापमेव योनिः कारणं येषां ते पापयोनयः निकृष्टजन्मानः अंत्यजादयः स्युः भवेयुः तेपि पापयोनयोपि मां सर्वात्मानं व्यपाश्रित्य सर्वभावेन आश्रित्य परां सर्वोत्कृष्टां गतिं गम्यते प्राप्यते इति गतिः तां गतिं मत्प्राप्तिं यांति प्राप्नुवंति । ते के । स्त्रियः अध्ययनसंस्कारशून्याः तथा वैश्याः केवलं कृषिवाणिज्यादिरताः तथा शूद्राः विषयिणः उदरंभराः परां गतिं यांति । हीति निश्चयेन ॥३२॥ पापयोनयोपि मां प्राप्नुवंति उत सुकृतिनः मां यांति इति किमु वक्तव्यम् ?

अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥३३॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३४ ॥

इति श्रीमद्भगवद्गीतासू० राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ॥ ९ ॥

इत्याह । किं पुनरिति । पुण्याः पुण्यकर्माणः ब्राह्मणाः द्विजोत्तमाः तथापि एवं सत्यपि भक्ताः स्वधर्मानुष्ठानेन मद्भजकाः तथा राजर्षयः राजानश्च ते ऋषयश्च राजर्षयः सूक्ष्मार्थदर्शिनः त्वत्सदृशाः क्षत्रियवर्याः परां सर्वोत्कृष्टां गतिं मत्प्राप्तिं यांति इति किमु वक्तव्यम्? त्वमपि एवं कुरु इत्याह । हे पार्थ! त्वं इमं प्रत्यक्षं लोकं लोक्यते स्वात्मानं लोक्यते अनेनेति लोकः तं लोकं नृदेहं सर्वपुरुषार्थसाधकं प्राप्य केनापि भाग्योदयेन प्रयत्नं विना लब्ध्वा मां अंतर्यामिणं भजस्व निरंतरं सेवस्व । कथंभूतं लोकम् । अनित्यं न नित्यः अनित्यः तं अनित्यं अध्रुवं क्षणिकम् । पुनः कथंभूतं लोकम् । असुखं नास्ति सुखं यस्य सः असुखः तं असुखं सुखरहितम् ॥ ३३ ॥ भजनप्रकारं कृपया स्वयमेव दर्शयति । मन्मनेति । हे पार्थ! त्वं मन्मनाः मय्येव मनः संकल्पात्मकं यस्य सः मन्मनाः भव । किंच त्वं मद्भक्तः मम भक्तः मद्भक्तः सर्वेंद्रियव्यापारैः मद्भजनपरः भव । त्वं मद्याजी ब्रह्मार्पणप्रकारेण सर्वात्मकं मां अनुसंधाय यजनशीलः मद्याजी भव । त्वं मां सर्वरूपिणं सुवर्णकुंडलवत् बहिरंतर्वर्त्तमानं नमस्कुरु । एवं कृते सति किं स्यात्तत्राह । हे कौंतेय! त्वं मत्परायणः सन् अहमेव परं श्रेष्ठं अयनं आश्रयो यस्य सः मत्परायणः एवं उक्तप्रकारेण आत्मानं मनः युक्त्वा मयि स्थिरीकृत्य मामेव परमानंदरूपमेव एष्यसि प्राप्स्यसि नात्र संदेह इत्यर्थः ॥ ३४ ॥ ॥ नवमेऽभिभवं योगं राजगुह्याख्यमादरात् । समर्पयन् स्वभक्ताय विश्वस्मै विशदीकृतम् ॥ ९ ॥

इति श्रीबालबोधिन्यां श्रीमद्भ० टीकायां नवमोऽध्यायः ॥ ९ ॥

---

श्रीभगवानुवाच ।

भूय एव महाबाहो शृणु मे परमं वचः ।
यत्तेहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥
न मे विदुः सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥

श्रीः । अथेदानीं ता एव पूर्वोक्ता एव विभूतीः प्रपंचयिष्यन् स्वभक्तेश्च अवश्यं करणीयत्वं वर्णयिष्यन् श्रीभगवान् उवाच । भूय एवेति । हे महाबाहो! महांतौ युद्धादिस्वधर्मानुष्ठाने च मत्परिचर्यायां कुशलौ बाहू यस्य सः महाबाहुः तत्संबुद्धौ हे महाबाहो हे मदुक्तसर्वादानसमर्थ! त्वं भूय एव पुनरपि मे मत्तः अथवा मे मम परमेश्वरस्य सर्वज्ञस्य परमं वेदार्थग्रथितं उत्कृष्टं वचः वाक्यं शृणु अवधारय । यत् यस्मात् कारणात् अहं ते तुभ्यं हितकाम्यया हितस्य काम्या इच्छा हितकाम्या तया हितकाम्यया हितेच्छया पुनः पूर्वं उक्तमपि वक्ष्यामि कथयामि । कथंभूताय ते । प्रीयमाणाय प्रीयतेसौ प्रीयमाणः तस्मै प्रीयमाणाय प्रीतिं प्राप्नुवते ॥ १ ॥ न मे विदुरिति । सुरगणाः सुराणां देवानां गणाः समूहाः ब्रह्मादयः मे मम परमात्मनः प्रभवं जन्मरहितस्यापि नानाविभूतिभिः आविर्भावं न विदुः नैव जानंति । तथा महर्षयः महांतश्च ते ऋषयश्च महर्षयः भृग्वादयः मे मम परमात्मनः प्रभवं उत्पत्तिं न विदुः न जानंति । अहं त्वदुपदेष्टा सर्वशः सर्वेषां देवानां दीव्यंति प्रकाशरूपाः भवंति ते देवाः तेषां देवानां द्योतनस्वभावानां ब्रह्मादीनां तथा महर्षीणां महांतश्च ते

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥
बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।

ऋषयश्च महर्षयः तेषां महर्षीणां वेदार्थज्ञानां आदिः कारणं उत्पत्तिहेतुः अस्मि । न हि पुत्रः पितुरुत्पत्तिं जानाति अथवा अग्रं मूलमित्यर्थः । अतो मदनुग्रहं विना मां केपि न जानंति इत्यर्थः ॥२॥ ननु—तव प्रभवं देवकीवसुदेवौ जानतः । सत्यम् । तत्तु सुरकार्यार्थं अवताराभिप्रायम् । वास्तवं यथाभूतं यः जानाति स कृतार्थ इत्याह । योमामिति । यः अनेकजन्मोपचितपुण्यः पुरुषः मां परमात्मानं वेत्ति याथात्म्येन जानाति । कथंभूतं माम् । अजं जायतेऽसौ जः न जः अजः तं अजं जन्ममरणशून्यं अत एव अनादिं न विद्यते आदिर्यस्य सः अनादिः तं अनादिं सर्वेषां उत्पत्तिकारणं अत एव लोकमहेश्वरं महांश्चासौ ईश्वरश्च महेश्वरः लोक्यंत इति लोकाः लोकानां महेश्वरः लोकमहेश्वरः तं लोकमहेश्वरं सर्वलोकनियंतारं सः पुरुषः मर्त्येषु मरणधर्मात्मकेषु असंमूढः सन् संमोहवर्जितः सन् सर्वपापैः सर्वाणि च तानि पापानि च सर्वपापानि तैः सर्वपापैः प्रारब्धव्यतिरिक्तैः पुण्यपापैः प्रमुच्यते जीवन्मुक्तो भवति ॥ ३ ॥ 'अहमादिर्हि देवानां' इति यदुक्तं तस्य कारणं द्वाभ्यां श्लोकाभ्यां दर्शयति । बुद्धिरिति । एते बुद्धिर्ज्ञानमित्यादयः भूतानां प्राणिनां भावाः भवंतीति भावाः भवंति स्वस्वकर्मवशात् भवंति पृथग्विधाः संतः पृथक् विधा येषां ते पृथग्विधाः नानाप्रकाराः संतः मत्त एव भवंति । एते के । बुद्धिः लौकिकपदार्थानां यथावत् ज्ञानं अथवा सारासारविवेकनैपुण्यं ज्ञानं आत्मानात्मविवेकः चेत्यपरं असंमोहः संमोहः न भवतीति असंमोहः अंतःकरणस्य वैकल्या-

सुखं दुःखं भवो भावो भयं चाभयमेव च ॥४॥
अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवंति भावा भूतानां मत्त एव पृथग्विधाः ॥ ५ ॥
महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥ ६ ॥

भावः क्षमा द्वंद्वसहनं चेत्यपरं सत्यं यथार्थभाषणं च दमः सर्वेंद्रियाणां स्वस्वविषयेभ्यः उपरतिः च शमः अंतःकरणस्य कामादिभ्यः उपरतिः च सुखं अनुकूलसंवेदनीयं च दुःखं प्रतिकूलसंवेदनीयं च भवः उद्भवः च अभावः नाशः च भयं त्रासः च अभयं त्रासराहित्यम् ॥ ४ ॥ अहिंसेति । अहिंसा परपीडानिवृत्तिः च समता सर्वत्र रागद्वेषादिराहित्येन साम्यं तुष्टिः दैवलब्धेन संतोषः तपः शारीरादिवक्ष्यमाणं अथवा बाह्यांतःकरणानां एकाग्रता चेत्यपरं दानं स्ववृत्त्या संपादितस्य द्रव्यस्य सत्पात्रार्पणं यशः स्वधर्मानुष्ठानेन सत्कीर्तिः चेत्यपरं अयशः दुष्टाचरणेन अपकीर्तिः । एते सर्वे मत्त एव भवंतीति भावः । यथा पृथिव्याः सकाशात् चतुर्विधानि भूतानि भवंति तद्वदित्यर्थः ॥ ५ ॥ महर्षय इति । किं च सप्त सप्तसंख्याकाः महर्षयः भृग्वादयः तेभ्योपि भृग्वादिभ्योपि पूर्वे अन्ये चत्वारः महर्षयः सनकादयः तथा मनवः स्वायंभुवादयः चतुर्दश मनवः एते सर्वे मद्भावाः संतः मदीयः भावः प्रभावः येषु ते मद्भावाः मानसाः ममैव हिरण्यगर्भात्मनः मनसः संकल्पमात्रात् जाताः मानसाः । मत्त एव जाताः इति शेषः । लोके त्रैलोक्ये येषां भृग्वादीनां च सनकादीनां च मनूनां इमाः ब्राह्मणाद्याः वर्त्तमानाः पुत्रपौत्रादिरूपाः शिष्यप्रशिष्यादिरूपाः प्रजाः संततयः । वर्तंते इति शेषः ॥ ६ ॥

एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।
सोविकंपेन योगेन युज्यते नात्र संशयः ॥ ७ ॥
अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजंते मां बुधा भावसमन्विताः ॥ ८ ॥
मच्चित्ता मद्गतप्राणा बोधयंतः परस्परम् ।

एतामिति । यः पुरुषः मम सर्वांतर्यामिणः एतां अनंतरोक्तां विभूतिं भृग्वादिरूपां चेत्यपरं योगं मम अचिंत्यघटनाचातुर्यं तत्त्वतः सत्यत्वेन वेत्ति जानाति। सः पुरुषः अविकंपेन अप्रचलितेन योगेन सम्यग्ज्ञानेन युज्यते युक्तो भवति । मम यथार्थात्मज्ञानवान् भवतीत्यर्थः । अत्र मद्विभूतियोगवित् सम्यग्ज्ञानी भवति इति अस्मिन् अर्थे संशयः नास्ति सर्वेषामपि मद्वाक्यं प्रमाणम् ॥ ७ ॥ अहमिति। अहं सच्चिदानंदविग्रहः सर्वस्य कार्यकारणस्य भूतजातस्य प्रभवः प्रभवति अस्मादिति प्रभवः निमित्तोपादानभूतः अस्मि । अत एव मत्तः सकाशात् सर्वं निखिलं दृष्टश्रुतं प्रवर्त्तते उत्पन्नं भवति । बुधाः सर्वत्र मत्प्राप्तिविदः इति एवं प्रकारेण मत्वा ज्ञात्वा भावसमन्विताः संतः भावेन अविद्यमानमपि विश्वं मत्सत्तया सत्यवत् भाति इति विश्वासेन समन्विताः युक्ताः भावसमन्विताः मां जगति सच्चिदानंदविग्रहं भजंते सर्वात्मत्वेन सेवंते ॥ ८ ॥ बुधाः मां भजंते इति उक्तं तेषां भजनप्रकारं आह। मच्चित्ता इति। बुधाः मत्प्राप्तिविदः शिष्येभ्यः बोधयंतः संतः बोधयंति ते बोधयंतः सच्चिदानंदरूपेण परमेश्वरेण विना नामरूपादिकं किमपि नास्ति इति बोधं कुर्वंतः तथा सर्वत्र न्यायेन सर्वे विद्वांसोपि संभूय परस्परं यथास्यात्तथा मां सच्चिदानंदविग्रहं कथयंतः संतः कथयंति ते कथयंतः स्वविषयं परमात्मानं मां नित्यं सर्वकालं निवेदयंतः तुष्यंति अनु-

कथयंतश्च मां नित्यं तुष्यंति च रमंति च ॥ ९ ॥
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयांति ते ॥ १० ॥
तेषामेवानुकंपार्थमहमज्ञानजं तमः ।

मोदनसंतोषं प्राप्नुवंति चेत्यपरं रमंति तत्रैव मज्जनेन विश्रांतिं प्राप्नुवंति। ब्रह्मरूपाः भवंतीत्यर्थः। कथंभूताः बुधाः। मच्चित्ताः मय्येव ज्ञानानंते ब्रह्मणि चित्तं ज्ञानशक्तिः येषां ते मच्चित्ताः। पुनः कथंभूताः बुधाः। मद्गतप्राणाः मय्येव ज्ञानानंते ब्रह्मणि गतः विद्यमानः प्राणः सर्वेंद्रियक्रियाशक्तिः येषां ते मद्गतप्राणाः मदर्पितजीवाः ॥ ९ ॥ यस्मिन् पक्षे तुष्यंति च रमंति तस्मिन् पक्षे तेषां किं फलं इति आह। तेषामिति। अहं अंतर्यामी तेषां पूर्वोक्तप्रकारेण मां भजतां तं श्रुति-प्रसिद्धं बुद्धियोगं बुद्धिं वाक्यार्थज्ञानं अनुभवतीति बुद्धियोगः तं ददामि अंतर्यामिरूपेण बुद्धौ वाक्यज्ञानं प्रयच्छामि ते प्रीतिपूर्वकं भजंतः येन बुद्धियोगेन मां तत्पदलक्ष्यं उपयांति प्रत्यग्रूपेण तादात्म्यं अनुभवंति। कथंभूतानां तेषां सततयुक्तानां सततं निरंतरं युक्ताः सततयुक्ताः तेषां सततयुक्तानां सदा समाहितानाम्। पुनः कथंभूतानां तेषाम्। प्रीतिपूर्वकं भजतां भजंति ते भजंतः तेषां भजतां लुब्धधनवत् प्रेम्णा मां अनुसंदधताम् ॥ १० ॥ तेषामेवेति। अहं अंतर्यामी तेषां पूर्वोक्तानां प्रीतिपूर्वकं भजतां प्रारब्धकर्मवशात् कदाचित् उत्पतितं अज्ञानजं अज्ञानात् जातं अज्ञानजं तमः मोहरूपं अनुकंपार्थं कृपया तत्संरक्षणार्थं ज्ञानदीपेन दीपयति प्रकाशयतीति दीपः ज्ञानमेव दीपः ज्ञानदीपः तेन ज्ञानदीपेन स्वप्रकाशेन नाशयामि स्वात्मज्ञानेन निवारयामि। कथंभूतः अहम्। आत्मभावस्थः आत्मनः स्वस्य भावः सत्ता

नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥

अर्जुन उवाच ।

परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ १२ ॥
आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।

आत्मभावः आत्मभावे तिष्ठतीति । यद्वा आत्मनः बुद्धेः भावः प्रेम आत्मभावः आत्मभावे तिष्ठतीति आत्मभावस्थः ममानंदरूपत्वात् यत्र प्रेम वर्त्तते तत्रैव अहं यत्र अहं तत्रैव सूर्यवत् तमोनाशः । कथंभूतेन ज्ञानदीपेन । भास्वता स्वयंप्रकाशमानेनेत्यर्थः ॥ ११ ॥ परंब्रह्मेति । हे भगवन्! भवान् त्वं परं निरतिशयं ब्रह्म परिपूर्णं असि परं सर्वोत्कृष्टं धाम आश्रयं सर्वाधिष्ठानं असि । पवित्रं ज्ञानमात्रेणैव संसारशोधकं परमं परं अविद्याकल्पितं माति मिनोति दूरीकरोति इति परमं यद्वा स्मरणमात्रेण संसारशोधकत्वात् परम उत्कृष्टं असि । ऋषयः त्वां पुरुषं पूर्षु सर्वासु नगरीषु शेते शयनं करोतीति पुरुषः तं चेत्यपरं शाश्वतं आविर्भावतिरोभावरहितं च दिव्यं द्योतनस्वभावं तथा आदिदेवं देवानां आदिः इति आदिदेवः तं आदिदेवं तथा अजं जन्मरहितं चेत्यपरं विभुं व्यापकं वा सर्वकारणं आहुः वदंति ॥ १२ ॥ आहुरिति । हे भगवन्! पूर्वं सर्वे सूक्ष्मार्थदर्शिनः ऋषयः नारदादयः त्वां यथा आहुः कथयंति तथा त्वं स्वयमेव मे मां वा मह्यं ब्रवीषि स्वात्मानं कथयसि । सर्वे के? तानेव कांश्चित् कथयति । देवर्षिः देवश्चासौ ऋषिश्च देवर्षिः नारदः अरं संसारदुःखसाधनं अज्ञानं न ददातीति

असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥ १३ ॥
सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।
न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥ १४ ॥
स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ।

नारदः तथा असितः न सितः बद्धः असितः जीवन्मुक्तः चेत्यपरं देवलः देवं स्वयंप्रकाशं लक्षयतीति देवलः यद्वा देवं पृथग्भूतं देवभावं लुनाति आत्मत्वेन देवाद्युपाधिं छेदयतीति देवलः यद्वा देवं मूर्खं लाति गृह्णातीति देवलः तथा व्यासः वेदविभागकर्त्ता सर्वज्ञः एतेषां नाममात्रग्रहणेन ज्ञानातिशयः सूचितः ॥ १३ ॥ सर्वमेतदिति। हे केशव ! हे ब्रह्मेशकार्यशक्तिप्रापक ! त्वं यत् इदानीं स्वात्मरहस्यं वदसि कथयसि तत् तदेव सर्वं संपूर्णं ऋतं अनुभवारूढं यथास्यात्तथा मन्ये जानामि। किं च यदुक्तं 'न मे विदुः सुरगणाः प्रभवम्' इति तदपि इदानीं प्रत्यक्षं अनुभवामीत्याह। हे भगवन् ! हे षड्गुणैश्वर्यसंपन्न ! देवाः दीव्यंति ते देवाः दीव्यंति प्रकाशमाना भवंति ते देवाः चेत्यपरं दानवाः दनोः अपत्यानि पुमांसः दानवाः प्रजापतेरपत्यभूता अपि ते तव व्यक्तिं अभिव्यक्तिं न विदुः न जानंति। अनादित्वात् ॥ १४ ॥ स्वयमिति। हे पुरुषोत्तम ! हे क्षराक्षरातीत हे भूतभावन ! भूतानि भावयति उत्पादयतीति भूतभावनः तत्संबुद्धौ हे भूतभावन ! हे भूतेश भूतानां ईशः भूतेशः तत्संबुद्धौ हे भूतेश ! हे सर्वभूतनियंतः ! हे देवदेव देवानां देवः देवदेवः तत्संद्धौ हे देवदेव ! द्योतनस्वभावानां सूर्यादीनां प्रकाशक ! हे जगत्पते जगतां पतिः जगत्पतिः तत्संबुद्धौ हे जगत्पते हे जगत्पालक ! एतैः संबोधनैः सर्वोपादानत्वं उक्तम्। स्वयमेव त्वं आत्मना सर्वरूपेण आत्मानं

भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥
वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥१६॥
कथं विद्यामहं योगिंस्त्वां सदा परिचिंतयन् ।
केषु केषु च भावेषु चिंत्योसि भगवन् मया ॥ १७ ॥

सर्वोपादानं वेत्थ जानासि । अयं आत्मा प्रवचनेन न लभ्यः मेधया न लभ्यः श्रवणेन न लभ्यः किंतु भगवत्कृपयैव लभ्यः ॥ १५ ॥ निर्गुणरूपं अनंतं अपि एकत्वात् त्वत्कृपया अंतर्मुखानां अनुभवगोचरं भवति । न तु बहिर्मुखानाम् । तेषां बहिर्मुखानां सगुणरूपं यथाकथंचित् ज्ञातुं शक्यं तत् कथय इति प्रार्थयते । वक्तुमिति । हे जगदात्मन् ! त्वं दिव्याः दिव्यरूपाः आत्मविभूतयः आत्मनः स्वस्य विभूतयः आत्मविभूतीः आत्मनः आविर्भावस्थानानि अशेषेण प्रधानभूतासु यथा अवशेषो न भवतीति अशेषः तेन अशेषेण समग्रेण वक्तुं उपदेष्टुं अर्हसि योग्यो भवसि । हीति स्फुटम् । याभिः प्रसिद्धाभिः विभूतिभिः त्वं इमान् प्रसिद्धान् लोकान् भूरादिलोकान् व्याप्य तिष्ठसि ॥ १६ ॥ ननु—त्वं यथोक्तं निर्गुणं चिंतय किमिति सगुणचिंतां करोषि इत्याशंक्य अहं यथोक्तं निर्गुणं चिंतयन्नपि विभूतिभेदेषु मया कथं चिंत्योसि इति कृपया कथय इति प्रार्थयामीत्याह । कथमिति । हे भगवन् ! हे अणिमाद्यैश्वर्योपेत ! हे योगिन् ! हे अचिंत्यरूप ! अहं त्वां सर्वकारणं सदा सर्वासु अवस्थासु परिचिंतयन् सन् परिचिंतयतीति परिचिंतयन् कथं विद्यां कथं जानीयाम् ? त्वं केषु केषु भावेषु केषु केषु विभूतिभेदेषु मया चिंत्यः चिंतितुं योग्यः चिंत्यः चिंतनीयः असि? । तस्मात् विभूतियोगं मां कथयेति भावः ॥ १७ ॥

विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम्॥१८॥
श्रीभगवानुवाच ।
हंत ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यंतो विस्तरस्य मे ॥१९॥

ननु—पूर्वं सप्तमादौ संक्षेपतः विभूतिभेदः उक्तः इत्याशंक्य उक्तमपि विस्तरेण मत्कृपया कथय उपेक्षया मा कथय इत्याशयेनाह। विस्तरेणेति । हे जनार्दन! जनान् दुष्टजनान् अर्दयति पीडयतीति जनार्दनः तत्संबुद्धौ हे जनार्दन ! त्वं भूयः पुनरपि विस्तरेण विस्तारेण आत्मनः तव योगं सर्वज्ञत्वसर्वशक्तिमत्त्वादिलक्षणयोगैश्वर्यं चेत्यपरं विभूतिं विभूतियोगं कथय! भूयः कथने को हेतुः तत्राह। अमृतं तवामृतरूपं वाक्यं शृण्वतः शृणोतीति शृण्वन् तस्य श्रवणं कुर्वतः मे मम तृप्तिः अलंप्रत्ययः नास्ति श्रुतस्यैव श्रवणेच्छा जायते। तव विभूतियोगयोः परमामृतरूपत्वादिति भावः ॥ १८ ॥ एवं सख्युः भक्तस्य सप्रेमवाक्यं श्रुत्वा कृपया आह । हंतेति। हंतेति सानुकंपसंबोधनम् । हे कुरुश्रेष्ठ! कुरुषु कुरुकुलोद्भवेषु राजसु मध्ये श्रेष्ठः तत्संबुद्धौ हे कुरुश्रेष्ठ! अहं ते तुभ्यं दिव्याः अलौकिकाः आत्मविभूतयः आत्मनः मम विभूतयः अभिव्यक्तिस्थानानि आत्मविभूतीः प्राधान्यतः मुख्यत्वेन कथयिष्यामि उपदेक्ष्यामि। ननु—मया विस्तरेण कथय इति उक्तम् । किमिति प्राधान्येन कथयिष्यामि इति वदसि तत्राह । मे मम विस्तरस्य विभूतिविस्तरस्य अंतः अवधिः नास्ति इति हेतोः प्राधान्यतः कथयिष्यामि इति उक्तमित्यर्थः ॥ १९ ॥

अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामंत एव च ॥ २० ॥
आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥

तत्र प्रथमं मुख्यं विभूतिमाह । अहमात्मेति । हे गुडाकेश! गुडाकायाः निद्रायाः अथ च आलस्यादेः ईशः नियंता तत्संबुद्धौ हे गुडाकेश हे जितनिद्र हे अप्रमत्त ! अहं सर्वभूताशयस्थितः सर्वाणि च तानि भूतानि च सर्वभूतानि सर्वभूतानां आशयः बुद्धिः सर्वभूताशयः तस्मिन् अंतर्यामितया तिष्ठतीति सर्वभूताशयस्थितः आत्मा अतति सातत्येन सर्वत्र गच्छतीति आत्मा अस्मि । चेत्यपरं भूतानां चराचराणां आदिः उपादानकारणं उत्पत्तिकारणं अहं अस्मि । चेत्यपरं मध्यं पोषणहेतुः अहं अस्मि । चेत्यपरं अंतः प्रलयकारणमपि अहमेव अस्मि । तथा च श्रुतिः—'यतो वा इमानि भूतानि जायंते । येन जातानि जीवंति । यत्प्रयंत्यभिसंविशंति' इति ॥ २० ॥ इदानीं विभूतीः कथयति । आदित्यानामिति । आदित्यानां अदितेः अपत्यानि पुमांसः आदित्याः तेषां द्वादशादित्यानां मध्ये अहं विष्णुः वामनः उपेंद्रत्वेन वर्तमानः अस्मि । ज्योतिषां ज्योतिः तेजः विद्यते येषां ते ज्योतिषः तेषां ज्योतिषां प्रकाशानां मध्ये अंशुमान् अंशवः किरणाः विद्यंते यस्य सः अंशुमान् विश्वव्यापी त्रैलोक्यप्रकाशकः रविः सूर्यः अहं अस्मि । मरुतां एकोनपंचाशत्संख्याकानां यद्वा सप्तमरुद्गणानां वायूनां मध्ये मरीचिनामा अहं अस्मि । सप्तवायवः—आवहः प्रवहः विवहःपरावहः उद्वहः परिवहः प्रभवहश्चेति । नक्षत्राणां अश्विन्यादीनां मध्ये शशी चंद्रः अहं

वेदानां सामवेदोस्मि देवानामस्मि वासवः।
इंद्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥२२॥
रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥२३॥
पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनानीनामहं स्कंदः सरसामस्मि सागरः ॥२४॥

अस्मि॥२१॥ वेदानामिति । वेदानां ऋगादीनां मध्ये सामवेदः गीतिविशेषः अहं अस्मि । देवानां अग्निवरुणवाय्वादीनां मध्ये अहं वासवः इंद्रः अस्मि । इंद्रियाणां बाह्यांतःकरणानां मध्ये अहं मनः सर्वेंद्रियविषयग्राहकं अंतःकरणं अस्मि । भूतानां चराचरोपाधिरूपाणां जडानां संबंधिनी चेतना चैतन्यशक्तिः अहं अस्मि ॥ २२ ॥ रुद्राणामिति । किं च रुद्राणां एकादशरुद्राणां मध्ये शंकरः शं कल्याणं करोतीति शंकरः नीलकंठः अहं अस्मि । यक्षरक्षसां यक्षाश्च रक्षांसि च यक्षरक्षांसि तेषां मध्ये वित्तेशः वित्तानां द्रव्याणां ईशः वित्तेशः कुबेरः अहं अस्मि । वसूनां अष्टानां मध्ये पावकः हविर्वहः अहं अस्मि । किं च शिखरिणां शिखराणि येषां संति ते शिखरिणः तेषां शिखरवतां पर्वतानां मध्ये मेरुः सुवर्णमयः पृथिवीमध्यभागस्थः अहं अस्मि ॥ २३ ॥ पुरोधसामिति । किं च हे पार्थ! त्वं पुरोधसां पुरोहितानां मध्ये मुख्यं बृहस्पतिं देवपुरोहितं मां विद्धि जानीहि । किं च सेनानीनां सेनाः नयंति ते सेनान्यः तेषां सेनानेतॄणां मध्ये स्कंदः षण्मुखः देवसेनानीः अहं अस्मि । किं च सरसां स्थिरोदकानां मध्ये सागरः समुद्रः अस्मि ॥२४॥

महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥२५॥
अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गंधर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥२६॥
उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।

किं च महर्षीणामिति । महर्षीणां महांतश्च ते ऋषयश्च महर्षयः तेषां सृष्टिविदां प्रजापतीनां मध्ये भृगुः ब्रह्मपुत्रः अहं अस्मि । गिरां वेदवचसां मध्ये एकं अद्वितीयं अक्षरं न क्षरति तत् अक्षरं ॐकारः अहं अस्मि । यज्ञानां सर्वेषां यज्ञानां मध्ये जपयज्ञः जपरूपश्चासौ यज्ञश्च जपयज्ञः ब्रह्मयज्ञः अहं अस्मि । स्थावराणां तिष्ठंति ते स्थावराः तेषां भूधराणां मध्ये हिमालयः हिमस्य आलयः गृहं हिमालयः हिमवान् पार्वतीजनकः अहं अस्मि ॥ २५ ॥ किं च अश्वत्थ इति सर्ववृक्षाणां सर्वे च ते वृक्षाश्च सर्ववृक्षाः तेषां मध्ये सर्ववनस्पतीनां मध्ये अश्वत्थः शमीगर्भः अहं अस्मि । देवर्षीणां मध्ये देवाश्च ते ऋषयश्च देवर्षयः तेषां देवर्षीणां मध्ये नारदः ब्रह्मपुत्रः सर्वात्मदृक् अहं अस्मि । गंधर्वाणां मध्ये देवगायकानां मध्ये चित्ररथः चित्ररथगंधर्वः अहं अस्मि । सिद्धानां मध्ये उत्पन्नज्ञानवतां मध्ये कपिलः कर्दमात् देवहूत्यां आविर्भूतः मुनिः मननशीलः मुनिः अहं अस्मि ॥ २६ ॥ किं च उच्चैःश्रवसमिति । हे पार्थ! त्वं अश्वानां मध्ये देवादिवाहनानां मध्ये उच्चैःश्रवसं अश्वं मां विद्धि मद्विभूतिं जानीहि । कथंभूतं अश्वम् । अमृतोद्भवं अमृतार्थं देवासुरैः क्षीरसागरस्य मथनसमये उद्भवतीति अमृतोद्भवः तं अमृतोद्भवमित्यर्थः । त्वं

ऐरावतं गजेंद्राणां नराणां च नराधिपम् ॥२७॥
आयुधानामहं वज्रं धेनूनामस्मि कामधुक्।
प्रजनश्चास्मि कंदर्पः सर्पाणामस्मि वासुकिः ॥२८॥
अनंतश्चास्मि नागानां वरुणो यादसामहम्।
पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥२९॥
प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम्।

गजेंद्राणां मध्ये गजानां इंद्राः गजेंद्राः तेषां दिग्गजानां मध्ये ऐरावतं इरायाः पृथिव्याः अपत्यं पुमान् ऐरावतः तं ऐरावतं इंद्रवाहनं मां विद्धि मद्विभूतिं जानीहि। कथं भूतं ऐरावतम्। अमृतोद्भवं सागरमथनसमये उत्पन्नम्। त्वं नराणां मध्ये मनुष्याणां मध्ये नराधिपं नरान् अधिष्ठाय पातीति नराधिपः तं नराधिपं राजानं मां विद्धि ॥ २७॥ आयुधानामिति। किं च आयुधानां मध्ये प्रहरणसाधनानां शस्त्राणां मध्ये वज्रं दध्यङ्ङ-स्थिनिर्मितं शतपर्वेंद्रायुधं अहं अस्मि। धेनूनां सुरभीणां मध्ये काम-धुक् कामान् मनोरथान् दोग्धीति कामधुक् इच्छितकामप्रसवा अहं अस्मि। प्रजनः प्रजोत्पत्तिहेतुः कंदर्पः कामः अहं अस्मि। सर्पाणां मध्ये सविषाणां मध्ये वासुकिः तीव्रविषधरः प्रसिद्धः अहं अस्मि ॥२८॥ अनंत इति। किंच नागानां निर्विषाणां मध्ये अनंतः न विद्यते अंतो यस्य सः अनंतः क्षीराब्धिशायिनः मम शय्याभूतः शेषः अहं अस्मि। यादसां जलचराणां मध्ये वरुणः अपांपतिः पश्चिमदिशाधिष्ठाता लोकपालः अहं अस्मि। पितॄणां अग्निष्वात्तादिपितॄणां मध्ये अर्यमा अहं अस्मि। संयमतां यथाकर्मदंडकर्तॄणां मध्ये यमः दक्षिणदिशापतिः धर्मराजः अहं अस्मि ॥ २९ ॥ प्रह्लादश्चेति। किं च दैत्यानां दितेः अपत्यानि पुमांसः दैत्याः तेषां दितिपुत्राणां

कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥३४॥
बृहत्साम तथा साम्नां गायत्री छंदसामहम् ।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥३५॥
द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोस्मि व्यवसायोस्मि सत्त्वं सत्त्ववतामहम्॥३६॥
वृष्णीनां वासुदेवोस्मि पांडवानां धनंजयः ।

आपदि वैकल्याभावः क्षमा सहिष्णुता अहं अस्मि । यासां सप्तानां स्त्रीणां भासमात्रेण लोके प्राणिनः श्लाघ्याः भवंतीति भावः ॥ ३४ ॥ बृहत्सामेति । किंच साम्नां सप्तसंख्याकानां 'त्वामिंद्र हवामहे' इत्यस्यां ऋचि यद्गीयमानं बृहत् श्रेष्ठं साम तत् अहं अस्मि । छंदसां मध्ये छंदोविशिष्टानां मंत्राणां मध्ये गायत्री चतुर्विंशत्यक्षरात्मिकः द्विजत्वप्रतिपादको मंत्रः अहं अस्मि । तथा मासानां मध्ये चैत्रादिफाल्गुनांतानां द्वादश मासानां मध्ये मार्गशीर्षः मासः अहं अस्मि । ऋतूनां मध्ये हेमंतादिशरदंतानां मध्ये कुसुमाकरः कुसुमानां पुष्पाणां आकरो यस्मिन् सः कुसुमाकरः वसंतः अहं अस्मि ॥ ३५ ॥ द्यूतमिति । किं च छलयतां छलयंति ते छलयंतः तेषां अन्योन्यवंचनपराणां संबंधि द्यूतं पणनिबंधेन पाशक्रीडा अहं अस्मि । तेजस्विनां प्रशस्तं तेजो येषां ते तेजस्विनः तेषां प्रागल्भ्यवतां अथवा प्रभावतां तेजः प्रागल्भ्यं अथवा प्रभा अहं अस्मि । जिगीषूणां संबंधि जयः अहं अस्मि । व्यवसायिनां संबंधि व्यवसायः अहं अस्मि । सत्त्ववतां सत्त्वगुणयुक्तानां सात्त्विकबलयुक्तानां सत्त्वं अहं अस्मि ॥ ३६ ॥ वृष्णीनामिति । किं च वृष्णीनां मध्ये यादववंशभेदानां मध्ये वासु-

मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥३७॥
दंडो दमयतामस्मि नीतिरस्मि जिगीषताम्।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥३८॥
यच्चापि सर्वभूतानां बीजं तदहमर्जुन।
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥३९॥

देवः वसुदेवस्य अपत्यं पुमान् वासुदेवः वसुदेवात्मजः त्वदुपदेष्टा अहं अस्मि। पांडवानां पांडुपुत्राणां मध्ये धनंजयतीति धनंजयः त्वं अहं अस्मि। मुनीनां मननशीलाः मुनयः तेषां मननशीलानां मध्ये व्यासः वेदविभागकर्त्ता सत्यवतीसुतः अहं अस्मि। कवीनां सूक्ष्मदर्शिनां मध्ये उशनाः शुक्राचार्यः कविः सर्वात्मदर्शी अहं अस्मि ॥३७॥ दंड इति। किं च दमयतां दमयंति ते दमयंतः तेषां दंडकर्तॄणां संबंधी दंडः अहं अस्मि। मद्विभूतिमत्वात्। येन दंडेन असंयता अपि संयताः भवंति। जिगीषतां जेतुमिच्छंति ते जिगीषंतः तेषां जयाकांक्षिणां संबंधिनी नीतिः सामाद्युपायरूपा अहं अस्मि। गुह्यानां गोप्यानां गोपनहेतु मौनं अहं अस्मि। मौनेन स्थितस्यापि अभिप्रायः केनापि न ज्ञायते मद्विभूतिमत्त्वात्। हि निश्चयेन। ज्ञानवतां ज्ञानं विद्यते येषां ते ज्ञानवंतः तेषां अध्यात्मज्ञाननिष्ठानां यत् ज्ञानं अस्ति तत् ज्ञानं अहमेव अस्मि ॥३८॥ यच्चापीति। किं च सर्वभूतानां चराचराणां यत् बीजं प्ररोहकारणं अस्ति तत् प्ररोहकारणं अहं अस्मि। किं बहुनोक्तेन मद्विना किमपि नास्तीत्याह। हे अर्जुन! यत् चराचरभूतं स्यात् चेत्यपरं भवेत् तत् भूतं चराचरभूतं मया विना नास्ति ॥३९॥

नांतोस्ति मम दिव्यानां विभूतीनां परंतप ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥४०॥
यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम् ॥४१॥
अथवा बहुनैतेन किं ज्ञानेन तवार्जुन ।

किमिति सामान्येन उच्यते इति आह । नांतोस्तीति । हे परंतप ! परान् कामादिशत्रून् तापयतीति परंतपः तत्संबुद्धौ हे परंतप कामादिशत्रु-संतापक ! मम अनंतमूर्त्तेः दिव्यानां अलौकिकानां विभूतीनां अंतः पर्यवसानं नास्तीत्यर्थः । अनंतत्वात् । मया त्वदुपदेष्ट्रा सर्वज्ञेन एषः अधुना कथितः विभूतेः विस्तरस्तु प्रपंचस्तु उद्देशतः संक्षेपतः प्रोक्तः कथितः ॥ ४० ॥ एवमपि पुनः साकल्येन वक्तव्यं इति आकांक्षमाणं प्रत्याह । यद्यदिति । यत् यत् प्रसिद्धं विभूतिमत् विभूतिः विद्यते यस्मिन् तत् विभूतिमत् ऐश्वर्ययुक्तं सत्त्वं पदार्थजातं वस्तुमात्रं ऊर्जितमेव केनचिद्गुणविशेषेण अतिशयितमेव अस्ति । कथंभूतं सत्त्वम् । श्रीमत् श्रीः विद्यते यस्मिन् तत् संपद्युक्तम् । हे पार्थ ! त्वं तत् तत् पदार्थजातं ममैव तेजोंशसंभवं तेजसः प्रभावस्य अंशः तेजोंशः तेजोंशात् संभवति तत् तेजोंशसं-भवं अवगच्छ जानीहि ॥ ४१ ॥ किमनेन परिच्छिन्नेन ज्ञानेन मम व्यापकत्वं त्वं विषयीकुरु इत्याह । अथवेति । अथवा इति प्रकारां-तरोपक्रमार्थम् । हे अर्जुन ! तव बहुना पृथक् पृथक् एतेन परिच्छिन्नेन विभूतिप्रपंचेन ज्ञानेन किं किं कार्यम् । न किमपीत्यर्थः । तर्हि अपरि-

विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥४२॥

॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु० विभूतियोगो नाम दशमोऽध्यायः ॥

च्छिन्नं त्वां कथं जानीयां इति आह। अहं सच्चिदानंदरूपः इदं दृष्टश्रुतं कृत्स्नं संपूर्णं जगत् चराचरं एकांशेन एकश्चासौ अंशश्च एकांशः तेन विष्टभ्य धृत्वा अथवा व्याप्य अवस्थितः परिपूर्णरूपेण स्थितः अस्मि। 'पादोस्य विश्वाभूतानि' इति श्रुतेः ॥४२॥ इंद्रियद्वारतश्चित्ते बहिर्धावति सत्यपि। ईशदृष्टिविधानाय विभूतीर्दशमेऽब्रवीत् ॥ १ ॥ ॥ इति श्रीबालबोधिन्यां श्रीमद्भगवद्गीताटीकायां दशमोऽध्यायः ॥



## अर्जुन उवाच ।

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत्त्वयोक्तं वचस्तेन मोहोयं विगतो मम ॥ १ ॥
भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥
एवमेतद्यथात्थ त्वमात्मानं परमेश्वर ।

श्रीः । पूर्वाध्यायांते 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्'-इति विश्वरूपं श्रुत्वा तदेव प्रत्यक्षीकर्त्तुं इच्छन् सन् अर्जुनः प्रार्थयते । हे भगवन्! त्वया मदनुग्रहाय मम अनुग्रहार्थं परमं उत्कृष्टं गुह्यं गोप्यं यत् संशयोच्छेदकं वचः अशोच्यानन्वशोचस्त्वं इत्यादिवाक्यं उक्तं कथितम् । कथंभूतं वचः । अध्यात्मसंज्ञितं अध्यात्मं इति संज्ञा संजाता यस्य तत् अध्यात्मसंज्ञितं तेन वाक्येन मम अर्जुनस्य अयं प्रसिद्धः मोहः मया एते भीष्मादयः कथं हंतव्याः इति अभिमान-लक्षणः अविवेकः विगतः नाशं प्राप्तः आत्मनः कर्तृत्वाद्यभिमानोपि गतः ॥ १ ॥ निरभिमानत्वे हेतुमाह । भवाप्ययाविति । हे कमल-पत्राक्ष! कमलस्य पत्रे इव सुप्रसन्ने विशाले अक्षिणी नेत्रे यस्य सः कमलपत्राक्षः तत्संबुद्धौ हे कमलपत्राक्ष! त्वत्तः त्वत्सकाशात् भूतानां आकाशादि कार्याणां भवाप्ययौ भवश्च अप्ययश्च भवाप्ययौ उत्पत्ति-प्रलयौ मया अर्जुनेन विस्तरशः पुनः पुनः विस्तरेण श्रुतौ । हि इति निश्चयेन । तथा माहात्म्यमपि महात्मनः तव भावः माहात्म्यं महदै-श्वर्यं श्रुतम् । कथंभूतं माहात्म्यम् । अव्ययं न विद्यते व्ययो नाशः यस्य तत् अव्ययं अक्षयमित्यर्थः ॥ २ ॥ एवमेतदिति । किं च हे परमेश्वर! परमश्चासौ ईश्वरश्च परमेश्वरः तत्संबुद्धौ हे

द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥
मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।
योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥

श्रीभगवानुवाच ।

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।

परमेश्वर हे सर्वेश्वर ! पूर्वं मया ऋषिभ्यः यथा श्रुतं तथैव त्वमपि आत्मानं अतति सर्वं व्याप्नोतीति आत्मा तं आत्मानं आत्थ कथयसि । एवं एतत् । अत्रापि मम अविश्वासो नास्तीत्यर्थः । ननु-अनेन अनुवादेन किम्? इत्याकांक्षायामाह । तथापि एवं सत्यपि हे पुरुषोत्तम ! पुरुषेषु उत्तमः पुरुषोत्तमः तत्संबुद्धौ हे पुरुषश्रेष्ठ! अहं ते तव ऐश्वरं ईश्वरस्य इदं ऐश्वरं ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः संपन्नं रूपं रूप्यते अनेनेति रूपं विश्वरूपाश्रयं स्वरूपं द्रष्टुं दृग्गोचरीकर्तुं इच्छामि । तत् प्रत्यक्षगोचरं न भवति तथापि त्वयि अनंतशक्तौ प्रसन्ने सति सर्वं सुकरं इति मत्वा तद्रूपं द्रष्टुं इच्छां करोमीति भावः ॥ ३ ॥ किं च मया अघटितमनोरथेन प्रार्थितमपि शक्यं चेत् तथा कुरु इति विनयतया प्रार्थयति । मन्यस इति । हे योगेश्वर ! योगिन एव योगाः योगानां ईश्वरः योगेश्वरः तत्संबुद्धौ हे योगेश्वर ! मया प्राकृतेन अर्जुनेन तत् दिव्यं तव रूपं द्रष्टुं अवलोकितुं शक्यं योग्यम् । अयमन्वयः हे प्रभो! हे निग्रहानुग्रहसमर्थ! इति एवं त्वं मन्यसे यदि ततः तर्हि मे मह्यं आत्मानं सर्वोपादानं दर्शय—इति संबोधनद्वयेन सामर्थ्यं सूचितम् । कथंभूतं आत्मानम् । अव्ययं न विद्यते व्ययो यस्य सः तं नित्यम् ॥ ४ ॥ इति सख्युः विनयतया प्रार्थनां श्रुत्वा प्रेमपूरणेन विस्मृतवाक्यार्थो भगवान् योग्यतां अपश्यन् सन् तद्रूपं पश्य इति

नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥
पश्यादित्यान् वसून् रुद्रानश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ ६ ॥
इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।

आह । पश्येति । अथ अर्जुनवाक्यश्रवणानंतरं श्रीभगवान् उवाच । हे पार्थ ! मयि अंतर्बहिः सारथिनि सति किमिति कार्पण्यं भाषसे? एकं रूपं दर्शय इति । त्वं मम शतशः अपरिमितानि चेत्यपरं सहस्रशः तव इच्छया अनंतानि रूपाणि पश्य अवलोकय । कथंभूतानि रूपाणि । नानाविधानि अनेकप्रकाराणि । तवेच्छानुसारीणीत्यर्थः । पुनः कथंभूतानि । दिव्यानि द्योतनस्वभावानि स्वयंप्रकाशानि न तु दीपप्रकाशितानि । पुनः कथंभूतानि । नानावर्णाकृतीनि वर्णाः श्वेतरक्तपीतादयः च आकृतयश्च ह्रस्वदीर्घकृशस्थूलादयः वर्णाकृतयः नानाः अनेकप्रकाराः वर्णाकृतयो येषां तानि चकारात् अन्यानपि जयपराजयादीन् यथेच्छं पश्येत्यर्थः ॥ ५ ॥ पश्येति । हे पार्थ ! त्वं इदानीं आदित्यान् सर्वानपि अदितिसुतान् साक्षात् प्रत्यक्षं मम देहे पश्य। तथा वसून् अष्टसंख्याकान् वसून् पश्य । तथा रुद्रान् एकादशसंख्याकान् रुद्रगणान् पश्य । तथा अश्विनौ द्वौ अश्विनीकुमारौ देववैद्यौ पश्य। तथा मरुतः एकोनपंचाशत् मरुद्गणान् पश्य । किं च हे भारत ! त्वं अदृष्टपूर्वाणि त्वया पूर्वं न दृष्टानि इति अदृष्टपूर्वाणि बहूनि आश्चर्याणि अभिनवरूपाणि यथेच्छं मम देहे पश्य । कार्पण्यं मा कुरु इत्यर्थः ॥ ६॥ इहेति । किंच हे गुडाकेश ! हे जितेंद्रिय ! त्वं इह एकस्मिन् प्रत्यक्षे मम देहे मम शरीरे कृत्स्नं संपूर्णं जगत् त्रैलोक्यं अद्य इदानीं पश्य। कथंभूतं जगत् । एकस्थं एकस्मिन् सारथिभूते मयि तिष्ठति तत् एक-

मम देहे गुडाकेश यच्चान्यत् द्रष्टुमिच्छसि ॥ ७ ॥
न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८ ॥

संजय उवाच ।

एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः ।

स्थम् । पुनः कथंभूतम् । सचराचरं चरंति ते चराः जंगमादयः न चरंति ते अचराः स्थावरादयः चराश्च अचराश्च चराचराः चराचरैः सहितं सचराचरम् । किंच यत् अन्यदपि 'इमे भीष्मद्रोणकर्णादयः मां जयेयुः अथवा अहं एतान् सर्वान् जयेम' इत्यादि द्रष्टुं इच्छसि तदपि सर्वं इहैव मम देहे पश्येत्यन्वयः । कार्पण्यं मा कुरु इत्यर्थः ॥७॥ पश्य पश्येति बहुवारं उक्तमपि अर्जुनस्य विश्वरूपदर्शनं न जातं इति तस्यैव मुखनेत्रलिंगेन ज्ञात्वा मयि प्रसन्ने सत्यपि दर्शने कः प्रतिबंधः इति विचारिते सति भक्तयाज्ञाऽसहनशीलतया विश्वरूपदर्शनस्य अधिकारं अपश्यन् भक्तप्रार्थनासंभ्रमेण पश्य इति मत्वा तद्दर्शन-योग्यं दिव्यं चक्षुः ददामि इति आह । न तु मामिति । हे अर्जुन ! त्वं अनेनैव स्वचक्षुषा चर्मनेत्रेण मां विश्वरूपिणं द्रष्टुं दृग्विषयीकर्त्तुं न शक्यसे न समर्थो भवसि इति मया ज्ञातम् । तदर्थं विश्वरूपदर्शनार्थं अहं ते तुभ्यं दिव्यं अलौकिकं चक्षुः नयनं ददामि प्रयच्छामि । तेन दिव्यचक्षुषा मे मम ऐश्वरं ईश्वरसंबंधिनं योगं अघटितघटना-सामर्थ्यं विश्वरूपदर्शनलाघवं पश्य ॥ ८ ॥ ततः किम्? इत्यपेक्षायां धृतराष्ट्रं प्रति संजयः उवाच इति आह । एवमुक्त्वेति । हे राजन्! हे धृतराष्ट्र! एवं उक्तप्रकारेण उक्त्वा सानुग्रहं 'दिव्यं ददामि ते चक्षुः'

दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥
अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥
दिव्यमाल्यांबरधरं दिव्यगंधानुलेपनम् ।

इति अनुग्रह वाक्यं उच्चार्य ततः दिव्यचक्षुर्दानानंतरं हरिः संसारदुःखं हरतीति हरिः स्मृतमात्रः संसारहरणशीलः पार्थाय पृथायाः अपत्यं पुमान् पार्थः तस्मै पृथापुत्राय अर्जुनाय ऐश्वरं ईश्वरसंबंधिनं परमं उत्कृष्टं रूपं विश्वरूपं दर्शयामास दर्शितवान् । कथंभूतः हरिः । महायोगेश्वरः योगानां ईश्वरः योगेश्वरः महांश्चासौ योगेश्वरश्च महायोगेश्वरः अचिंत्यघटनापटुः ॥ ९ ॥ तदेव विशिनष्टि । कथंभूतं तेजः । अनेकवक्त्रनयनं वक्त्राणि मुखानि च नयनानि नेत्राणि वक्त्रनयनानि अनेकानि अपरिमितानि वक्त्रनयनानि यस्मिन् तत् अनेकवक्त्रनयनम् । पुनः कथंभूतम् । अनेकाद्भुतदर्शनं अद्भुतानि च तानि दर्शनानि च अद्भुतदर्शनानि अनेकानि अद्भुतदर्शनानि यस्मिन् तत् अनेकाद्भुतदर्शनम् । पुनः कथंभूतम् । अनेकदिव्याभरणं दिवि भवानि दिव्यानि दिव्यानि च तानि आभरणानि च दिव्याभरणानि अनेकानि दिव्याभरणानि यस्मिन् तत् । पुनः कथंभूतम् । दिव्यानेकोद्यतायुधं भक्तसंरक्षणार्थं उद्यतानि च तानि आयुधानि शस्त्राणि च उद्यातायुधानि अनेकानि च तानि उद्यतायुधानि च अनेकोद्यतायुधानि दिव्यानि अनेकोद्यतायुधानि यस्मिन् तत् दिव्यानेकोद्यतायुधम् ॥ १० ॥ दिव्येति । किं च पुनः कथंभूतम् । दिव्यमाल्यांबरधरं माल्यानि पुष्पमालाः च अंबराणि वस्त्राणि माल्यांबराणि दिव्यानि च तानि माल्यांबराणिच दिव्यमाल्यांबराणि दिव्यमाल्यांबराणि धारयति तत् दिव्यमाल्यांबरधरम् ।

सर्वाश्चर्यमयं देवमनंतं विश्वतोमुखम् ॥ ११ ॥
दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः॥१२॥
तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।

पुनः कथंभूतम् । दिव्यगंधानुलेपनं दिव्याश्च ते गंधाश्च दिव्यगंधाः दिव्यगंधैः दिव्यचंदनैः अनुलेपनं यस्मिन् तत् दिव्यगंधानुलेपनम् । पुनः कथंभूतम् । सर्वाश्चर्यमयं सर्वाणि च तानि आश्चर्याणि च सर्वाश्चर्याणि सर्वाश्चर्याणां प्राचुर्यं यस्मिन् तत् सर्वाश्चर्यमयम् । पुनः कथंभूतम् । देवं द्योतनस्वभावम् । पुनः कथंभूतम् । अनंतं नास्ति अंतो यस्य तत् अनंतं अपरिच्छिन्नम् । पुनः कथंभूतम् । विश्वतोमुखं विश्वतः सर्वतः मुखानि यस्मिन् तत् विश्वतोमुखं सर्वतो दृश्यमानम् । दर्शयामासेति पूर्वेणान्वयः ॥ ११ ॥ देवमित्यनेन प्रकाशशोभितस्य तस्य का उपमा इत्याकांक्षायां अभूतोपमया विशिनष्टि । दिवीति । दिवि अंतरिक्षे सूर्यसहस्रस्य सूर्याणां सहस्रं सूर्यसहस्रं तस्य सूर्यसहस्रस्य युगपत् एकसमयावच्छेदेन उत्थिता उत्पन्ना भाः प्रकाशः भवेत् यदि तर्हि तस्य प्रसिद्धस्य महात्मनः महान् आत्मा स्वरूपं यस्य सः महात्मा तस्य महात्मनः विश्वरूपस्य भासः प्रकाशस्य सदृशी तुल्या सा भाः स्यात् भवेत् न वा इति संशयः । अदृष्टचरत्वात् । अंतरिक्षे युगपत् सूर्यसहस्रोदयो नास्त्येव । यदि कथंचित् स्यात् तदा सूर्यसहस्रभा विश्वरूपस्य भासः सदृशी कथंचित् स्यान्न वेति को वेदेत्यर्थः ॥ १२ ॥ तत्रैकस्थमिति । किं च यदा 'दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरं' इति उक्तं तदा तस्मिन् समये पांडवः पंडोः राज्ञः अपत्यं पुमान् पांडवः अर्जुनः देवदेवस्य देवानां द्योत-

अपश्यत् देवदेवस्य शरीरे पांडवस्तदा ॥ १३ ॥
ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ।
प्रणम्य शिरसा देवं कृतांजलिरभाषत ॥ १४ ॥

अर्जुन उवाच ।

पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसंघान् ।

नस्वभावानां देवः देवदेवः तस्य देवदेवस्य श्रीकृष्णस्य तत्र तस्मिन् प्रसिद्धे शरीरे लीलाविग्रहे विश्वरूपे अनेकधा अनेकप्रकारं कृत्स्नं संपूर्णं जगत् सचराचरं अपश्यत् दृष्टवान् । कथंभूतं जगत् । एकस्थं एकस्मिन् ब्रह्मणि तिष्ठति तत् एकस्थं स्थितिकाले अनन्यत्वेन स्थितम् । पुनः कथंभूतं जगत् । अनेकधा नानाविभागेन प्रविभक्तं भेदेनावस्थितम् ॥ १३ ॥ एवं दृष्ट्वा किं कृतवान् इति आह । तत इति । ततः विश्वरूपदर्शनानंतरं सः प्रसिद्धः धनंजयः राजसूयमिषेण दिग्विजये सर्वेभ्यः राजभ्यः धनं जयतीति धनंजयः अर्जुनः देवं अंतर्बहिः सर्वं द्योतयति प्रकाशयतीति देवः तं देवं श्रीकृष्णं शिरसा मस्तकेन प्रणम्य श्रीकृष्णचरणकमलयोः शिरः संस्थाप्य उत्थाय कृतांजलिः सन् कृतः अंजलिः अंजलिपुटो येन सः कृतांजलिः अभाषत उक्तवान् । कथंभूतः धनंजयः । विस्मयाविष्टः अदृष्टपूर्वत्वात् विस्मयेन आश्चर्येण आविष्टः व्याप्तः विस्मयाविष्टः अत एव हृष्टरोमा हृष्टानि पुलकितानि रोमाणि तनूरुहाः यस्य सः हृष्टरोमा । पुलकांकितगात्र इत्यर्थः ॥ १४ ॥ तमेव भाषणप्रकारं दर्शयति सप्तदशभिः श्लोकैः । पश्यामीति हे देव ! नानारूपेण दीव्य-

ब्रह्माणमीशं कमलासनस्थम्
ऋषींश्च सर्वानुरगांश्च दिव्यान् ॥ १५ ॥
अनेकबाहूदरवक्त्रनेत्रम्
पश्यामि त्वां सर्वतोनंतरूपम् ।
नांतं न मध्यं न पुनस्तवादिम्

ति क्रीडयतीति देवः सत्संबुद्धौ हे देव! अहं तव सर्वरूपस्य देहे विश्वरूपाख्ये देहे सर्वान् यथासंख्याकान् देवान् अधिकारिणः पश्यामि। तथा भूतविशेषसंघान् भूतानां विशेषाः चराचरनिवेशाः भूतविशेषाः भूतविशेषाणां संघाः समुदायाः तान् पश्यामि। तथा ब्रह्माणं चतुर्वक्त्रं चेत्यपरं ईशं कर्पूरधवलं उमापतिं पश्यामि। कथंभूतं ब्रह्माणम्। कमलासनस्थं कमलस्य आसनं कमलासनं कमलासने तिष्ठतीति कमलासनस्थः तं त्वन्नाभिलोकपद्मस्थम्। तथा सर्वान् समस्तान् ऋषीन् वसिष्ठादीन् तथा दिव्यान् प्रभावातिशयान् उरगान् उरसा वक्षःस्थलेन गच्छंति ते उरगाः तान् वासुकिप्रमुखान् पश्यामि॥१५॥ किं देवादीनेव पश्यसि? इति चेन्न। किं तु त्वामपि अपरिच्छिन्नत्वेन पश्यामीत्याह। अनेकेति। हे विश्वेश्वर! हे विश्वरूप! हे सर्वात्मक! अहं त्वां सर्वतः सर्वत्र अनंतरूपं अनंतानि रूपाणि यस्य सः अनंतरूपः तं त्रिविधपरिच्छेदस्वभावशून्यं पश्यामि। किं निर्गुणत्वेन पश्यसि? न किं तु सगुणत्वेन पश्यामीत्याह। कथंभूतम्। अनेकबाहूदरवक्त्रनेत्रं बाहवः हस्ताः च उदराणि वक्त्राणि च मुखानि नेत्राणि बाहूदरवक्त्रनेत्राणि अनेकानि अपरिमितानि बाहूदरवक्त्रनेत्राणि यस्मिन् सः तथोक्तः तम्। हे विश्वरूप! हे सर्वात्मक! अहं तव आदिं

पश्यामि त्वां दीप्तहुताशवक्त्रम्
स्वतेजसा विश्वमिदं तपंतम् ॥ १९ ॥
द्यावापृथिव्योरिदमंतरं हि
व्याप्तं त्वयैकेन दिशश्च सर्वाः।
दृष्ट्वाद्भुतं रूपमुग्रं तवेदम्
लोकत्रयं प्रव्यथितं महात्मन् ॥२०॥
अमी हि त्वा सुरसंघा विशंति
केचिद्भीताः प्रांजलयो गृणंति ।

दीप्त्या इदं दृश्यमानं विश्वं तपंतं तपति तापयतीति वा तपन् तं तपंतम् ॥ १९ ॥ अन्यदपि आश्चर्यं पश्यामि इत्याह । द्यावापृथिव्योरिति । द्यावापृथिव्योः ब्रह्मांडकपालयोः इदं प्रत्यक्षं अंतरं मध्यावकाशः त्वया एकेन व्याप्तं चेत्यपरं सर्वाः पार्श्ववर्त्तिन्यः दिशः त्वयैव व्याप्ताः किमिदं । आश्चर्यं अदृष्टपूर्वं पश्यामि इति प्रार्थनयोक्तिः । किं च हे महात्मन् ! हे अपरिच्छिन्नरूप! अहं तव इदं प्रत्यक्षं अद्भुतं अभिनवं उग्रं भयानकं रूपं विश्वरूपं दृष्ट्वा अवलोक्य लोकत्रयं लोकानां त्रयं लोकत्रयं त्रैलोक्यं प्रव्यथितं प्रकर्षेण व्यथा दुःखं संजाता यस्य तत् प्रव्यथितं व्यथां प्राप्तं पश्यामि इति पूर्वेण संबंधः । हि इति निश्चयेन ॥ २० ॥ अमीहीति । किंच प्रत्यक्षं पश्य । अमी सुरसंघाः सुराणां देवानां संघाः समूहाः सुरसंघाः ये अंशेन कार्यार्थं त्वयैव अवतारिताः भीष्मादयः स्वपरसैन्ये ते सर्वे समुदायेन त्वा त्वां विशंति प्रविशंति । हि इति निश्चयेन । त्वां विना वयं स्वतंत्राः समर्थाः न भवाम

स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः
स्तुवंति त्वां स्तुतिभिः पुष्कलाभिः ॥ २१ ॥
रुद्राऽऽदित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।

इति त्वदुत्पन्नाः त्वय्येव लीनाः बभूवुरित्यर्थः । केचित् स्वपरसैन्ये विद्यमानाः त्वत्तः भीताः स्वामिनं कथं योत्स्याम इति भयं प्राप्ताः संतः प्रांजलयः प्रकर्षेण अंजलयः करसंपुटाः येषां ते प्रांजलयः त्वां गृणंति स्तुवंति । हे भगवन् ! त्वयैव अवतारिताः वयं त्वत्समक्षाः तिष्ठाम नास्माकं अपराधः इति सविनयं वदंति । महर्षिसिद्धसंघाः महर्षयः भृग्वादयः च सिद्धाः कपिलादयः महर्षिसिद्धानां संघाः समुदायाः स्वस्ति कल्याणं अस्तु इति उक्त्वा इति उच्चार्य पुष्कलाभिः अप्रमेयार्थवतीभिः स्तुतिभिः स्तवनपरैः श्रुतिवाक्यैः त्वां विश्वरूपिणं स्तुवंति ॥ २१ ॥ अन्यदपि आश्चर्यं पश्यामीत्याह । रुद्रादित्या इति । एते सर्वे एव समस्ता एव विस्मिताः संतः विस्मयः संजातो येषां ते विस्मिताः त्वां विश्वरूपिणं वी ते अवलोकयंति इति अन्वयः । मौनेनैव पश्यंतीत्यर्थः । एते के रुद्रादित्याः रुद्राः एकादशरुद्राः च आदित्याः द्वादशादित्याः रुद्र याः चेत्यपरं वसवः अष्टौ वसवः च ये प्रसिद्धाः साध्याः साध च विश्वे विश्वेदेवाः च अश्विनौ अश्विनीकुमारौ चेत्यपरं मरु रुद्गणाः च ऊष्मपाः ऊष्माणं उष्णान्नं पिबंति भक्षंति ते ऊष्मपाः पितरः यमादयः चेत्यपरं गंधर्वयक्षासुरसिद्धसंघाः गंधर्वाः चित्ररथादयः यक्षाः कुबेरादयः असुराः विरोचनादयः सिद्धाः उत्पत्तित एव ज्ञानसंपन्नाः गंधर्वयक्ष

गंधर्वयक्षासुरसिद्धसंघा
वीक्षंते त्वां विस्मिताश्चैव सर्वे ॥२२॥
रूपं महत्ते बहुवक्त्रनेत्रं
महाबाहो बहुबाहूरुपादम् ।

सुरसिद्धाः गंधर्वयक्षासुरसिद्धानां संघाः समुदायाः 'यावदन्नं भवेदुष्णं यावदश्नंति वाग्यताः। पितरस्तावदश्नंति यावन्नोक्ता हविर्गुणाः'॥२२॥ किंच अनुग्रहेपि विपरीतं पश्यामीत्याह । रूपमिति । हे महाबाहो! महांतः निग्रहानुग्रहकरणे समर्थाः बाहवो यस्य सः महाबाहुः तत्सं-बुद्धौ हे महाबाहो । लोकाः लोक्यंते अवलोक्यंते इति लोकाः चतुर्दश-भुवनस्थाः ते तव महत् अपरिच्छिन्नं अतिभयानकं रूपं विश्वरूपं दृष्ट्वा अवलोक्य प्रव्यथिताः प्रकर्षेण व्यथा दुःखं संजाता येषां ते प्रव्यथिताः बभूवुः जाताः । सर्वव्यापकं भयंकरं त्वां दृष्ट्वा पलाय-नस्य अनवकाशेन स्वस्थाः न बभूवुः। दुःखसंविग्नाः दृश्यंत इत्यर्थः। ननु लोकव्यथया तव किं दुःखम्?अहमपि तथैवेत्याह । अहं प्रव्य-थितः अतिदुःखितः अस्मि । त्वत्संनिधावपि मम भयव्यथा अस्ति । संकोचेन स्वव्यथां तिरोधाय लोकव्यथां प्रवेशयामीत्यर्थः। ननु—मां दृष्ट्वा किमिति लोकाः प्रव्यथिताः? त्वमपीत्याशंक्याह। कथंभूतं रू-पम्। बहुवक्त्रनेत्रं वक्त्राणि मुखानि च नेत्राणि लोचनानि वक्त्रनेत्राणि बहूनि अपरिमितानि वक्त्रनेत्राणि यस्मिन् तत् बहुवक्त्रनेत्रम्। यत्र स्व-रूपे एकं भयानकवक्त्रनेत्रं दृष्ट्वा लोकाः प्रव्यथिताः भवंति । किं पुनः भयानकबहुवक्त्रनेत्रमित्यर्थः । पुनः कथंभूतं रूपम्। बहुबाहूरुपादं बाहवः हस्ताः च उरवः च पादाः चरणाः बाहूरुपादाः बहवः अपरि-[मि]ताः बाहूरुपादाः यस्मिन् तत् बहुबाहूरुपादम्। पुनः कथंभूतं रूपम्।

बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥ २३ ॥
नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम्।
दृष्ट्वा हि त्वां प्रव्यथितांतरात्मा
धृतिं न विंदामि शमं च विष्णो ॥ २४ ॥
दंष्ट्राकरालानि च ते मुखानि

बहूदरं बहूनि उदराणि यस्मिन् तत् बहूदरम्। पुनः कथंभूतं रूपम्। बहुदंष्ट्राकरालं बहवः अपरिमिताश्च ताः दंष्ट्राश्च बहुदंष्ट्राः बहुदंष्ट्राभिः करालं भयानकं बहुदंष्ट्राकरालम् ॥ २३ ॥ नभःस्पृशमिति। हे विष्णो! वेष्टयति व्याप्नोतीति विष्णुः तत्संबुद्धौ हे विष्णो! हे व्यापनशील! अहं त्वां अभिनवरूपं दृष्ट्वा अवलोक्य धृतिं धैर्यं चेत्यपरं शमं शांतिं न विंदामि न लभे। कथंभूतः अहम्। प्रव्यथितांतरात्मा प्रव्यथितः दुःखितः अंतरात्मा यो यस्य सः प्रव्यथितांतरात्मा। कथंभूतं त्वाम्। नभःस्पृशं नभः आकाशं स्पृशतीति नभःस्पृक् तं अंतरिक्षव्यापिनम्। पुनः कथंभूतम्। दीप्तं तेजोमयम्। पुनः कथंभूतम्। अनेकवर्णं अनेके बहवः वर्णाः यस्य सः तं अनेकवर्णम्। पुनः कथंभूतम्। व्यात्ताननं व्यात्तानि विवृतानि आननानि मुखानि यस्य सः तं व्यात्ताननम्। पुनः कथंभूतम्। दीप्तविशालनेत्र विशालानि विस्तीर्णानि च तानि नेत्राणि च विशालनेत्राणि दीप्तानि विशालनेत्राणि यस्य सः दीप्तविशालनेत्रः तम् ॥ २४ ॥ दंष्ट्राकरालानीति। किं च हे देवेश! देवानां ईशः देवेशः तत्संबुद्धौ हे देवेश! अहं ते

दृष्ट्वैव कालानलसंनिभानि ।
दिशो न जाने न लभे च शर्म
प्रसीद देवेश जगन्निवास ॥ २५ ॥
अमी च त्वां धृतराष्ट्रस्य पुत्राः
सर्वे सहैवावनिपालसंघैः ।

तव विश्वरूपस्य मुखानि दृष्ट्वैव अवलोक्यैव दिशः पूर्वाद्याः न जाने दिग्विभागं न जानामि । चेत्यपरं शर्म सुखं न लभे न प्राप्नोमि । हे जगन्निवास ! जगतां निवासः वसतिस्थानं यस्मिन् सः अथवा जगति निवासो यस्य सः जगन्निवासः तत्संबुद्धौ हे जगन्निवास ! त्वं प्रसीद प्रसन्नो भव । भयहेतुत्वे मुखानि विशिनष्टि । कथंभूतानि मुखानि । दंष्ट्राकरालानि दंष्ट्राभिः विकटदंष्ट्राभिः करालानि भयानकानि । पुनः कथंभूतानि । कालानलसंनिभानि काले प्रलयकाले अनलः अग्निः कालानलः कालानलेन संनिभानि सदृशानि कालानलसंनिभानि जाज्वल्यमानानि ॥ २५ ॥ ननु—मया प्रसन्नेनैव विश्वरूपं दर्शितम् । प्रसीदेति पुनः किमिति प्रार्थयसे? । सत्यम् । इदानीं अन्यथादर्शनात् इत्यभिप्रायेणाह द्वाभ्याम् । अमी चेति । यन्मरणनिमित्तं शोचामि ते अमी प्रत्यक्षाः धृतराष्ट्रस्य पुत्राः दुर्योधनादयः सर्वेपि अवनिपालसंघैः सह अवनिं पृथिवीं पालयंति ते अवनिपालाः अवनिपालानां जयद्रथादीनां संघाः समाजाः अवनिपालसंघाः तैः सह त्वां अनुलक्ष्य त्वरमाणाः संतः त्वरयंति ते त्वरमाणाः ते तव वक्त्राणि मुखानि विशंति प्रविशंति इति द्वयेनान्वयः । ननु-दुर्योधनादयः सपत्नभावेन वर्त्तंते ते मन्मुखेषु प्रविशंतु तन्मरणे का वा क्षतिः ?

भीष्मो द्रोणः सूतपुत्रस्तथासौ
सहास्मदीयैरपि योधमुख्यैः ॥ २६ ॥
वक्त्राणि ते त्वरमाणा विशंति
दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनांतरेषु
संदृश्यंते चूर्णितैरुत्तमांगैः ॥ २७ ॥
यथा नदीनां बहवोंबुवेगाः
समुद्रमेवाभिमुखा द्रवंति ।

इत्याशंक्य यद्यपि तन्मरणे क्षतिर्नास्ति तथापि अस्मदीयैः सह भीष्मादिनिधनेन शंकितोस्मि इत्यभिप्रायेणाह । यथा दुर्योधनादयः तव वक्त्राणि विशंति तथा भीष्मः मत्पितामहः त्वद्भक्तः द्रोणः गुरुः असौ प्रसिद्धः कर्णः सूतपुत्रः भ्राता एते अस्मदीयैः अस्माकं इमे अस्मदीयाः तैः योधमुख्यैः योधानां भटानां मुख्याः योधमुख्याः तैः शिखंडिधृष्टद्युम्नादिभिः सह ते वक्त्राणि प्रविशंति ॥ २६ ॥ वक्त्राणीति । कथंभूतानि वक्त्राणि दंष्ट्राकरालानि दंष्ट्राभिः करालानि विकटानि । पुनः कथंभूतानि । भयानकानि भयंकराणि तेषां मध्ये केचित् शूराः चूर्णितैः शाकशलाकावत् चूर्णीकृतैः उत्तमाङ्गैः उत्तमानि च तानि अंगानि च उत्तमांगानि तैः मस्तकैः दशनांतरेषु दशनानां दंतानां अंतराणि संधयः दशनांतराणि तेषु विलग्नाः संतः संलग्नाः संतः संदृश्यंते दंतसंधिषु पतितोत्तमांगानि आंदोलितशरीराणि पश्यामि॥२७॥ तेषां प्रवेशं दृष्टांतेनाह । यथेति । यथा येन प्रकारेण नदीनां अनेकमार्गप्रवृत्तानां गंगाद्यानां बहवः अनेकाः अंबुवेगाः अंबूनां उदकानां

तथा तवामी नरलोकवीरा
विशंति वक्त्राण्यभिविज्वलंति ॥ २८ ॥

यथा प्रदीप्तं ज्वलनं पतंगा
विशंति नाशाय समृद्धवेगाः।
तथैव नाशाय विशंति लोका-
स्तवापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥

लेलिह्यसे ग्रसमानः समंतात्

वेगाः प्रवाहाः समुद्रमेव लवणार्णवमेव अभिमुखाः संतः आभिमुख्येन प्रवर्त्तमानाः संतः द्रवंति प्रतिबंधराहित्येन समुद्रं प्रविशंति। तथा तेन प्रकारेण अमी प्रसिद्धाः नरलोकवीराः नराणां लोकः नरलोकः नरलोके वीराः शूराः तव वक्त्राणि मुखानि विशंति प्रविशंति। कथंभूतानि वक्त्राणि। अभिविज्वलंति अभि आसमंताद्भागे विशेषेण ज्वलंति प्रदीप्यमानानि भवंति तानि अभिविज्वलंति ॥२८॥ बुद्धिपूर्वकप्रवेशे दृष्टांतमाह। यथा प्रदीप्तमिति। यथा येन प्रकारेण पतंगाः पतं शीघ्रं गच्छंति ते पतंगाः शलभाः नाशाय मृत्यवे मरणायेत्यर्थः। समृद्धवेगाः संतः समृद्धः तीव्रः वेगो येषां ते प्रदीप्तं प्रकर्षेण दीप्तः जाज्वल्यमानः तं ज्वलनं ज्वलतीति ज्वलनः तं दावानलं विशंति प्रविशंति। तथैव तेनैव दृष्टांतेन लोकाः लोकयंते अवलोकयंते इति लोकाः उभयचमूस्थाः शूराः समृद्धवेगाः संतः समृद्धः तीव्रः वेगो येषां ते नाशाय मरणाय तव वक्त्राणि दावानलतुल्यानि विशंति प्रविशंति ॥२९॥ हे भगवन्! अन्यदपि आश्चर्यं दृष्टं तत् आह। लेलिह्यस इति। हे विष्णो! हे व्यापनशील! त्वं महाध्वरेषु महायज्ञेषु प्रक्षिप्तं हविर्द्रव्यं

लोकान् समग्रान् वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य जगत्समग्रम्
भासस्तवोग्राः प्रतपंति विष्णो ॥ ३० ॥
आख्याहि मे को भवानुग्ररूपो
नमोस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवंतमाद्यम्

इंद्रादिद्वारैः स्वीकरोषि । इदानीं ज्वलद्भिः ज्वलंति तानि ज्वलंति तैः वदनैः मुखैः समंतात् आसमंताद्भागे समग्रान् निरवशेषान् लोकान् ग्रसमानः सन् ग्रसते ऽसौ ग्रसमानः भक्षमाणः सन् लेलिह्यसे अतिशयेन भक्षयसि किम्? । शूराणामेव नाशो जातो नान्यत् व्यसनं दृश्यते इत्याह । तव उग्राः अत्युल्बणाः भासः प्रलयाग्निवत् अंगमुख-दीप्तयः तेजोभिः ज्वालाभिः समग्रं समस्तं जगत् विश्वं आपूर्य व्याप्य प्रतपंति प्रकर्षेण संतापयंति इत्यर्थः ॥ ३० ॥ अधुना किं त्वं प्रलयं करोषि? मां कथय इत्याशयेनाह । आख्याहीति । इदानीं भवान् त्वं उग्ररूपः सन् उग्रं भयंकरं रूपं यस्य सः उग्ररूपः भयान-कस्वभावः कः असि इति मे मह्यं आख्याहि कथय । हे देववर! देवानां मध्ये वरः श्रेष्ठः तत्संबुद्धौ हे देववर हे देवश्रेष्ठ! ते तुभ्यं नमः नम-स्कारः अस्तु । त्वं प्रसीद प्रसन्नो भव । किमिति मां प्रसन्नीकरोषि? तत्राह । विश्वरूपं दृष्ट्वा भयाविष्टः अहं भवंतं मत्सखं आद्यं पूर्वदृष्टं त्रैलोक्यमनोहरं रूपं विज्ञातुं अनुभवितुं इच्छामि इच्छां करोमि । ननु-सानुग्रहं रूपं अनादृत्य सखिरूपं किं इच्छसि? तत्राह । हि यस्मात् कारणात् अहं तव विश्वरूपस्य प्रवृत्तिं अभिप्रायं न जानामि तेन

न हि प्रजानामि तव प्रवृत्तिम् ॥ ३१ ॥

श्रीभगवानुवाच ।

कालोऽस्मि लोकक्षयकृत्प्रवृद्धो
लोकान् समाहर्त्तुमिह प्रवृत्तः ।
ऋतेपि त्वां न भविष्यंति सर्वे
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३२ ॥
तस्मात् त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून् भुंक्ष्व राज्यं समृद्धम् ।

निमित्तेन भयाविष्टोहं पूर्वरूपं विज्ञातुं इच्छामीत्यर्थः ॥ ३१ ॥ श्रीभगवान् आत्मानं स्वप्रवृत्तिं च प्रश्नोत्तरत्वेनाह—संजयो धृतराष्ट्रं प्रति । कालोऽस्मीति । हे पार्थ ! अहं कालः संहारकः प्रवृद्धः प्रकर्षेण वृद्धः वृद्धिं गतः अस्मि । कथंभूतः अहम् । लोकक्षयकृत् लोकानां ब्रह्मादिस्तंबपर्यंतानां क्षयः नाशः लोकक्षयं करोतीति तथोक्तः । ननु—इह किमर्थं प्रवृत्तोसीत्यत आह । अहं लोकान् समाहर्त्तुं नाशयितुं इह समये प्रवृत्तः प्राप्तः अस्मि । ननु—सर्वान् संहर्त्तुं प्रवृत्तोस्मि इति उक्तं किं ब्रह्मांडं संहर्त्तुं प्रवृत्तोसि मामपि किं संहरिष्यसि ? नेत्याह । त्वां ऋते त्वां विना सर्वेपि न भविष्यंति मरिष्यंति । तर्हि मां विना ब्रह्मांडवर्त्तिनः मरिष्यंति ? नेत्याह । इह युद्धे ये प्रसिद्धाः युद्धयंत इति योधाः योद्धारः प्रत्यनीकेषु सैन्यसमुदायेषु अवस्थिताः विद्यमानाः संति ते सर्वे मरिष्यंति ॥ ३२॥ त्वमेव सर्वान् संहरिष्यसि चेत् तर्हि मां युद्धे किमर्थं नियोजयसि इत्याशंक्य त्वयि संहर्तृशक्तिर्मदीयैवास्ति । त्वं तु केवलं लौकिकं वधयशः राज्यं च लभस्व इत्या-

मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ॥ ३३ ॥
द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथाऽन्यानपि योधवीरान्।
मया हतांस्त्वं जहि मा व्यथिष्ठा
युद्धयस्व जेतासि रणे सपत्नान् ॥ ३४ ॥

शयेनाह। तस्मादिति। हे सव्यसाचिन्! सव्येन वामपाणिना साचितुं संधातुं शीलं यस्य सः सव्यसाची तत्संबुद्धौ हे सव्यसाचिन्! मयैव पूर्वं युद्धप्रवृत्तेः प्रागेव एते भीष्मादयः निहताः नितरां हताः निर्गतप्राणाः कृताः तस्मात् कारणात् त्वं उत्तिष्ठ यशः 'अर्जुनेन हताः' इत्येवं रूपं यशः कीर्तिं लभस्व प्राप्नुहि। किं च त्वं शत्रून् दुर्योधनादीन् जित्वा हत्वा समृद्धं निष्कंटकं राज्यं राज्ञः कर्म राज्यं भुंक्ष्व भोग्यत्वेन संपादय। मया एतेषां आयुः जीवनं अपहृतम्। एते मृतप्रायाः संति। त्वं निमित्तमात्रं निमित्तमेव निमित्तमात्रं भव। यथा कालात्मना क्षीणायुषः ज्वरादयो निमित्तास्तद्वदिति भावः ॥ ३३ ॥ ननु—क्षीणायुषोऽपि महाप्रभावाः एते मया कथं हंतुं योग्याः तत्राह। द्रोणमिति। हे अर्जुन! मया हतान् युद्धसामर्थ्यात् वियोजितान्। मृतप्रायकृतानित्यर्थः। एतान् त्वं जहि घातय। एतान् कान्?। द्रोणं चेत्यपरं भीष्मं चेत्यपरं जयद्रथं चेत्यपरं कर्णं तथा अन्यान् योधवीरान् योधेषु वीराः योधवीराः तान्। एते मया कथं हंतव्याः इति एवं मा व्यथिष्ठाः व्यथां चिंतां मा प्राप्नुहि। रणे संग्रामे सपत्नान् शत्रून् जेतासि जेष्यसि। त्वं युद्धयस्व युद्धाय सन्नद्धो भव इति भगवता अर्जुनस्य पृष्ठ

संजय उवाच ।

एतच्छ्रुत्वा वचनं केशवस्य
कृतांजलिर्वेपमानः किरीटी ।
नमस्कृत्वा भूय एवाह कृष्णम्
सगद्गदं भीतभीतः प्रणम्य ॥ ३५ ॥

अर्जुन उवाच ।

स्थाने हृषीकेश तव प्रकीर्त्या
जगत् प्रहृष्यत्यनुरज्यते च ।

स्वपाणिना स्पृश्यते ॥ ३४ ॥ ततः किं वृत्तं इत्यपेक्षायां संजयो धृतराष्ट्रं प्रति उवाचेत्याह । एतदिति । अर्जुनः केशवस्य कः ब्रह्मा च ईशः रुद्रः केशौ केशौ वशयति वशं करोतीति केशवः तस्य केशवस्य श्रीकृष्णस्य एतत् उक्तप्रकारं वचनं वाक्यं श्रुत्वा निशम्य सख्युः प्रभावातिशयं दृष्ट्वा पूर्वं तिरस्कारादिस्मरणभयेन वेपमानः सन् सर्वांगेषु कंपमानः सन् किरीटयुक्तेन शिरसा नमस्कृत्वा पादयोः मुकुटयुक्तं शिरो निधाय भूय एव प्रणम्य भीतभीतः सन् अतिशयेन भीतः इति भीतभीतः सगद्गदं गद्गदेन सहितं सगद्गदं बाष्पयुक्तेन कंठेन स्खलिताक्षरं यथा स्यात्तथा कृष्णं आह वक्ष्यमाणप्रकारेण उक्तवान् । कथंभूतः अर्जुनः । कृतः अंजलिर्येन सः कृतांजलिः संयुक्तांजलिपुटः ॥ ३५ ॥ स्थाने इति एकादशभिः अर्जुनस्योक्तिः । स्थाने इति अव्ययं युक्तार्थे । हे हृषीकेश ! हृषीकाणां इंद्रियाणां ईशः हृषीकेशः तत्संबुद्धौ हे हृषीकेश ! तव सर्वात्मनः प्रकीर्त्या प्रकर्षेण

रक्षांसि भीतानि दिशो द्रवंति
सर्वे नमस्यंति च सिद्धसंघाः ॥ ३६ ॥
कस्माच्च ते न नमेरन् महात्मन्
गरीयसे ब्रह्मणोप्यादिकर्त्रे।
अनंत देवेश जगन्निवास

कीर्तिः तया प्रकीर्त्या माहात्म्यसंकीर्त्तनेन यशःश्रवणेन जगत् तव कीर्त्तिश्रवणं प्रति सादरेण गच्छतीति जगत् भक्तवृंदं प्रहृष्यति प्रकर्षेण हर्षं प्राप्नोति। किं च तव कीर्त्तौ अनुरज्यते रतिं करोति इति स्थाने युक्तम्। स्वात्मकीर्त्तौ को वा हर्षं न प्राप्नोति?। तत्रैव अप्रीतिं न प्राप्नोतीत्यर्थः। किं च रक्षांसि राक्षसाः भीतानि संति भयं प्राप्ताः संतः दिशः द्रवंति सर्वतः पलायंति इति स्थाने युक्तम्। किं च सर्वे समस्ताः सिद्धसंघाः सिद्धानां संघाः समूहाः नमस्यंति नमस्कुर्वंति इति स्थाने युक्तम् ॥ ३६ ॥ कस्माच्चेति। हे महात्मन्! हे अपरिच्छिन्नस्वरूप! ते सिद्धसंघाः कस्मात् हेतोः गरीयसे अतिशयेन गुरुः श्रेष्ठः इति गरीयाः तस्मै गरीयसे तुभ्यं न नमेरन् न नमस्कुर्युः?। अपि तु नमस्कुर्युरित्यर्थः। कथंभूताय गरीयसे ब्रह्मणोपि हिरण्यगर्भस्यापि आदिकर्त्रे आदि प्रथमं करोति शरीरं जनयतीति आदिकर्ता तस्मै। 'स वै पुरुषः प्रथमशरीरीति श्रुतेः'। आदिपुरुषस्यापि जनकत्वात् त्वं गरीयानित्यर्थः। हे अनंत! हे त्रिविधपरिच्छेदशून्य! हे देवेश! हे देवनियंतः! हे जगन्निवास! हे विश्वाधार! त्वं अक्षरं न क्षरति तत् अक्षरं व्यापकं असि। सत् कार्यं असत् कारणरूपं त्वमेव असि। तत्परं ताभ्यां कार्यकारणाभ्यां परं मूलकारणं

त्वमक्षरं सदसत्तत्परं यत् ॥ ३७ ॥
त्वमादिदेवः पुरुषः पुराणः
त्वमस्य विश्वस्य परं निधानम् ।
वेत्तासि वेद्यं च परं च धाम
त्वया ततं विश्वमनंतरूप ॥ ३८ ॥
वायुर्यमोऽग्निर्वरुणः शशांकः

तत्परं यत् प्रसिद्धं परं ब्रह्म तत् त्वमेव असि ॥ ३७ ॥ त्वां विना किमपि नास्तीत्याह । त्वमादिदेव इति । हे अनंतरूप ! अनंतानि अपरिमितानि रूपाणि यस्य सः अनंतरूपः तत्संबुद्धौ हे अनंतरूप ! हे अपरिच्छिन्नमूर्त्ते ! त्वं आदिदेवः देवानां ब्रह्मादीनां आदिः कारणं इति आदिदेवः असि । कथंभूतः त्वम् । पुरुषः पुरा आस इति पुरुषः पूर्णः । पुनः कथंभूतः पुरुषः । पुराणः पुरापि सर्वस्मात् पूर्वं विद्यमानोपि नवः नित्यं नूतनः इति पुराणः । किं च त्वं अस्य चराचरस्य विश्वस्य जगतः परं श्रेष्ठं निधानं निधीयते यस्मिन्निति अथवा प्रलये सर्वं लयमाप्नुते इति निधानं लयस्थानं असि । चेत्यपरं त्वं वेत्ता वेत्तीति वेत्ता वेत्ति अंतर्बहिः सर्वं जानातीति तथोक्तः असि । त्वं वेद्यं सर्वैः वेदैः प्रतिपादितुं योग्यं वेद्यं असि । चेत्यपरं परं श्रेष्ठं धाम स्थितिकाले सर्वेषां निवासस्थानं यद्वा पातीति पं रमयतीति रं पं च रं च परं धाम स्वयंप्रकाशस्वभावं त्वमेव असि । जगत् पालयन् रमयतीत्यर्थः । अत एव त्वया चिद्रूपेण विश्वं जडं ततं व्याप्तं जडमपि यद्विश्वं चैतन्येन चेतनवत् प्रतीयते । सैव तत्र व्याप्तिरित्यर्थः ॥ ३८ ॥ व्याप्तिं सर्वात्मकत्वेन दर्शयति । वायुरिति । हे भगवन्! वायुः जगत्प्राणः त्वमेवासि ।

प्रजापतिस्त्वं प्रपितामहश्च ।
नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोपि नमो नमस्ते ॥ ३९ ॥
नमः पुरस्तादथ पृष्ठतस्ते
नमोस्तु ते सर्वत एव सर्व ।

यमः यमयति यथाकर्म सर्वप्राणिनः दमयतीति यमः त्वमेवासि। अग्निः देवानां मुखं त्वमेवासि। वरुणः अपांपतिः त्वमेवासि। शशांकः शशस्य अंकः लाञ्छनं यस्य सः शशांकः चंद्रः देवभोग्यः त्वमेवासि। प्रजापतिः प्रजानां पतिः प्रजापतिः वैराजपुरुषः त्वमेवासि। प्रपितामहः हिरण्यगर्भः त्वमेव असि। त्वमेवेति प्रत्येकं संबंधः। यतः सर्वात्मकस्त्वं ततः सहस्रशस्तुभ्यं नमोस्त्वित्याह। हे विश्वरूपिन्! ते तुभ्यं सहस्रकृत्वः सहस्रवारं नमः नमः नमस्कारः नमस्कारः अस्तु। आदरे वीप्सा नाम द्विरुक्तिः। चेत्यपरं पुनः पुनरपि भूयः अधिकं ते तभ्यं नमो नमः नमस्कारः अस्तु ॥३९॥ पूर्वं विशेषत्वेन नमस्कृत्य इदानीं सामान्यतः प्राच्यादिदिग्वस्थं भगवंतं प्रणमति। नम इति। अथ विशेषनमस्कारानंतरं पुरस्तात् प्राच्यां दिशि सामान्यतः वर्त्तमानाय ते तुभ्यं नमः नमस्कारः अस्तु। पृष्ठतः प्रतीच्यां दिशि वर्तमानाय ते तुभ्यं नमः नमस्कारः अस्तु। हे सर्व! हे सर्वस्वरूप! सर्वतः सर्वासु दिक्षु नमः नमस्कारः अस्तु। 'ब्रह्मैवेदं पुरस्तात् पश्चात् दक्षिणतश्चोत्तरेणेति श्रुतेः'। सर्वत्र सर्वरूपेण वर्तमानाय सामान्येन नमस्कारोस्तु इति उक्तं सर्वात्मत्वं प्रभावातिशयेन दर्शयति। हे अनंतवीर्य! अनंतं अक्षीणं वीर्यं सामर्थ्यं यस्य सः अनंतवीर्यः

अनंतवीर्यामितविक्रमस्त्वम्
सर्वं समाप्नोषि ततोसि सर्वः ॥४० ॥

सखेति मत्वा प्रसभं यदुक्तम्
हे कृष्ण हे यादव हे सखेति ।
अजानता महिमानं तवेदम्
मया प्रमादात्प्रणयेन वापि ॥ ४१ ॥

यच्चावहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु ।

तत्संबुद्धौ हे अनंतवीर्य ! त्वं अमितविक्रमः अमितः अपरिमितः विक्रमः पराक्रमः यस्य सः अमितविक्रमः असि । यतः हेतोः त्वं सर्वं श्रुतदृष्टं समाप्नोषि अंतर्बहिर्व्याप्य तिष्ठसि । ततः अंतर्बहिर्व्याप्त्य-नंतरं त्वं सर्वः सर्वरूपः असि । सर्वरूपेण त्वमेवासीत्यर्थः ॥४०॥ एवं तव सर्वात्मकत्वं अज्ञात्वा त्वं सखेति मत्वा मया तिरस्कृतोपि इदानीं मदीयोयमर्जुनः इति मत्वा सर्वं अपकृतं क्षंतुं अर्हसि । इति कृपां उत्पादयन्नाह द्वाभ्याम् । सखेति । हे स्वामिन् ! पूर्वं तव इदं दृश्यमानं महिमानं अजानता न जानातीति अजानन् तेन अनभिज्ञेन मया त्वं सखा इति मत्वा प्रमादात् अनादरेण वा प्रणयेन प्रतार-णेन प्रसभं हठात् हे कृष्ण! हे यादव! हे सखे! इति एवं प्रकारेण यत् प्रसिद्धं उक्तं हेलनया अभिभाषितं तत् सर्वमपि क्षामये क्षमा-पये इति द्वितीयेनान्वयः ॥ ४१ ॥ यच्चेति । किं च यच्च यस्मिन् काले अवहासार्थं अवहासाय परिहासाय इति अवहासार्थं परिहा-सार्थं वक्रोक्त्या कथं सत्यं वदसि इत्यादिना तिरस्कृतः असि तथा

एकोऽथवाप्यच्युत तत्समक्षं
तत्क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥
पितासि लोकस्य चराचरस्य
त्वमस्य पूज्यश्च गुरुर्गरीयान्।
न त्वत्समोस्त्यभ्यधिकः कुतोन्यो

विहारशय्यासनभोजनेषु विहारश्च शय्या च आसनं च भोजनं च विहारशय्यासनभोजनानि तेषु विहारे क्रीडायां अंगुल्या कुक्षिं स्पृष्ट्वा तिरस्कृतोसि। शय्यायां शयनेन सह हस्तपादाघातेन तिरस्कृतोसि। आसने एकासने अंगघर्षणेन असत्कृतोसि तिरस्कृतोसि। भोजने भुक्त्या सह तव हस्तं दूरीकृत्य मिष्टान्नभक्षणे असत्कृतोसि। अथ पक्षांतरे एकः एकांते अथवा तत्समक्षं तेषां जनानां समक्षं जनसभायामपि असत्कृतोसि तिरस्कृतोसि। तत्सर्वमपि क्षम्यताम्। हे अच्युत! अहं त्वां अप्रमेयं अपरिच्छिन्नं क्षामये क्षमापये। क्षंतव्यमिति प्रार्थयामीत्यर्थः। अच्युतेति निर्विकारसूत्रकसंबोधनेन अपराधसहनत्वं ध्वनितम् ॥ ४२ ॥ अपराधसहनमपि तव योग्यमित्याशयेनाह। पितासीति। हे अप्रतिमप्रभाव! न विद्यते प्रतिमा उपमा यस्य सः अप्रतिमः अप्रतिमः प्रभावः सामर्थ्यं यस्य सः अप्रतिमप्रभावः तत्संबुद्धौ हे अनुपमपराक्रम! त्वं अस्य प्रसिद्धस्य चराचरस्य स्थावरजंगमस्य लोकस्य पिता जनकः असि चेत्यपरं पूज्यः पूजितुं योग्यः पूज्यः असि। त्वं गुरुः गृणाति हितमुपदिशतीति गुरुः असि। त्वं गरीयान् अतिशयेन गुरुः इति गरीयान् श्रेष्ठादपि श्रेष्ठः असि। लोकत्रयेपि लोकानां त्रयं लोकत्रयं तस्मिन् लोकत्रये भूर्भुवःस्वरा-

लोकत्रयेप्यप्रतिमप्रभाव ॥ ४३ ॥
तस्मात्प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियायार्हसि देव सोढुम् ॥ ४४ ॥
अदृष्टपूर्वं हृषितोस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे ।

ख्ये त्वत्समः त्वया समः त्वत्समः त्वत्तुल्यः अन्यः पुरुषः नास्ति । त्वत्तः अभ्यधिकः अधिकपराक्रमः कुतः कस्मात् हेतोः भवति ? अपि तु न भवतीत्यर्थः ॥ ४३ ॥ त्वदपराधात् मां कोपि मोचिता नास्ति इति स्वकारुण्यं पुरस्कृत्य कृपोत्पादकैः दृष्टांतैः भगवति कृपां उत्पादयन्नाह । तस्मादिति । तस्मात् त्वच्छरणतां विना त्वदपराधमोचकं न पश्यामि इति हेतोः अहं कायं शरीरं प्रणिधाय नम्रं विधाय दंडवत् भूमौ निपात्य प्रणम्य नमस्कृत्य त्वां सर्वात्मानं प्रसादये प्रसादयामि प्रसन्नं करोमि । कथंभूतं त्वाम् । ईशनशीलः ईशः तं ईशं शिक्षितारम् । पुनः कथंभूतं त्वाम् । ईड्यं ईडितुं स्तोतुं योग्यः ईड्यः तं ईड्यं स्तुतिप्रियम् । ननु—ईशिता यथापराधदंडं करिष्यत्येव तत्राह । ईशितापि स्तुतिप्रियश्चेत्सर्वापराधान् सहतीति भावः । कस्य क इव । पुत्रस्य अपराधान् पितेव । सख्युः मित्रस्य अपराधान् सखेव मित्रमिव । प्रियायाः पतिव्रतायाः अपराधान् प्रिय इव पतिरिव । हे देव! तथा त्वं मम अपराधान् सोढुं अर्हसि । योग्यो भवसीत्यर्थः ॥ ४४ ॥ एवं क्षमापयित्वा प्रार्थयते । अदृष्टपूर्वमिति । अहं अदृष्टपूर्वं केनापि

तदेव मे दर्शय देव रूपम्
प्रसीद देवेश जगन्निवास ॥ ४५ ॥
किरीटिनं गदिनं चक्रहस्तम्
इच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन
सहस्रबाहो भव विश्वमूर्ते ॥ ४६ ॥

पूर्वं दृष्टं न भवति तत् अदृष्टपूर्वं रूपं विश्वरूपं दृष्ट्वा अवलोक्य अलभ्यलाभेन हृषितः हर्षितः संतोषं गतः अस्मि। किं च भयेन भीत्या मे मम मनः अंतःकरणं प्रव्यथितं प्रकर्षेण व्यथा संजाता यस्य तत् प्रव्यथितं दुःखितं जातम्। ततः किं इत्यपेक्षायामाह। हे देव! हे स्वयंप्रकाश! त्वं तदेव पूर्वमेव रूपं स्वरूपं मे मह्यं दर्शय। हे देवेश! हे देवनियंतः! हे जगन्निवास! हे विश्वाधार! त्वं प्रसीद प्रसन्नो भव। दासेषु उपेक्षा नोचिता भवति इत्यर्थः ॥ ४५ ॥ तदेव रूपं दर्शय इति उक्ते सति किं तद्रूपं इत्यपेक्षायामाह। किरी-टिनमिति। अहं तथैव यथापूर्वमेव त्वां द्रष्टुं अवलोकितुं इच्छामि इच्छां करोमि। कथंभूतं त्वाम्। किरीटिनं किरीटोस्यास्तीति किरीटी तम्। पुनः कथंभूतम्। गदिनं गदा यस्यास्तीति गदी तं गदिनं गदावंतम्। पुनः कथंभूतम्। चक्रहस्तं चक्रं सुदर्शनं हस्ते यस्य सः चक्रहस्तः तम्। हे सहस्रबाहो! हे विश्वमूर्ते! इति संबोधनद्वयेन विश्वरूपांतर्धान-प्रार्थनया पूर्वाभ्यस्तदर्शनहेत्वभिप्रायेणाह। तेनैव मत्सखिस्वरूपेणैव रूपेण स्वरूपेण त्वं भव। कथंभूतेन रूपेण। चतुर्भुजेन चत्वारः भुजाः हस्ताः यस्मिन् तत् चतुर्भुजं तेन ॥ ४६ ॥ इति अर्जुनेन

श्रीभगवानुवाच ।

मया प्रसन्नेन तवार्जुनेदम्
रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनंतमाद्यम्
यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७ ॥
न वेदयज्ञाध्ययनैर्न दानैर्
न च क्रियाभिर्न तपोभिरुग्रैः ।

संप्रार्थितो भगवान् देवैरपि दुर्दर्शं रूपं वात्सल्येन मया दर्शितं तत्केनापि भाग्योदयेन त्वया दृष्टं साधनांतरैर्द्रष्टुमशक्यं इति वदन् तमाश्वास्य पूर्वरूपमेव पश्य इत्याह त्रिभिः । मयेति । हे अर्जुन! मया प्रसन्नेन प्रसादाभिमुखेन मे मम यत् प्रसिद्धं रूपं विश्वरूपं परं केवलं आत्मयोगात् योगमायासामर्थ्यात् तव इदं रूपं दर्शितम् । कथंभूतं रूपम् । आद्यं सर्वकारणम् । पुनः कथंभूतं रूपम् । अनंतं न विद्यते अंतो यस्य तत् अनंतं अपरिच्छिन्नम् । पुनः कथंभूतं रूपम् । विश्वं निरवशेषम् । पुनः कथंभूतं रूपम् । तेजोमयं प्रकाशबहुलं सर्वप्रकाशकम् । पुनः कथंभूतं रूपम् । त्वदन्येन त्वत्तः अन्यः त्वदन्यः तेन त्वदन्येन ब्रह्मादिनापि न दृष्टपूर्वं पूर्वं दृष्टं न भवति तत् न दृष्टपूर्वम् ॥ ४७ ॥ मत्कृपां विना अन्यैः साधनैः केनाप्यहं द्रष्टुमशक्य इत्याह । न वेदेति । हे कुरुप्रवीर! त्वदन्येन त्वत्तः अन्यः त्वदन्यः तेन त्वदन्येन केनचिदपि पुरुषेण नृलोके नृणां मनुष्याणां लोकः नृलोकः तस्मिन् मनुष्यलोके एवंरूपः एवं रूपं यस्य सः एवंरूपः अहं द्रष्टुं अवलोकितुं न शक्यः न समर्थः । एतद्दर्शनं अतिदुर्लभं लब्धा त्वं कृतार्थोसीत्याह । किंच अहं वेदयज्ञा-

एवंरूपः शक्य अहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥
मा ते व्यथा मा च विमूढभावो
दृष्ट्वा रूपं घोरमीदृङ् ममेदम् ।
व्यपेतभीः प्रीतमनाःपुनस्त्वम्
तदेव मे रूपमिदं प्रपश्य ॥ ४९ ॥

ध्ययनैः वेदाध्ययनं विना यज्ञासिद्धेः यज्ञशब्देन कल्पसूत्रादि गृह्यते ॥ वेदाश्च यज्ञाश्च वेदयज्ञाः वेदयज्ञानां अध्ययनानि तैः ब्रह्मयज्ञैः यज्ञानुष्ठानैः द्रष्टुं न शक्यः। चेत्यपरं दानैः सत्पात्रे धनार्पणैः द्रष्टुं न शक्यः । किं च अहं क्रियाभिः अग्निहोत्रादिभिः स्मार्त्तानुष्ठानैः द्रष्टुं न शक्यः । किंच उग्रैः तपोभिः कृच्छ्रचांद्रायणादिरूपैः द्रष्टुं न शक्यः ॥४८॥ एवं दुर्लभमपि मया केवलं कृपया दर्शितं तेन त्वं भीतोसि चेत्तर्हि पूर्वाभ्यस्तमेव रूपं पश्येत्याश्वासयति । मा ते इति । हे पार्थ! त्वं इदृक् ईदृशं घोरं भयावहं मम तव सख्युः इदं रूपं इदं विश्वरूपं दृष्ट्वा अवलोक्य भीतोसि चेत्तर्हि ते तव व्यथा मानसदुःखं मा भवतु चेत्यपरं ते तव विमूढभावः विमूढश्चासौ भावश्च विमूढभावः अज्ञानकृतमोहः मा भवतु । त्वं व्यपेतभीः सन् व्यपेता विगता भीः भयं यस्य सः व्यपेतभीः निर्भयः सन् चेत्यपरं प्रीतमनाः सन् प्रीतं तुष्टं मनः अंतःकरणं यस्य सः प्रीतमनाः प्रसन्नचित्तः सन् पुनः मे मम तदेव विश्वरूपव्यवहितं पूर्वदृष्टं इदं रूपं किरीटिनं गदिनं चक्रहस्तं प्रपश्य यथेच्छं अवलोकय ॥ ४९ ॥ ततः किं वृत्तमित्यपेक्षायामाह । इति उक्तप्रकारेण वासुदेवः वसुदेवस्य अपत्यं पुमान् वासु-

संजय उवाच ।

इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनम्
भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५० ॥

अर्जुन उवाच ।

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।

देवः सत्यत्वेन सर्वेषां आधारप्रकाशकः अर्जुनं सखायं प्रति तथा 'तदेव मे रूपं प्रपश्य' इति उक्त्वा स्वकं स्वस्य भक्तस्य कं सुखं भवति यस्मात् तत् स्वकं स्वकीयं रूपं किरीटादियुक्तं चतुर्भुजं भूयः पुनरपि दर्शयामास । किंच वात्सल्यतया पुनरपि महात्मा अनंतरूपः सौम्यवपुः सौम्यं शांतं वपुः शरीरं यस्य सः सौम्यवपुः पूर्वस्व-रूपादपि प्रीतिजनकमूर्त्तिः भूत्वा एनं अर्जुनं विश्वरूपदर्शनेन भीतं भयाविष्टं आश्वासयामास । अभयपाणिना सर्वांगस्पर्शनेन भयं माकार्षीः इति आश्वासनं कृतवान् ॥ ५० ॥ ततो भगवतः सौम्यरूपं दृष्ट्वा इदानीं स्वस्थः अस्मि इति उक्तवानित्याह । दृष्ट्वेति । हे जनार्दन ! जनान् भक्तजनान् अर्दयति पीडयति तत् जनार्दं दुःखं नाशयतीति जना-र्दनः तत्संबुद्धौ हे जनार्दन ! अहं तव इदं प्रत्यक्षदृष्टं मानुषं मनु-ष्याणां दर्शनयोग्यं मानुषं सौम्यं प्रियदर्शनं रूपं किरीटादियुतं इ-दानीं काले दृष्ट्वा अवलोक्य सचेताः चेतसा सहितः सचेताः पूर्वा-परानुसंधानयुक्तांतःकरणः संवृत्तः जातोस्मि । चेत्यपरं प्रकृतिं स्वास्थ्यं

इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः॥५१॥

श्रीभगवानुवाच।

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम।
देवा अप्यस्य रूपस्य नित्यं दर्शनकांक्षिणः॥५२॥
नाहं वेदैर्न तपसा न दानेन न चेज्यया।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा॥५३॥
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन।

गतोस्मि प्राप्तोस्मि॥ ५१ ॥ भीतं अर्जुनं आश्वासनेन स्वस्थं कृत्वा पुनरपि विश्वरूपदर्शनं अतिदुर्लभमित्यनुवदति। सुदुर्दर्शमिति। हे अर्जुन! त्वं मम यत् प्रसिद्धं इदं रूपं इदं विश्वरूपं दृष्टवानसि अवलोकितवानसि। अहो ते महद्भाग्यमित्यर्थः। कथंभूतं रूपम्। सुदुर्दर्शं सुतरां दुःखेन कष्टेन दर्शितुमशक्यं सुदुर्दर्शं ब्रह्मादिभिरपि दर्शनायोग्यं देवा अपि अस्य प्रसिद्धस्य रूपस्य विश्वरूपस्य नित्यं दर्शनकांक्षिणः दर्शनं कांक्षंति इच्छंति ते दर्शनकांक्षिणः संति। अद्यापि दर्शनेच्छावंतः न तु दृष्टवंतः॥ ५२ ॥ भक्तिं विना अन्यैः साधनैः अहं दृग्गोचरो न भवामि इति अनुवदति द्वाभ्याम्। हे पार्थ! यथा त्वं मां दृष्टवानसि अवलोकितवानसि तथा अहं वेदैः स्वाध्यायैः एवंविधः त्वद्दृष्टप्रकारः द्रष्टुं न शक्यः न समर्थः। तथा अहं तपसा कृच्छ्रचांद्रायणादिना द्रष्टुं न शक्यः। तथा दानेन सत्पात्रधनार्पणेन द्रष्टुं न शक्यः। तथा अहं इज्यया यागादिना द्रष्टुं न शक्यः न समर्थः॥ ५३ ॥ भक्त्येति। किं तु हे अर्जुन! अनन्यया न विद्यते अन्यो द्वितीयः यस्यां सा अनन्या तया अनन्यया भक्त्या अव्यभिचारिणा प्रेम्णा एवंविधः एवं विधा प्रकारः यस्य

ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥५४॥
मत्कर्मकृन्मत्परमो मद्भक्तः संगवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पांडव ॥५५॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु० विश्वरूपदर्शनं नाम एकादशोऽध्यायः॥ ११॥

सः एवंविधः त्वद्दृष्टप्रकारः अहं ज्ञातुं शास्त्रतः ज्ञानेन विषयीकर्तुं चेत्यपरं तत्त्वेन परमार्थतः द्रष्टुं प्रत्यक्षतः अवलोकितुं चेत्यपरं प्रवेष्टुं तादात्म्यं प्राप्तुं शक्यः समर्थः। हे परंतप! परान् रागादिशत्रून् तापयतीति परंतपः तत्संबुद्धौ हे परंतप! त्वं मां भक्त्या द्रष्टुं समर्थोऽसि इति संबोधनेन सूचितमिति ज्ञेयम् ॥ ५४ ॥ ननु—अनन्यया भक्त्या ज्ञातुं द्रष्टुं प्रवेष्टुं शक्योहं इति उक्तं भक्तेः अनन्यत्वं कथमित्यपेक्षायां आह। मत्कर्मेति। हे पांडव! एवंविधः एवंप्रकारकः यः भक्तः अस्ति सः भक्तः मां सर्वोपादानं परमानंदरूपं एति प्राप्नोति। नान्य इति भावः। कथंभूतः यः। मत्कर्मकृत् मदर्थं मत्प्रीतये वैदिकं लौकिकं कर्म करोतीति मत्कर्मकृत्। पुनः कथंभूतः यः। मत्परमः अहमेव परमः उत्कृष्टः पुरुषार्थो यस्य सः मत्परमः। पुनः कथंभूतः यः। मद्भक्तः मामेव सर्वभावेन भजतीति मद्भक्तः पुनः कथंभूतः यः संगवर्जितः संगेन मां विना जायापुत्रादिसंगेन वर्जितः रहितः संगवर्जितः। पुनः कथंभूतः यः। सर्वभूतेषु सर्वाणि च तानि भूतानि च सर्वभूतानि तेषु सर्वभूतेषु समविषमेषु निर्वैरः मद्दर्शनेन निर्गतं वैरं यस्मात् सः निर्वैरः। एतादृशः भक्तः मामेव प्राप्नोति इत्यर्थः। मम तद्वियोगो नास्तीति भावः॥ ५५॥ ॥ वेदैरपि सुदुर्दर्शं तपोयज्ञादिकोटिभिः। भक्ताय भगवानेवं विश्वरूपमदर्शयत्॥ १ ॥ इति श्रीबालबोधिन्यां श्रीमद्भगवद्गीताटीकायां एकादशोऽध्यायः॥ ११॥

श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥२॥
ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिंत्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥
सन्नियम्येंद्रियग्रामं सर्वत्र समबुद्धयः ।

संति । कथंभूताः ये । परया श्रेष्टया श्रद्धया भक्त्या उपेताः युक्ताः ॥ २॥ 'ते मे युक्ततमा मता' इत्यनेन उपास्योपासकभेदेन इतरेभ्यः सगुणोपासकानां श्रेष्ठतमत्वं उक्तम् । निर्गुणोपासकानां तु स्वरूपत्वात् सफलं निर्गुणभजनप्रकारमाह द्वाभ्याम् । तुशब्देन पूर्वेभ्यः वैलक्षण्यं द्योतितम् । ये तु साधनचतुष्टयसंपन्नाः गुरुमुखात् अवगतवाक्यार्थाः परमहंसपरिव्राजकाः अव्यक्तं निर्गुणं ब्रह्म पर्युपासते परि आसमंताद्भागे उपतादात्म्यलक्षणेन आसते आसनमवस्थानं कुर्वंति ब्रह्मणः ऐक्यं अनुभवंति । ते भक्ताः मामेव प्राप्नुवंति इति द्वितीयेनान्वयः । कथंभूतं अव्यक्तम् । अक्षरं न क्षरति तत् अक्षरं अविनाशि । पुनः कथंभूतम् । अनिर्देश्यं निर्देष्टुं निर्वक्तुं योग्यं न भवति तत् अनिर्देश्यम् । पुनः कथंभूतम् । सर्वत्रगं सर्वत्र गच्छति व्याप्नोति तत् सर्वत्रगम् । पुनः कथंभूतम् । अचिंत्यं चिंतितुं अयोग्यं अचिंत्यम् । पुनः कथंभूतम् । कूटस्थं कूटे मायाप्रपंचे अधिष्टानत्वेन तिष्ठति तत् कूटस्थं निर्विकारम् 'निर्विकल्पं निरंजनमिति श्रुतेः' । पुनः कथंभूतम् । अचलं चलनरहितम् । पुनः कथंभूतम् । ध्रुवं शाश्वतम् ॥ ३ ॥ यच्छब्दानिर्दिष्टान् साधनपूर्वकं तत्फलं आह । संनियम्येति । कथंभूताः ये । सर्वत्र सर्वेष्विति सर्वत्र स्थावरजंगमादिषु समबुद्धयः समा ब्रह्मरूपा बुद्धिर्येषां ते समबुद्धयः । पुनः कथंभूताः । सर्वभूतहितेरताः सर्वाणि च तानि भूतानि च सर्वभूतानि

ते प्राप्नुवंति मामेव सर्वभूतहिते रताः ॥ ४ ॥
क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥५॥
ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः।

सर्वभूतानां हितं सर्वभूतहितं तस्मिन् जीवने ब्रह्मणि रताः यद्वा सर्वभूतानां हिते कल्याणे रताः। किं कृत्वा। इंद्रियग्रामं इंद्रियाणां कर्मज्ञानेंद्रियाणां ग्रामः समुदायः तं इंद्रियग्रामं संनियम्य सम्यक् नियम्य ये पर्युपासते ते मामेव प्राप्नुवंतीति भावः ॥ ४ ॥ ननु—निर्गुणोपासकाः जीवंत एव त्वद्रूपाः भवंति चेत् पूर्वोक्ता अपि निर्गुणमेव किमिति नोपासते तत्राह। क्लेश इति। तेषां सगुणोपास्यत्वाभिमानेन पराग्दृष्टीनां अधिकतरः अतिशयेन अधिकः इति अधिकतरः क्लेशः बहुतरं दुःखं भवति। कथंभूतानां तेषाम्। अव्यक्तासक्तचेतसां अव्यक्ते प्रत्यक्त्रब्रह्मणि आसक्तं अभिनिविष्टं चेतोऽन्तःकरणं येषां ते अव्यक्तासक्तचेतसः तेषाम्। सगुणनिर्गुणयोःदोलायितचेतस्त्वात् उभयप्राप्तिप्रतिबंधेन अतीव दुःखे निमज्जंतीत्यर्थः। उक्तमेव हेतुत्वेन विशदयति। हि यस्मात् कारणात् देहाभिमानं विना सगुणोपासनं न संभवति तस्माद्धेतोः देहवद्भिः देहाः विद्यंते येषां ते देहवंतः तैः देहवद्भिः देहाभिमानवद्भिः अव्यक्ता अव्यक्तविषया गतिः प्राप्तिः दुःखं यथा यस्यां क्रियायां स्यात्तथा अवाप्यते किम्?। न प्राप्यते इत्यर्थः ॥ ५ ॥ संप्रति सगुणोपासकानां वृत्तं फलं च शृणु इति अभिप्रायेणाह द्वाभ्याम्। मद्भक्तानां तु मत्प्रसादात् अनया श्रद्धया स्वत एव सिद्धिर्भवतीत्याह। येत्विति। ये सगुणोपासकाः मत्पराः संतः अहं सगुणत्वेन वर्त्तमानो

अनन्येनैव योगेन मां ध्यायंत उपासते ॥६॥
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।

विश्वरूपः परः पुरुषार्थो येषां ते मत्पराः सर्वाणि लौकिकवैदिकानि कर्माणि मयि सर्वात्मनि संन्यस्य समर्प्य न विद्यते अन्यः मद्व्यतिरेकेण देवतांतरभजनगंधः यस्मिन् सः अनन्यः तेन योगेन भक्तिलक्षणयोगेन मां सर्वांतरात्मानं ध्यायंतः संतः ध्यायंति ते ध्यायंतः ध्यायंति सर्वत्र मद्दृष्टिं भावयंति उपासते सेवंते ॥ ६ ॥
तेषाम् इति । हे पार्थ ! अहं तेषां उपासकानां मृत्युसंसारसागरात् यथा सागरे पतितस्य ध्रुवः मृत्युः तथा संसारसागरे पतितस्य स्वरूपच्युतिलक्षणस्य मृत्योः अवश्यंभावित्वात् संसार एव सागरः समुद्रः संसारसागरः मृत्युयुक्तश्चासौ संसारसागरश्च मृत्युसंसारसागरः तस्मात् समुद्धर्त्ता सम्यक् उत्तमप्रकारेण उत् ऊर्ध्वं धर्त्ता पृथक् कर्त्ता समुद्धर्त्ता भवामि । ननु—मृत्युसंसारसागरे पतितस्य त्रिविधतापवडवानलदग्धस्य नानासंकल्पमीनत्रोटितमानस्य जायासुताग्रमकरगृहीतगात्रस्य अहंकारमहाव्यालविषदूषितस्य वासनावरुणपाशपाशितस्य नानावेदनामनुभवतः कदा समुद्धर्त्ता भवसि इत्यपेक्षायामाह । हे पार्थ ! मृत्युसंसारसागरनिमग्नाः ये पुरुषाः दैवात् मदभिमुखाः जाताः तदैव तेषां समुद्धर्त्ता भवामि । चिरात् विलंबेन न भवामि । अतित्वरया । हेतुत्वेन तान् विशिनष्टि । कथंभूतानां तेषाम् । मयि सर्वात्मनि आवेशितचेतसां आवेशितं निक्षिप्तं चेतोऽतःकरणं यैस्ते आवेशितचेतसः तेषाम् । हे पार्थ! पतितानामपि अहं सांकेत्येन पुत्रमिषेण नामग्रहणवतां तत्काल एव समुद्धर्त्ता

भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥७॥
मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥८॥
अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय ॥ ९ ॥

भवामि । तत्र मय्यावेशितचेतसां उद्धरणे सर्वगतोहं कथं विलंबं सहामि? इति भावः ॥ ७ ॥ तस्मात् त्वमपि एवं भव इत्याह । मय्येवेति । हे पार्थ ! त्वं मय्येव सर्वात्मके एव मनः कामादिवृत्तिं संकल्पविकल्पात्मकं मनः आधत्स्व स्थिरीकुरु न तु अन्यत्र । सर्वैः उपायैः मामेव स्मरेत्यर्थः । नेत्यपरं बुद्धिं वासुदेवः सर्वमिति अध्यवसायात्मिकां बुद्धिं मयि सर्वात्मके निवेशय प्रवेशय । एवं सति किं स्यात्तत्राह । त्वं एवं कुर्वन् सन् मत्प्रसादेन लब्धज्ञानः सन् अत ऊर्ध्वं देहांते मयि सर्वकारणे निवसिष्यसि वासं करिष्यसि । जन्ममरणविनिर्मुक्तः सन् मां प्राप्स्यसि । मयि व्यावहारिकं सुखं त्यक्त्वा भगवति मनोबुद्धिसमर्पणेन भगवत्प्राप्तिः भविष्यति न वेति संशयो न कार्यः ॥८॥ मनोबुद्धिनिवेशने असमर्थश्चेत्तथाकरणे सुगमोपायं शृणु इति अभिप्रायेणाह । अथेति । हे धनंजय ! अथ यदि त्वं मयि सर्वात्मके स्थिरं निश्चलं चित्तं संकल्पाध्यवसायात्मकं अंतःकरणं समाधातुं सम्यक् आधातुं अवस्थापयितुं न शक्नोषि चेत् न समर्थो भवसि चेत् ततः तर्हि अभ्यासयोगेन अभ्यासस्य पुनः पुनः ममानुस्मरणलक्षणस्य योगः प्रत्ययावृत्तिः अभ्यासयोगः तेन मां सर्वात्मानं आप्तुं प्राप्तुं इच्छां कुरु । प्रयत्नं कुर्वित्यर्थः ॥ ९ ॥ अभ्यासे-

अभ्यासेप्यसमर्थोसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ॥१०॥
अथैतदप्यशक्तोसि कर्तुं मद्योगमाश्रितः ।

पीति। किं च त्वं अभ्यासेपि पुनः पुनः विषयेभ्यः मनोनिग्रहेण ममानुस्मरणलक्षणाभ्यासेपि असमर्थः अशक्तः असि चेत् तर्हि मत्कर्मपरमः मदर्थमेव मत्प्रीत्यर्थमेव कर्म वैदिकं लौकिकं कर्म मत्कर्म मत्कर्म एव परमं पुरुषार्थसाधनं यस्य सः मत्कर्मपरमः भव स्याः। ततः किमित्यत आह। त्वं मदर्थं मत्प्रीत्यर्थं कर्माणि एकादश्युपवासव्रतचर्या नामसंकीर्त्तनं इत्यादीनि कुर्वन् सन् करोतीति कुर्वन् सिद्धिं मत्प्राप्तिलक्षणाख्यं मोक्षं अवाप्स्यसि प्राप्स्यसि ॥१०॥ अत्राप्यशक्तौ अतिसुगमोपायमाह। अथैतदपीति। अथ पक्षांतरे त्वं एतदपि अभ्यासमपि कर्तुं निर्वर्तयितुं अशक्तः असमर्थः असि चेत् ततः तर्हि मद्योगं मम योगः मद्योगः तं मदेकशरणं आश्रितः सन् अधिष्ठितः सन् सर्वकर्मफलत्यागं सर्वाणि समस्तानि च तानि कर्माणि च सर्वकर्माणि सर्वकर्मणां आवश्यकाग्निहोत्रादिकर्मणां फलानि सर्वकर्मफलानि सर्वकर्मफलानां त्यागः मयि समर्पणं सर्वकर्मफलत्यागः तं कुरु। कथंभूतः त्वम्। यतात्मवान् यतः स्वार्थं फलाभिलाषं विहाय नियमितः आत्मा मनो यस्य सः यतात्मवान्। तथा भवेत्यर्थः। ननु-पूर्वस्मिन् श्लोके मदर्थमपि कर्माणि कुरु इति उक्ते सति अर्थात् फलत्यागः उक्तः। पुनरपि अस्मिन् श्लोके सर्वकर्मफलत्यागं कुरु इति पुनरुक्तौ किमभिप्रायेण पूर्वस्मात् सुगमोपायाभिधानं इति चेत् उच्यते। पूर्वस्मिन् श्लोके सर्वकर्मसु आदौ च मध्ये च अवसाने

सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥११॥
श्रेयो हि ज्ञानमभ्यासात् ज्ञानात् ध्यानं विशिष्यते।
ध्यानात्कर्मफलत्यागस्त्यागाच्छांतिरनंतरम् ॥१२॥
अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च।

च मदर्थत्वेन अनुसंधानं उक्तम्। इह तु सर्वकर्मावसाने कृष्णार्पणबुद्ध्या फलत्यागः इति विवेकः॥ ११॥ तमेव सर्वकर्मफलत्यागं केनचित् साम्येन मोक्षोपयोगितया स्तौति। श्रेयोहीति। केवलं पांडित्याभिनिवेशेन अभ्यासात् शास्त्राध्ययनाभ्यासात् ज्ञानं आत्मनिष्ठं ज्ञानं श्रेयः प्रशस्यतरम्। अस्ति इति शेषः। पराकाष्ठा उक्ता। ज्ञानाधिकाराभावे ज्ञानात् युक्तिसहितोपदेशपूर्वकज्ञानात् ध्यानं दृश्यत्यागपूर्वकं अहं ब्रह्मास्मीति प्रवाहीकरणं विशिष्यते। वर्णाश्रमविहितानुष्ठानादेः श्रेष्ठं तदशक्तावपि ध्यानात् उक्तलक्षणात् कर्मफलत्यागः कर्मणां नित्यनैमित्तिकानां फलानि फलाभिलाषाः कर्मफलानां त्यागः मदर्पणफलत्यागः श्रेयान् श्रेष्ठः। त्यागात् ईश्वरकर्मफलसमर्पणात् अनंतरं ईश्वरप्रसादेन ज्ञानलाभानंतरं शीघ्रमेव शांतिः सर्वानर्थनिवृत्तिलक्षणा स्वरूपास्थितिः भवति॥ १२॥ एवंभूतस्य भक्तस्य क्षिप्रमेव परमेश्वरप्रसादहेतून् धर्मान् आह। अद्वेष्टा इति अष्टभिः। यः एतादृशः मद्भक्तः मम भक्तः मद्भक्तः सर्वभावेन भजन् सन् भजतीति भजन् वर्त्तते सः भक्तः मे मम परमात्मनः प्रियः प्रियत्वेन प्रसिद्धः। अस्ति इति शेषः। सः ममात्मा एवेत्यर्थः। इति द्वितीयेनान्वयः। कथंभूतः यः। सर्वभूतानां सर्वाणि च तानि भूतानि च सर्वभूतानि तेषां अद्वेष्टा द्वेष्टीति द्वेष्टा न द्वेष्टा अद्वेष्टा। पुनः कथंभूतः। सर्वभूतानां मैत्रः उत्तमेषु द्वेषशून्यः समेषु मित्रतया वर्तत

निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥१३॥
संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥१४॥
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।

इति मैत्रः । पुनः कथंभूतः । करुणः कृपायुक्तः । परदुःखासहिष्णुरित्यर्थः । पुनः कथंभूतः । निर्ममः ममताशून्यः । निर्ममत्वे हेतुः । निरहंकारः निर्गतः अहंकारो यस्य सः निरहंकारः अहंकारशून्यः । पुनः कथंभूतः । समदुःखसुखः दुःखं च सुखं च दुःखसुखे समे ब्रह्मरूपे दुःखसुखे यस्य सः समदुःखसुखः । पुनः कथंभूतः । क्षमी क्षमा विद्यते यस्य सः क्षमी क्षमावान् ॥१३॥ संतुष्ट इति । किंच पुनः कथंभूतः । सततं लाभे च अलाभे संतुष्टः प्रसन्नचित्तः न तु जायापुत्रादिभिः । अत एव योगी योगो तत्त्वंपदलक्ष्यैक्यलक्षणो योगः यस्यास्तीति योगी । तत्र हेतुः । यतात्मा यतः आत्मनिष्ठितः आत्मा अहंभावो येन सः यतात्मा । ननु—तमःस्वभावादेव पराङ्मुखत्वात् केनचिन्निमित्तेन पुनः आत्मनिष्ठांतः सन् प्रच्युतिः स्यादेव तत्राह । दृढव्रतः दृढं बद्धमूलनिश्चयं व्रतं यस्य सः मद्विषयनिश्चयः अत एव मयि परमानंदे अर्पितमनोबुद्धिः मनश्च बुद्धिश्च मनोबुद्धी अर्पिते समर्पिते मनोबुद्धी येन सः परमानंदलाभेन निवृत्ते मनोबुद्धी यस्य सः एतादृशः मद्भक्तः मे प्रियः अस्ति ॥ १४ ॥ यस्मादिति । किंच यथा जनः सर्वभावेन भजनीयात् नृपदेवात् रुद्रस्वभावतया उद्विजते भयं प्राप्नोति तथा यस्मात् यतेः लोकः प्राकृतोऽयं जनसमूहः नोद्विजते उद्वेगं न प्राप्नोति भयशंकया संक्षोभं न याति । तथा यः यतिलोकात् प्राकृतजनात् नोद्विजते भयशंकया

हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः॥१५॥
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः।
सर्वारंभपरित्यागी यो मद्भक्तः स मे प्रियः॥१६॥
यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति।

संक्षोभं न प्राप्नोति। मायाकल्पितात् लोकात् नोद्वेगं प्राप्नोतीत्यर्थः। किंच यः भिक्षुः हर्षामर्षभयोद्वेगैः हर्षः स्वाभीष्टप्राप्तिजन्यः च संतोषः अमर्षः स्वाभीष्टप्राप्तिनाशे क्रोधावेशः च भयं अविद्याकल्पिते स्वोत्कृष्टमर्यादाभंगात् त्रासः च उद्वेगः भयादिनिमित्तश्चित्तक्षोभः हर्षामर्षभयोद्वेगाः तैः मुक्तः अस्ति सः भक्तः मे मम प्रियः अस्ति॥ १५॥ अनपेक्ष इति। किं च। कथंभूतः यः। अनपेक्षः न विद्यते कल्पितस्य अपेक्षा यस्य सः अनपेक्षः यदृच्छोपस्थिते अर्थेपि निस्पृहः। पुनः कथंभूतः। शुचिः बाह्याभ्यंतरशौचसंपन्नः। पुनः कथंभूतः। दक्षः स्वात्मानुसंधाननिपुणः। अनलस इत्यर्थः। पुनः कथंभूतः। उदासीनः देहद्वयोपेक्षकः। पक्षपातरहित इत्यर्थः। पुनः कथंभूतः। गतव्यथः गता व्यथा दुःखं यस्य सः गतव्यथः त्रिविधतापशून्यः यः प्रसिद्धः मद्भक्तः मां अंतर्यामिणं भजतीति मद्भक्तः सर्वारंभपरित्यागी सन् सर्वे च ते आरंभाश्च सर्वारंभाः सर्वारंभान् लौकिकवैदिकारंभोपक्रमान् परित्यक्तुं शीलं स्वभावः यस्य सः सर्वारंभपरित्यागी मां भजते सः भक्तः मे मम प्रियः अस्ति॥ १६॥ यो न हृष्यतीति। किं च यः प्रसिद्धः यतिः प्रियं अनुकूलविषयं प्राप्य न हृष्यति ममेदं प्राप्तं इति संतोषं न प्राप्नोति। किं च यः अप्रतिकूलं प्राप्य न द्वेष्टि अनिष्टबुद्ध्या द्वेषं न करोति। किं च यः मद्भक्तः इष्टार्थे नष्टे सति न शोचति शोकं न कुरुते। किं च यः

शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः ॥१७॥
समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः संगविवर्जितः ॥१८॥
तुल्यनिंदास्तुतिर्मौनी संतुष्टो येन केन चित् ।

भक्तः अप्राप्तं वस्तु न कांक्षति न इच्छति । आत्मातिरेकेण सर्वस्याभावात् तत्प्राप्त्यादिना हर्षादेरभाव इत्यर्थः । किं च यः भक्तः शुभाशुभपरित्यागी सन् शुभं च अशुभं च शुभाशुभे पुण्यपापे ते परित्यक्तुं शीलं यस्य सः शुभाशुभपरित्यागी अस्ति । कल्पितत्वात् । शुभाशुभसंधानशून्य इत्यर्थः । सः भक्तः मे मम प्रियः भवति । कथंभूतः सः । भक्तिमान् भक्तिर्विद्यते यस्य सः भक्तिमान् मद्भक्तियुक्तः ॥१७॥ सम इति । किं च यथा सुवर्णानुसंधाता सुवर्णगोव्याघ्रोपाधौ समदृष्टिः तथा 'सर्वं खल्विदं ब्रह्म' इति श्रुतेः । सर्वात्मदर्शी यतिः शत्रौ प्रतिकूले चेत्यपरं मित्रे अनुकूले समः समं ब्रह्मदर्शनं यस्य सः समः एकरूपः अस्ति । तथा मानापमानयोः मानः पूजा च अपमानः तिरस्कारः मानापमानौ तयोः मानापमानयोः समः हर्षविषादशून्यः अस्ति । शीतोष्णसुखदुःखेषु शीतं च उष्णं च सुखं च दुःखं च शीतोष्णसुखदुःखानि तेषु शीतोष्णसुखदुःखेषु समः कल्पितत्वेन आगमापायदर्शनात् सर्वेष्वपि हर्षविषादरहितः । अत एव द्वितीयाभावात् संगवर्जितः अस्ति ॥ १८ ॥ तुल्यनिंदेति । किं च एतादृशः यः नरः अद्वेष्टादिलक्षणैः मयि सर्वात्मनि भक्तिमान् भक्तिर्विद्यते यस्य सः भक्तिमान् अस्ति सः नरः मे मम प्रियः आत्मवित्प्रियः भवति । कथंभूतः नरः । तुल्यनिंदास्तुतिः निंदा दूषणोक्तिः च स्तुतिः स्तवनोक्तिः निंदास्तुती तुल्ये समे निंदास्तुती यस्य सः तुल्यनिंदास्तुतिः

अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः॥ १९॥

ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते।

स्तुतिनिंदावचनं स्वध्येयप्रणवात्मकं मत्वा निंदास्तुतिभ्यां न विक्रियते। पुनः कथंभूतः नरः। मौनी मननशीलः मुनिः मुनेर्भावः मौनं मौनं विद्यते यस्य सः मौनी अथवा आत्मव्यतिरेकेण किमपि वाक् न वदतीति मौनं तत् विद्यते यस्य सः मौनी अनात्मवचनशून्यः। पुनः कथंभूतः नरः। येन केनचित् दैवलब्धेन संतुष्टः अलंप्रत्ययः। यथा नानादिगंतसरित्प्रवाहोदकानां गमनागमनैः समुद्रः सदा संतुष्ट एव तथा अयमपीत्यर्थः। पुनः कथंभूतः। अनिकेतः न विद्यते निकेतः आधारः यस्य सः अनिकेतः नियतवासशून्यः नरः। स्वयमेव सर्वाधारो भूत्वा आधेयो न भवतीति तात्पर्यार्थः। पुनः कथंभूतः नरः। स्थिरमतिः स्थिरा ब्रह्मनिष्ठा मतिः बुद्धिर्यस्य सः स्थिरमतिः शरीरस्य अस्थिरतायां मतेः अंतःकरणस्य एकरूपत्वात् स्थिरबुद्धिः॥ १९॥ प्रियत्वेन उक्तान् भक्तान् अध्यायावसानसमये अतिप्रियत्वेन विशिनष्टि। ये त्विति। ये भक्ताः तुः अवधारणे। यथोक्तं मयोक्तप्रकारं इदं अव्यवधानेन अद्वेष्टेत्यादिनोक्तं धर्म्यामृतं धर्मादनपेतं धर्म्यं धर्म्यमेव अमृतं धर्म्यामृतं मोक्षसाधनं पर्युपासते। केचित् पठंति केचित् अनुतिष्ठंति सर्वत्र भजंति ते भक्ताः मे मम अतीव अत्यंतमेव प्रियाः। आत्मसाक्षात्कारवत् प्रियतराः भवंतीत्यर्थः। कथंभूताः भक्ताः। श्रद्दधानाः श्रद्धां भक्तिं धारयंति ते श्रद्दधानाः मदुक्तौ प्रेम्णा विश्वासवंतः। पुनः कथंभूताः भक्ताः। मत्परमाः अहमेव परमः पुरुषार्थो येषां ते मत्परमाः मत्परमत्वादेव मद्वाक्ये श्रद्दधाना

श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥२०॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु० भक्तियोगो नाम द्वादशोऽध्यायः ॥ १२॥

इत्यर्थः ॥ २० ॥ ॥ सख्युः प्रश्नानुसारेण तत्प्रत्युक्तिविभागशः । निर्णीतां सफलां भक्तिं व्यक्तं व्यक्तात्मवेदिनाम् ॥ १ ॥ दुःखमव्यक्तवर्त्मैतत् बहुविघ्नमतो बुधः । सुखं कृष्णपदांभोजभक्तिसत्पथमाभजेत् ॥ २ ॥ इति श्रीबालबोधिन्यां श्रीमद्भगवद्गीताटीकायां द्वादशोऽध्यायः ॥ १२ ॥ ॥

---



श्रीभगवानुवाच।

इदं शरीरं कौंतेय क्षेत्रमित्यभिधीयते।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ १ ॥
क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत।

श्रीः। क्षेत्रक्षेत्रज्ञसंज्ञकं प्रकृतिद्वयं विभागशः दर्शयितुं त्रयोदशाध्यायारंभः। तत्र तावत् क्षेत्रक्षेत्रज्ञयोः स्वरूपं सामान्यतो दर्शयति। इदं शरीरमिति। हे कौंतेय! हे कुंतीतनय! विद्वद्भिः पंडितैः इति शेषः। इदं भोगायतनं प्रत्यक्षत्वेन दृश्यमानं शरीरं शीर्यते क्षीयते तत् शरीरं प्रतिक्षणं विशीर्णस्वभावं क्षेत्रं धान्यनिष्पत्तिस्थानवत् धर्माधर्मोत्पत्तिहेतुभूतस्थानं इति एवं प्रकारेण अभिधीयते उच्यते। संसारस्य प्ररोहभूमित्वात्। इति क्षेत्रस्वरूपम्। यः एतत् क्षेत्रं वेत्ति जानाति आत्मत्वेन अभिमन्यते अहं ममेति मन्यते सः क्षेत्रज्ञः अंतःकरणप्रतिफलितचैतन्यप्रमाता अस्ति। तद्विदः तौ क्षेत्रक्षेत्रज्ञौ विदंति ते तद्विदः तं क्षेत्रज्ञं प्राहुः कथयंति ॥ १ ॥ क्षेत्रज्ञमिति। यथा जलगतसूर्यप्रतिबिंबेन जलं प्रकाशते तत् प्रतिबिंबं स्वतंत्रं न भवति किं तु व्योमगतमुख्यसूर्यपरतंत्रं तत् जलोपाधियोगात् प्रकाशकर्तृत्वेन प्रतीयते मुख्यः सूर्यः प्रकाशस्वरूपलक्षण एव जलाभासेन लक्ष्यते तथा बुद्धिप्रतिफलितचैतन्यप्रमाता क्षेत्रं प्रकाशयन् क्षेत्रज्ञः इति उच्यते। स तु क्षेत्रवत् स्वतंत्रः न भवति किं तु मत्स्वरूपज्ञानप्राप्तः क्षेत्रज्ञेन अहं मुख्यः ज्ञानस्वरूपः लक्ष्यते। हे भारत! हे भरतान्वय! त्वं सर्वक्षेत्रेषु सर्वाणि च तानि क्षेत्राणि च सर्वक्षेत्राणि तेषु सर्वशरीरेषु क्षेत्रज्ञं क्षेत्राणि सर्वशरीराणि जानातीति क्षेत्रज्ञः तं

क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तत् ज्ञानं मतं मम ॥ २ ॥
तत् क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ३ ॥
ऋषिभिर्बहुधा गीतं छंदोभिर्विविधैः पृथक् ।

क्षेत्रज्ञं मां परमात्मानं विद्धि जानीहि । यथा घटाकाशे जलाकाशरूपेण महाकाशमेव वर्तमानं तथा सर्वशरीरेषु प्रत्यगाभासरूपेण मामेव क्षेत्रज्ञं जानीहि । उक्तमेव अनवद्यं निर्दोषं स्वाभिप्रायेण द्रढयति । क्षेत्रक्षेत्रज्ञयोः क्षेत्रं जडं विकारि च क्षेत्रज्ञः सत्यज्ञानानंतरूपः परमात्मा सदैकरूपः क्षेत्रक्षेत्रज्ञौ तयोः क्षेत्रक्षेत्रज्ञयोः यत् प्रसिद्धं ज्ञानं विवेकः अस्ति तत् प्रसिद्धं ज्ञानं मम मतं मान्यम् । अन्यत् वृथा पांडित्यं बंधहेतुत्वादित्यर्थः ॥ २ ॥ क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यदुक्तं तदेव ज्ञानं सामान्यतः विभागेन दर्शयति । तत्क्षेत्रमिति । यत् इदं शरीरं मया उक्तं तत् क्षेत्रं विद्धि । यत् स्वरूपतः जडं दृश्यादिस्वभावं यादृक् यादृशं इच्छादिधर्मकं यद्विकारि यैः विकारैः इंद्रियादिविकारैः युक्तं यद्विकारि यतः यस्मात् प्रकृतिपुरुषयोगात् भवति यत् यैः स्थावरजंगमादिभेदैः भिन्नं अस्ति । यच्छब्दः प्रत्येकविशेषणसंबंधार्थः । स च क्षेत्रज्ञः यः स्वरूपतः यत्प्रभावः अचिंत्यैश्वर्ययोगेन यैः प्रभावैः संपन्नः अस्ति तत् सर्वं समासेन संक्षेपतः मे मत्तः त्वं शृणु । चकारपंचकं उभयविशेषणसमुच्चयार्थम् ॥३॥ तत्र क्षेत्रस्वरूपं वदन् 'समासेन शृणु' इति यदुक्तं तत्तावत् कैः विस्तरेण उक्तं तस्य अयं विस्तारः इत्यपेक्षायामाह । ऋषिभिरिति । ऋषिभिः वसिष्ठादिऋषिभिः योगशास्त्रेषु तत्साधनांगत्वेन बहुधा बहुप्रकारेण विस्तरेण गीतं उक्तम् । तथा विविधैः कर्मोपास-

ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥
महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च।
इंद्रियाणि दशैकं च पंच चेंद्रियगोचराः ॥ ५ ॥
इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।

नाज्ञानकांडप्रकारैः नित्यनैमित्तिककाम्यविषयैः छंदोभिः वेदैः पृथक् इष्टानिष्टमिश्रकर्मफलाधिकारविभागेन गीतं कथितम्। किं च ब्रह्मसूत्रपदैः ब्रह्म सूत्र्यते सूच्यते एभिरिति सूत्राणि तत्रस्थलक्षणपराणि उपनिषद्वाक्यानि ब्रह्म पद्यते ज्ञायते साक्षात्क्रियते एभिरिति पदानि 'सत्यं ज्ञानं अनंतं' इत्यादीनि वाक्यानि सूत्रपदानि ब्रह्मणः सूत्रपदानि ब्रह्मसूत्रपदानि तैः बहुधा उत्पत्त्याद्यभिधानेन गीतम्। किं च हेतुमद्भिः शरीरोत्पत्तिस्थितिव्यवहारवाक्यकारणैः विनिश्चितैः एकवाक्यतया असंदिग्धार्थप्रतिपादकैः गीतं कथितम् ॥ ४ ॥ इदानीं प्रकृतं सविशेषं शरीरस्वरूपं क्षेत्रस्वरूपं आह द्वाभ्याम्। महाभूतानीति। महाभूतानि पृथिव्यप्तेजोवाय्वाकाशानि अहंकारः तत्कार्यभूतः द्रव्यज्ञानक्रियाशक्तिमान् बुद्धिः निश्चयात्मिका वृत्तिः चेत्यपरं अव्यक्तं तत्कारणभूतं अविद्याख्यं अज्ञानं दश इंद्रियाणि पंच ज्ञानेंद्रियाणि पंच कर्मेंद्रियाणि एवं च दशेंद्रियाणि एकं मनः साधारणेंद्रियं चेत्यपरं पंच इंद्रियगोचराः इंद्रियाणां गोचराः तत्तद्द्वारा आविर्भूताः शब्दादयः शब्दस्पर्शरूपरसगंधाः ॥५॥ तदेवं प्रकारेण चतुर्विंशतितत्त्वानि उक्तानि। इच्छेति। इच्छा प्राप्तस्य उत्कंठा द्वेषः प्रतिकूले द्वेषः सुखं अनुकूलं दुःखं तद्विपरीतम्। इच्छादीन्यपि साक्षिदृश्यत्वात् क्षेत्रांतःपातीनि। संघातः उक्तेषु सर्वेषु तादात्म्याभिमानः चेतना ज्ञानात्मिका मनोवृत्तिः विषयस्फूर्त्तिः सापि साक्षिदृश्यत्वात् क्षेत्रांतःपातिनी धृतिः परस्पर-

एतत् क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥
अमानित्वमदंभित्वमहिंसा क्षांतिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७ ॥

विरुद्धेषु महाभूतादिषु तत्तद्विरोधप्रतिबंधेन अवष्टंभकसामर्थ्यं एतत् 'महाभूतानीत्यादि धृत्यंतं' क्षेत्रं सविकारं विकारेण इंद्रियादिविकारेण सहितं युक्तं सविकारं मया तुभ्यं समासेन संक्षेपेण उदाहृतं कथितम् । केषांचिन्मते तत्त्वाधिक्यगणनाभिप्रायेण अयं संक्षेपः ज्ञातव्यः ॥ ६ ॥ क्षेत्रक्षेत्रज्ञयोः मध्ये क्षेत्रस्वरूपं संक्षेपेण उक्तम् । क्षेत्रज्ञस्य मुख्यं स्वरूपं अहमेव तत्स्वरूपं ज्ञानैकगम्यं इति मत्वा उपायत्वेन ज्ञान-साधनानि आह । अमानित्वमिति । अमानित्वं मानः अविवेकद्वा-रेण अहंभावः यस्यास्तीति मानी मानिनः भावः मानित्वं न मानित्वं अमानित्वं देहाद्यभिमानादिराहित्यं अदंभित्वं दंभः देहोद्देशेन धर्माति-शयप्रदर्शकः यस्यास्तीति दंभी दंभिनः भावः दंभित्वं न दंभित्वं अदं-भित्वं ज्ञानसाधनत्वेन ज्ञानं अहिंसा न हिंसा अहिंसा मनोवाक्कायजन्या-भिः संकल्पवचनक्रियाभिः परपीडाराहित्यं क्षांतिः आकृष्टे ताडितेपि क्षमा आर्जवं सर्वत्र कौटिल्यराहित्येन ऋजुता आचार्योपासनं आचार्यस्य अंतर्यामिणः गुरोः उपासनं सेवा आचार्योपासनं गुरोः देहे वर्तमाने सति शब्दस्पर्शरूपरसगंधादिभोगपर्यवसानाधिष्ठानानुचिंतनम् । एवं जीवता म्रियमाणेनापि अनुसंधानं सेवनं शौचं बाह्याभ्यंतरभेदेन द्विविधं मृज्ज-लाभ्यां बाह्यं शौचं अंतः भावशुद्धिःअंतःशौचम् । शौचस्य ज्ञानाभिसाध-नमिति भावः। स्थैर्यं स्थूलदेहचेष्टाराहित्यम् । तत्र हेतुत्वं न । ज्ञानसाध-नांतरमाह । आत्मविनिग्रहः आत्मनः मनसः विनिग्रहः विविधसंकल्प-रूपपरित्यागेन अत्यंतग्रहणं आत्मविनिग्रहः मनोनिरोधः । स्थूलदेह-

इंद्रियार्थेषु वैराग्यमनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥

क्रियाणां मनोधीनत्वात् । मनसि निरुद्धे सति तत्स्थैर्यं इति भावः । अस्मिन् श्लोके नव ज्ञानसाधनानि उक्तानि ॥ ७ ॥ इंद्रियार्थेष्विति । किंच इंद्रियार्थेषु इंद्रियाणां अर्थाः शब्दादिविषयाः इंद्रियार्थाः तेषु वैराग्यं तन्मिथ्यादर्शनेन वैतृष्ण्यं अनहंकारः अहंकारः कर्ता भोक्तास्मीति विकारित्वं न भवतीति अनहंकारः । एव च इति निपातौ पादपूर्णार्थौ अथवा निश्चयसमुच्चयार्थौ । जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनं जन्म च मृत्युश्च जरा च व्याधिश्च जन्ममृत्युजराव्याधयः जन्ममृत्युजराव्याधीनां दुःखं जन्ममृत्युजराव्याधिदुःखं तेन दोषानुदर्शनम् । जन्मनः दुःखम्—जननीजठरे मलमूत्रकुस्थलजनकजननीशुक्रशोणितोद्भवस्य जरायुणा पाशितसर्वगात्रस्य उदरस्थसूचीमुखजंतुसंविद्धातिकोमलत्वचः नवदशमासावधि गर्भाशयस्य दोहदापेक्षिताशितपीततीव्ररससंतप्तचर्मणः प्रसूतिवातनिःसारितातिसूक्ष्मयोनियंत्रनिष्पीडितस्थूलदेहस्य अधोमुखभुपतितस्य मलमूत्रदिग्धसर्वांगस्य यूकामत्कुणादिदूषितशय्याशयानस्य उदरवेदनायां दत्तस्तनस्य क्षुद्बोधे दत्तनिंबादिरसस्येति जन्मनः दुःखदोषदर्शनम् । मृत्युदोषः—अंतकाले यमदूतैः भृशं पाशबद्धस्य जायापुत्राद्याकृष्टमनसः तद्वृत्तिव्याकुलितस्य स्थूलदेहादाकृष्य भृशं कशाताडितस्य नानायातनानुभवतः इति मृत्योः दोषदर्शनम् । जरायाः-सर्वत्र अप्रियदर्शनायाः वलीपलितदूतिकायाः मूलव्याधिगजारूढायाः वातकंपिशिरःपताकायाः डिंडीरवत् उपवनवत् शिरोरुहमल्लिकायाः कर्णमूलयोः शुभ्रालकचमरयुग्मलंबितायाः श्लेष्मबिंदुमुक्ताशोभितनासाग्रभागायाः विगतदंतदिग्गतायाः सतता-

असक्तिरनभिष्वंगः पुत्रदारगृहादिषु।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु॥ ९ ॥
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी।

रोहणावरोहणाधरहनुनर्त्तकीनृत्यतोषितायाः कफरुद्धकंठघोरविटंकितवीणायाः ऊर्ध्वश्वासतालमृदंगध्वनितोषितायाः ध्वस्तजाठरदीपिकायाः मुखलालापूरितोरस्कायाः मलमूत्ररंजितपटायाः अधोवातभेरीघोषितदिगंतायाः नानाधिपरिवारितपरिचारिकायाः इति जरायाः दुःखदोषदर्शनम्। व्याधिदुःखदोषाः—नानोदरमस्तकनयनकटिपाणिपादवेदनाज्वरादिव्याधीनां दुःखदोषदर्शनम्। तथा त्रिविधतापदुःखदर्शनम्। जन्मादिदुःखदोषदर्शनेन देहे विरागोत्पत्तिद्वारा आत्मजिज्ञासाभिमुखस्य जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनं ज्ञानसाधनत्वात् ज्ञानम्। अस्मिन् श्लोके त्रीणि ज्ञानसाधनानि॥ ८॥ असक्तिरिति। किंच पुत्रदारगृहादिषु पुत्राश्च दाराः स्त्रियश्च गृहाश्च पुत्रदारगृहाः पुत्रदारगृहाः आदयो येषां धनादीनां ते पुत्रदारगृहादयः तेषु असक्तिः न सक्तिः असक्तिः प्रीतित्यागः एकं ज्ञानसाधनम्। तथा पुत्रादिषु अनभिष्वंगः अभिष्वंगो नाम तेषां पुत्रादीनां सुखे जाते सति अहमेव सुखी इति अध्यासातिरेकः न भवतीति अनभिष्वंगः द्वितीयम्। इष्टानिष्टोपपत्तिषु सत्सु इष्टं अनुकूलं च अनिष्टं प्रतिकूलं इष्टानिष्टे इष्टानिष्टयोः उपपत्तयः प्राप्तयः इष्टानिष्टोपपत्तयः तासु इष्टानिष्टोपपत्तिषु नित्यं सर्वदा समचित्तत्वं समे ब्रह्मणि चित्तं अंतःकरणं यस्य सः समचित्तः समचित्तस्य भावः समचित्तत्वं तृतीयम्। अस्मिन् श्लोके त्रिणि ज्ञानसाधनानि॥९॥ मयीति। मयि परमेश्वरे ब्रह्मणि अनन्ययोगेन न अन्यः अनन्यः अनन्यश्चासौ योगश्च अनन्ययोगः तेन सर्वात्म-

विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतो ऽन्यथा ॥११॥
ज्ञेयं यत्तत्प्रवक्ष्यामि यत् ज्ञात्वामृतमश्नुते ।

भावेन अव्यभिचारिणी व्यभिचारिणी न भवति सा अव्यभिचारिणी दृश्यानुविद्धा भक्तिः भजनम् । विविक्तदेशसेवित्वं विविक्तः एकांतश्चासौ देशश्च विविक्तदेशः विविक्तदेशं सेवितुं शीलं यस्य सः विविक्तदेशसेवी विविक्तदेशसेविनः भावः विविक्त देशसेवित्वम् । जनसंसदि जनानां प्राकृतजनानां संसद् सभा जनसंसद् तस्यां जनसंसदि प्राकृतजनसभायां अरतिः अप्रीतिः । अत्रापि त्रीणि ज्ञानसाधनानि ॥१०॥ अध्यात्ममिति। किं च अध्यात्मज्ञाननित्यत्वं आत्मानं अधिकृत्य वर्त्तमानं ज्ञानं अध्यात्मज्ञानं अध्यात्मज्ञाने नित्यत्वं अध्यात्मज्ञाननित्यत्वं आत्मविचारे चित्तस्य संततो भावः पदार्थशोधने नैरंतर्यम् । तत्त्वज्ञानार्थदर्शनं तत्त्वानां ज्ञानं तत्त्वज्ञानं तत्त्वज्ञानस्य अर्थः प्रयोजनं वाच्यार्थपरित्यागेन अखंडैकरसत्वेन अवस्थानं तत्त्वज्ञानार्थः तत्त्वज्ञानार्थस्य दर्शनं अनुभवापादनं तत्त्वज्ञानार्थदर्शनं तत्तु संप्रदायप्रवर्त्तकैः पूर्वाचार्यैरेव प्रदर्शितम् । मोक्षस्य सर्वोत्कृष्टतालोचनमित्यर्थः । एतत् अमानित्वमदंभित्वमित्यादि तत्त्वज्ञानार्थदर्शनमित्यंतं विंशतिसंख्याकं ज्ञानसाधनत्वात् ज्ञानं इति मया सर्वज्ञेन प्रोक्तं कथितम् । अतः उक्तात् अमानित्वादितत्त्वज्ञानार्थदर्शनसमुदायात् यत् अन्यथा विपरीतं अज्ञानमपि मया प्रोक्तं इति अनुषंगेन ज्ञेयम् ॥ ११ ॥ एभिः साधनैः यत् ज्ञेयं तदाह । ज्ञेयमिति । यत् प्रसिद्धं ज्ञेयं ज्ञातुं योग्यं ज्ञेयं ज्ञानविषयं अस्ति तत् ज्ञेयं अहं प्रवक्ष्यामि प्रकर्षेण वक्ष्यामि कथयिष्यामि इति प्रतिज्ञाय तत् ज्ञाने किं फलं

अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १२ ॥
सर्वतःपाणिपादं तत्सर्वतोक्षिशिरोमुखम् ।
सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३ ॥
सर्वेंद्रियगुणाभासं सर्वेंद्रियविवर्जितम् ।

इत्यपेक्षायामाह । पुमान् यत् ज्ञेयं ज्ञात्वा स्वयमेव अनुभूय अमृतं मरणरहितं ब्रह्म मोक्षं अश्नुते प्राप्नोति । पूर्वसिद्धः तद्रूप एव भवतीत्यर्थः । किं तत् ज्ञेयम् । अनादिमत् आदि विद्यते यस्य तत् आदिमत् आदिमत् न भवति तत् अनादिमत् परं निरतिशयं ब्रह्म यद्वा अनादि न विद्यते आदिः कारणं वा उत्पत्तिः यस्य तत् अनादि अकार्यकारणं मत्परं अहमेव उत्कृष्टं यस्य तत् मत्परं ब्रह्म बृहत्वात् व्यापकं असत्यमपि सत्यपरतया वर्धयतीति यावत् तत् ब्रह्म सत् स्थूलं न तत् ब्रह्म असत् सूक्ष्मं नोच्यते तत् कार्यकारणविलक्षणं उच्यते ॥ १२ ॥ सर्वत इति । कीदृशं तत् ज्ञेयं तदाह । सर्वतःपाणिपादं पाणयः हस्ताः च पादाः चरणाः पाणिपादाः सर्वतः ब्रह्मांडगोले ब्रह्मादिपिपीलिकानां पाणिपादाः यस्य तत् सर्वतःपाणिपादम् । सर्वतोक्षिशिरोमुखं अक्षीणि नेत्राणि च शिरांसि मस्तकानि च मुखानि आननानि अक्षिशिरोमुखानि सर्वतः ब्रह्मांडगोले ब्रह्मादिपिपीलिकानां अक्षिशिरोमुखानि यस्य तत् सर्वतोक्षिशिरोमुखं सर्वतः श्रुतिमत् सर्वतः ब्रह्मांडगोले ब्रह्मादिपिपीलिकानां श्रुतयः श्रोत्राणि विद्यंते यस्य तत् सर्वतःश्रुतिमत् । ननु— अनेकस्य अनेकप्राणिसंबंधिनः पाणिपादादयः कथं वक्तुं शक्याः इत्याशंक्य सुवर्णखचितानेकमूर्त्तीनां अवयवाः सुवर्णस्यैव इति अभिप्रायेणाह । सर्वं भूतभौतिकं मृदादिवत् तन्मयविकारं आवृत्य अंतर्बहिर्व्याप्य तिष्ठति ॥ १३ ॥ किंच सर्वेंद्रियगुणाभासं सर्वाणि

असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४ ॥
बहिरंतश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चांतिके च तत् ॥ १५ ॥

च तानि इंद्रियाणि ज्ञानकर्मेंद्रियाणि सर्वेंद्रियाणि सर्वेंद्रियाणां गुणाः शब्दादयः सर्वेंद्रियगुणेषु भासत इति सर्वेंद्रियगुणाभासं अथवा सर्वेंद्रियगुणानां आभासः कांतयः यस्मात् तत् अथवा सर्वेंद्रियगुणान् भासयति तत् । सर्वेंद्रियविवर्जितं सर्वाणि च तानि इंद्रियाणि च सर्वेंद्रियाणि सर्वेंद्रियैः ज्ञानकर्मेंद्रियैः विवर्जितं रहितं सर्वेंद्रियविवर्जितम् । 'अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इति श्रुतेः । असक्तं संगेषु सक्तं न भवति तत् असक्तं संगशून्यम् । तथापि एवं सत्यपि सर्वभृत् सर्वं भूतभौतिकं बिभर्ति तत् सर्वभृत् रज्जुसर्पवत् सर्वापादनत्वेन सर्वाधारमिति भावः । निर्गुणं सत्त्वादिगुणविलक्षणं गुणभोक्तृ गुणानां सत्त्वादीनां भोक्तृ पालकं गुणभोक्तृ ॥ १४ ॥ बहिरंतरिति । किंच कीदृशं तत् ज्ञेयं भूतानां चराचराणां अंतः चेत्यपरं बहिः सत्तास्फुरणरूपेण वर्त्तमानं भूतसृष्टेः पूर्वं कारणरूपेण भूतेषु अवस्थानं अंतःशब्देन गृह्यते । सृष्टेः ऊर्ध्वं कार्यरूपेणैव भूतेषु अवस्थानं बहिःशब्देन गृह्यते । एवं च सति ज्ञेयव्यतिरिक्तं किमपि नास्तीति ध्वनितम् । किंच अचरं चरं न भवति तत् अचरं स्थावरजातं चरं चरति तत् चरं जंगमजातं तदपि सर्वं ज्ञेयम् । सूक्ष्मत्वात् सूक्ष्मस्य भावः सूक्ष्मत्वं तस्मात् सर्वांतरत्वात् कारणत्वात् व्यापकत्वात् तत् ज्ञेयम् । अविज्ञेयं विशेषेण ज्ञेयं न भवति तत् अविज्ञेयम् । तस्मात् बहिर्दृष्टीनां ज्ञातुमयोग्यमित्यर्थः । देहात्मबुद्धीनां दूरस्थं दूरे तिष्ठति तत् दूरस्थं योजनलक्षां-

अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तत् ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १७ ॥

दूरितामिव स्थितं अंतर्दृष्टीनां तत् ज्ञेयं अंतिके समीपे स्वरूपमेव स्थितं भवति ॥ १५ ॥ अविभक्तमिति । किंच कीदृशं तत् ज्ञेयम् । भूतेषु स्थावरजंगमात्मकेषु अविभक्तं विभक्तं न भवति तत् अविभक्तं कारणात् कार्यस्य अनन्यत्वात् कार्येषु कारणरूपेण अभिन्नम् । तथा मृदि घट इव कार्यरूपेण विभक्तमिव स्थितम् । न तु विभक्तमित्यर्थः । भूतभर्तृ स्थितिकाले पालनसमये भूतभर्तृ भूतानि बिभर्ति तत् भूतभर्तृ भूतानां पालकं चेत्यपरं ग्रसिष्णु संहारकाले ग्रसनशीलं ग्रसिष्णु भूतानां संहारकं चेत्यपरं प्रभविष्णु उत्पत्तिकाले प्रभवशीलं प्रभविष्णु भूतानां उत्पादकम् । 'यतो वा इमानि भूतानि जायंते' इति श्रुतेः ॥ १६ ॥ ज्योतिषामिति । किंच कीदृशं तत् ज्ञेयम् । ज्योतिषां चंद्रसूर्यादीनां ज्योतिः प्रकाशकम् । 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति श्रुतेः । ज्ञानिभिः इति शेषः । तमसः अज्ञानात् परं विलक्षणं तत् ज्ञेयं उच्यते कथ्यते । ज्ञानं ज्ञायते सर्वं अनेनेति ज्ञानम् । ज्ञेयं तदेव परमपुरुषार्थत्वात् मुमुक्षुभिः ज्ञातुं योग्यं ज्ञेयं ज्ञानगम्यं ज्ञानेन आत्मानात्मलक्षणेन गम्यते प्राप्यत इति ज्ञानगम्यम् । एतादृशं ज्ञेयं कुत्रस्थितम् ?। सर्वस्य प्राणिजातस्य हृदि अंतःकरणे विष्ठितं विविधाकारसमुदायरूपेण स्थितम् । ज्ञेयं विना किमपि नास्तीति समुदायार्थः ॥ १७ ॥ उक्तं क्षेत्रज्ञानज्ञेयस्वरूपं सफलमुप-

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥
प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ १९ ॥
कार्यकारणकर्त्तृत्वे हेतुः प्रकृतिरुच्यते ।

संहरति। इति क्षेत्रमिति। इति अनेन प्रकारेण क्षेत्र' महाभूतानि' इत्यारभ्य 'धृत्यंतं' शरीरं तथा ज्ञानं 'अमानित्वादितत्त्वज्ञानार्थदर्शनांतं' ज्ञानसाधनं चेत्यपरं ज्ञेयं 'अनादिमत्परं ब्रह्म' इत्यारभ्य 'हृदि सर्वस्य विष्ठितं' इत्यंतं ज्ञानार्हं समासतः संक्षेपेण उक्तं कथितम्। मया इति शेषः। ततः किं इत्यत आह। मद्भक्तः मां अनन्यत्वेन भजतीति मद्भक्तः एतत् क्षेत्रादित्रयं विज्ञाय स्वरूपलक्षणया चेत्यपरं तटस्थलक्षणया ज्ञात्वा मद्भावाय मम भावः मद्भावः तस्मै मम स्वरूपभवनाय उपपद्यते योग्यो भवति। हेयत्वेन त्याज्यत्वेन क्षेत्रं ज्ञात्वा स्वरूपज्ञानेन प्रत्यग्ब्रह्मरूपेण अवतिष्ठति इत्यर्थः ॥ १८ ॥ 'मद्भक्त एतत् विज्ञाय' इति यदुक्तं तदेव द्विधा राशिविभागेन दर्शयति। प्रकृतिमिति। हे पार्थ! त्वं उभौ द्वौ अनादी न विद्यते आदिर्ययोस्तौ अनादी उत्पत्तिरहितौ विद्धि जानीहि। एव अपि अवधारणे। उभौ कौ। प्रकृतिं परापरभेदेन द्विधा क्षेत्रसंज्ञां कार्यभूतां चेत्यपरं पुरुषं क्षेत्रज्ञोपलक्षितं परमात्मानं कारणभूतं मां किंच त्वं विकारान् कर्तृत्वभोक्तृत्वसुखदुःखादीन् चेत्यपरं गुणान् देहेंद्रियादिरूपगुणपरिणामान् प्रकृतिसंभवान् प्रकृतेः संभवो येषां ते प्रकृतिसंभवाः तान् प्रकृतिसंभवान् विद्धि जानीहि। प्रकृतेः विकाररूपेण परिणतत्वात् तुच्छमित्यर्थः १९ ॥ उक्तौ प्रकृतिपुरुषौ हानोपादानाभ्यां का-

पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २० ॥
पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान् गुणान् ।

र्यकारणाभ्यां जडाजडविभागेन दर्शयति । कार्यकारणेति । कपिलादिभिरिति शेषः । प्रकृतिः जडभागः कार्यकारणकर्तृत्वे कार्यं शरीरं स्थूलभागं च कारणानि च सुखदुःखादिसाधनानि इंद्रियाणि कार्यकारणानि कार्यकारणानां कर्तृत्वं कार्यकारणकर्तृत्वं तस्मिन् तत्तदाकाररूपपरिणामे हेतुः उपादानं कारणं उच्यते कथ्यते। पुरुषः अजडः चेतनो भागः सुखदुःखानां सुखानि च दुःखानि च सुखदुःखानि तेषां भोक्तृत्वे भोगार्थे हेतुः कारणं उच्यते कथ्यते । अयं अभिप्रायः । यद्यपि अचेतनायाः प्रकृतेः स्वतःकर्तृत्वं न संभवति तथा पुरुषस्यापि अविकारिणः भोक्तृत्वं न संभवति तथापि कर्तृत्वं नाम क्रियानिर्वर्त्तकत्वं तत्तु अचेतनस्यापि चेतनादृष्टवशात् संभवति । यथा अयस्कांतसंनिधौ लोहस्य चलनमिव । तथा पुरुषसंनिधौ प्रकृतेः अचेतनायाः कार्यकारणकर्तृत्वं संभवति ॥ २० ॥ तथापि अविकारिणः जन्मरहितस्य च भोक्तृत्वं कथं इत्यत आह । पुरुष इति । हि यस्मात् पुरुषः परिपूर्णः परमात्मा प्रकृतिस्थः सन् प्रकृतौ प्रकृतिकार्ये देहे तादात्म्येन तिष्ठतीति प्रकृतिस्थः प्रकृतिजान् प्रकृतेः कार्यकारणरूपेण विद्यमानायाः जाताः प्रकृतिजाः तान् प्रकृतिजान् प्रकृतिसंभवान् गुणान् सुखदुःखादीन् भुंक्ते । 'ध्यायतीव लालयतीव' इति श्रुतेः । ननु—एवं सति संसारो नास्त्येव प्रत्यक्षतस्तु उपलभ्यते इत्याशंक्य तथा विवेकाभावात् देहाभिमानेन अविद्यमानोपि संसारो अवभाति इत्याशयेनाह । अस्य स्वाधिष्ठानचिदाभासस्य सदसद्योनिजन्मसु सती च देवादियोनिः असती च तिर्यगादियोनिः

कारणं गुणसंगोस्य सदसद्योनिजन्मसु ॥ २१ ॥
उपद्रष्टाऽनुमंता च भर्त्ता भोक्ता महेश्वरः।
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः॥२२॥

सदसत्यौ सदसतीभ्यां मिश्राः योन्यः सदसद्योन्यः सदसद्योनिषु जन्मानि सदसद्योनिजन्मानि तेषु सदसद्योनिजन्मसु गुणसंगः गुणेषु शुभाशुभेषु कर्मसु संगः गुणबुद्ध्या आसक्तिः गुणसंगः कारणं हेतुः अस्ति। गुणसंगेन शुभाशुभयोनिषु स्वनिष्ठितेषु सत्सु मिथ्याभूतोपि संसारः अस्य प्रतीयत इत्यर्थः॥ २१॥ वस्तुतस्तु सत्यत्वेन अयं संसारी न भवतीत्याह। उपद्रष्टेति। अस्मिन् अविद्याध्यस्ते प्रकृतिकार्ये देहे कारणरूपेण विद्यमानोपि पुरुषः परः भिन्न एव। तद्गुणैः न युज्यते इत्यर्थः। तमेव हेतुत्वेन विशिनष्टि। देहादिभ्यः भिन्नत्वादेव रज्जुसर्पवत् उप समीपे वर्त्तमानत्वात् द्रष्टा साक्षी तथा अनुमंता अनुमोदनकर्त्ता।स्वसंनिधिमात्रेण अंतर्बहिः अनुग्राहक इत्यर्थः। 'साक्षी चेता केवलो निर्गुणश्च' इति श्रुतेः। तथा ऐश्वरेण रूपेण भर्त्ता विभर्त्ति इति अविद्यमानमपि स्वसत्तया पुष्णाति वा धारयतीति भर्त्ता तथा भोक्ता भुनक्तीति चेतनत्वात् अस्मिन्नेव सर्वस्यापि भोगस्य पर्यवसानात् भोक्ता। तथा महेश्वरः महांश्चासौ ईश्वरश्च महेश्वरः ब्रह्मादीनामपि अंतर्यामी। नियामक इत्यर्थः। तथा परमात्मा परा उत्कृष्टा चासौ मा ज्ञानशक्तिः परमा तया लक्ष्यते आत्मा स्वरूपं यस्य सः परमात्मा अथवा परमाणां उत्कृष्टब्रह्माद्युपाधीनां आत्मा तत्तद्रूपेण सर्वं प्रकाशयन् व्याप्नोतीति परमात्मा यद्वा परा चासौ सृष्टिस्थितिसंहारकत्वेन अतिशयवती मा माया च परमया सातत्येन व्याप्नोतीति परमात्मा यद्वा परमस्य समष्टिजीवभूतस्य हिरण्यगर्भस्य

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्त्तमानोपि न स भूयोऽभिजायते ॥ २३ ॥
ध्यानेनात्मनि पश्यंति केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ २४ ॥

अंतर्यामी आत्मा स्वरूपं यस्य सः परमात्मा सर्वोत्तमस्वरूपः इति उक्तः कथितः ॥ २२ ॥ एवं प्रकृतिपुरुषविवेकज्ञाने किं फलं इत्यत आह । य एवमिति । यः साधनसंपन्नः यतिः एवं उक्तलक्षणं पुरुषं चेत्यपरं गुणैः सह सुखदुःखादिविकारैः सह प्रकृतिं देहद्वयात्मिकां वेत्ति विविक्तत्वेन जानाति सः यतिः सर्वथा विध्युल्लंघनेन अस्मिन् देहे वर्त्तमानः सन्नपि प्रारब्धकर्मणि क्षीणे सति भूयः पुनः नाभिजायते नोत्पद्यते । मुक्तो भवतीत्यर्थः ॥ २३ ॥ प्रकृतिपुरुषयोः विवेके सति 'वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति श्रुतेः । प्रकृतेः विकाररूपेण अनृतत्वात् पुरुष एव सत्यस्वरूपः तं विना किमपि नास्तीति ज्ञाने इयान् पुरुषार्थः भवति । तर्हि तदेव प्रकृतिपुरुषविवेकज्ञानं केन उपायेन भवति इत्यपेक्षायां यथाधिकारं साधनविकल्पान् आह द्वाभ्याम् । ध्यानेनेति । केचित् अंतर्मुखाः यतयः ध्यानेन विजातीयप्रत्ययतिरस्कारपूर्वकं सजातीयप्रत्ययप्रवाहीकरणेन आत्मनि प्रकृतिकार्यभूते देहे आत्मना संस्कृतेन मनसा आत्मानं अंतर्यामिणं पुरुषं पश्यंति साक्षात् कुर्वंति । मनसैवेदं आप्तव्यं मनसैव अनुद्रष्टव्यम् । 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदृष्टिभिः' इति । अन्ये सांख्ययोगिनः सांख्येन प्रकृतिपुरुषवैलक्षण्यदर्शनेन योगेन चित्तैकाग्रतापादकेन आत्मानं अंतर्यामिणं पश्यंति ।

अन्ये त्वेवमजानंतः श्रुत्वान्येभ्य उपासते ।
तेपि चातितरंत्येव मृत्युं श्रुतिपरायणाः ॥ २५ ॥
यावत्संजायते किंचित्सत्त्वं स्थावरजंगमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ २६ ॥
समं सर्वेषु भूतेषु तिष्ठंतं परमेश्वरम् ।

चेत्यपरं अपरे कर्मयोगिनः कर्मयोगेन ईश्वरार्पितेन चित्तशुद्धिद्वारा विवेकज्ञानसाधनेन आत्मानं अंतर्यामिणं पश्यंति साक्षात्कुर्वंति ॥ २४ ॥ अन्येत्विति । किंच अन्ये पूर्वोक्तविलक्षणाः एवं उक्तं ध्यानाद्युपायं अजानंतः संतः न जानंति ते अजानंतः अनभिज्ञाः संतः अन्येभ्यः गुरुभ्यः श्रुत्वा यथोपदेशं उपासते संततं ध्यायंति तेपि यथोपदिष्टोपासकाःमृत्युं संसारं अतितरंत्येव शनैः शनैः क्रमेण मुक्ताः भविष्यंति । कथंभूताः ते । श्रुतिपरायणाः श्रुतिः श्रवणमेव परं अयनं आत्मप्राप्तौ आश्रयो येषां ते श्रुतिपरायणाः । न तु तत्त्वदर्शने निपुणाः श्रद्धया श्रवणानुरूपनिष्णाताः क्रमेणोत्तरोत्तरज्ञानोपचयेन मुच्यंत इत्यर्थः ॥२५॥ ननु-उक्तप्रकारेण प्रकृतिपुरुषयोः अत्यंतविविक्तत्वात् संसृतेः का गतिः इति आह । यावदिति । हे भरतर्षभ ! यावत् किंचित् वस्तुजातं स्थावरजंगमं चराचरं सत्त्वं प्राणिजातं संजायते उत्पद्यते । तत् सर्वं क्षेत्रक्षेत्रज्ञसंयोगात् क्षेत्रं जानातीति क्षेत्रज्ञः क्षेत्रं प्रकृतिः च क्षेत्रज्ञः पुरुषः क्षेत्रक्षेत्रज्ञौ क्षेत्रक्षेत्रज्ञयोः संयोगः क्षेत्रक्षेत्रज्ञसंयोगः तस्मात् अविवेककृततादात्म्याध्यासात् भवति इति एवं त्वं विद्धि जानीहि ॥ २६ ॥ एवं प्रकृतिपुरुषाविवेकात् संसारो जायते इति उक्तम् । इदानीं तन्निवृत्त्युपायं तत्त्वज्ञानं निरूपयति । सममिति ।

विनश्यत्स्वविनश्यंतं यः पश्यति स पश्यति ॥ २७ ॥
समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥ २८ ॥
प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।

यः अविद्यापटेन अनावृतदृष्टिः यतिः सर्वेषु संपूर्णेषु भूतेषु स्थावरजंगमेषु समं समरूपेण तिष्ठंतं तिष्ठतीति तिष्ठन् तं विद्यमानं परमेश्वरं परमात्मानं पश्यति साक्षात् अवलोकयति सः पुरुषः सम्यक् स्वरूपदर्शनात् चक्षुष्मान् सन् पश्यति अन्यः न पश्यति । कथंभूतं परमेश्वरम् । सर्वेषु भूतेषु विनश्यत्सु सत्सु नाशं गतेषु सत्सु अविनश्यंतं न विनश्यतीति अविनश्यन् तं नाशरहितम् ॥ २७ ॥ सम्यक् स्वरूपदर्शने हेतुमाह । समं पश्यन्निति । यः पुरुषः सर्वत्र सर्वकार्येषु मूर्त्तामूर्तेषु समवस्थितं सम्यक् अवस्थितः समवस्थितः तं सद्रूपेण सम्यगवस्थितं ईश्वरं सर्वनियामकं मुकुटकुंडलादिषु सुवर्णमिव समं समरूपेण पश्यन् पश्यतीति पश्यन् सन् अवलोकयन् सन् आत्मानं न हिनस्ति देहात्मबुद्ध्या न तिरस्करोति सर्वत्र आत्मदर्शनात् स एव पश्यति । इति उक्तं युक्तमित्यर्थः । ततः किं इत्यत आह । सः पुरुषः ततः तस्मात् सर्वात्मदर्शनात् परां पुनरावृत्तिरहितां गतिं गम्यते स्वरूपेण प्राप्यते इति गतिः तां गतिं आत्मप्राप्तिं याति प्राप्नोति । विस्मृतकंठगतचामीकरप्राप्तिमिव भ्रांत्या आत्मानं विस्मृत्य भ्रांतिनाशे सति आत्मानं पुनः प्राप्नोति इति भावः ॥ २८ ॥ प्रकृत्यैवेति । एवं प्रकृतिपुरुषविवेके किं फलति इति आह द्वाभ्याम् । यः यतिः प्रकृत्यैव कार्यकारणरूपयैव न तु आत्मना । सर्वशः सर्वप्रकारेण कर्माणि कर्तुं योग्यानि कर्माणि । कर्तुः इष्टतमानि क्रियमा-

यः पश्यति तथात्मानमकर्तारं स पश्यति ॥ २९ ॥
यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३० ॥
अनादित्वान्निर्गुणत्वात् परमात्मायमव्ययः ।

णानि वा क्रियंते तानि क्रियमाणानि निवर्त्यमानानि इति पश्यति अवलोकयति तथा आत्मानं प्रत्यंचं अंतर्यामिणं अकर्त्तारं करोतीति कर्त्ता न कर्त्ता अकर्त्ता तं अकर्तारं क्रियारहितं पश्यति अवलोकयति सः प्रकृतिपुरुषविवेकी कर्मभिः वैदिकलौकिकैः मुक्तो भवतीत्यर्थः। नान्य इति भावः ॥ २९ ॥ तदेव मुखतः प्रतिपादयति। यदेति। पुमान् यदा यस्यां अवस्थायां भूतपृथग्भावं भूतानां चराचराणां पृथग्भावः देवमनुष्यतिर्यगादिवैचित्र्यं भूतपृथग्भावः तं एकस्थं एकस्यां ईश्वरशक्तिरूपायां प्रकृतौ तिष्ठतीति एकस्थः तं एकस्थं प्रलये अनुपश्यति अवलोकयति व्योमस्थं वाय्वादिभूतचतुष्टयवैषम्यमिव तदा तस्यां अवस्थायां ततः तस्मात् भूतपृथग्भावैकस्थत्वदर्शनात् विस्तारं भूतविस्तारं सृष्टिसमये अनुपश्यति अवलोकयति तदा प्रकृतितावन्मात्रत्वेन भूतानां अभेदं पश्यन् सन् ब्रह्म परिपूर्णं ब्रह्म संपद्यते ब्रह्मैव भवति। आत्मातिरेकेण किमपि नास्तीत्यनुभवो भवतीत्यर्थः ॥ ३० ॥ ननु—एवंभूतः परमात्मा सर्वाधिष्ठानत्वेन कर्तृत्वाद्यभिमानाभावात् कर्मभिः न लिप्यते। तथापि एवं सत्यपि अंतर्यामितया शरीरनियमनं कुर्वन् कथं न लिप्यते इति आह। अनादित्वादिति। हे कौंतेय! शरीरस्थः अंतर्यामितया शरीरे तिष्ठतीति शरीरस्थः अयं प्रसिद्धः परमात्मा परमेश्वरः अव्ययः सन् न विद्यते व्ययो विकारः यस्य सः अव्ययः अविकारी सन् अनादित्वात् अनादेर्भावः अनादित्वं तस्मात्

शरीरस्थोपि कौंतेय न करोति न लिप्यते ॥३१॥
यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ३२ ॥
यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३३ ॥
क्षेत्रक्षेत्रज्ञयोरेवमंतरं ज्ञानचक्षुषा ।

उत्पत्त्यादिहीनत्वात् चेत्यपरं निर्गुणत्वात् निर्गुणस्य भावः निर्गुणत्वं तस्मात् वर्णाश्रमादिगुणरहितत्वात् न करोति कर्मणा न लिप्यते। कर्मफलेन असंस्पृष्टो भवतीत्यर्थः ॥ ३१ ॥ उक्तदृष्टांतेन तमेवार्थं प्रपंचयति। यथेति। यथा सौक्ष्म्यात् सूक्ष्माणां भावः सौक्ष्म्यं तस्मात् सर्वांतरत्वात् आकाशं सर्वगतं सत् सर्वेषु पंकादिषु गतं प्राप्तं सर्वगतं तत्तद्विकारैः नोपलिप्यते लिप्तं न भवति। तथा आत्मा सर्वत्र उत्तमे वा अधमे देहे अवस्थितः सन् विद्यमानः सन् नोपलिप्यते न लिप्तो भवति। दैहिकैर्गुणदोषैर्न युज्यते इत्यर्थः ॥ ३२॥ ननु—एकस्य अंतर्यामितया सर्वप्रकाशकत्वं कथं इत्यपेक्षायां सदृष्टांतमाह। यथेति। यथा यद्वत् एकः असहायः रविः सूर्यः इमं प्रमाणेन दृष्टश्रुतं कृत्स्नं समस्तं लोकं लोक्यत इति लोकः तं भूर्भुवःस्वरादिलोकं प्रकाशयति स्वकिरणैः प्रकाशीकरोति तथा तद्वत्। हे भारत! क्षेत्री क्षेत्राणि नियम्यतया विद्यंते यस्य सः क्षेत्री अंतर्यामी परमात्मा कृत्स्नं समस्तं क्षेत्रं ब्रह्मादिस्तंबपर्यंतं शरीरजातं प्रकाशयति प्रकाशीकरोति प्रकाशक्षमं करोति ॥३३॥ अध्यायार्थं क्षेत्रक्षेत्रज्ञविविक्तज्ञानं सकलं उपसंहरति। क्षेत्रक्षेत्रज्ञयोरिति। ये आत्मानात्मविवेकिनः संन्यासिनः एवं

भूतप्रकृतिमोक्षं च ये विदुर्यांति ते परम्॥ ३४॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु० क्षेत्रक्षेत्रज्ञयोगो नाम त्रयोदशोऽध्यायः॥

उक्तप्रकारेण क्षेत्रक्षेत्रज्ञयोः क्षेत्रं शरीरं च क्षेत्रज्ञः अंतर्यामी क्षेत्रक्षेत्रज्ञौ तयोः क्षेत्रक्षेत्रज्ञयोः प्रकृतिपुरुषयोः अंतरं अन्योन्यविलक्षणत्वेन भेदं ज्ञानचक्षुषा ज्ञानमेव चक्षुः चक्षुरिंद्रियं ज्ञानचक्षुः तेन ज्ञानचक्षुषा विवेकनेत्रेण विदुः जानंति पश्यंति। तथा ये विवेकिनः भूतप्रकृतिमोक्षं भूतप्रकृतेः सकाशात् मोक्षः मोक्षोपायः भूतप्रकृतिमोक्षः तं भूतप्रकृतिमोक्षं विदुः जानंति ते परमहंसाः परं ब्रह्म यांति प्राप्नुवंति। 'ब्रह्मविदाप्नोति परम्' इति श्रुतेः॥ ३४॥ विविक्तौ येन तत्त्वेन मिश्रौ प्रकृतिपूरुषौ। तं वंदे परमानंदं नंदनंदनमीश्वरम्॥ १॥ शरीरात्मविवेकेन निर्विशेषात्मदर्शनम्। कृतवान् भक्तवात्सल्यात् तस्मै श्रीगुरवे नमः॥ २॥ ॥ इति श्रीबालबोधिन्यां श्रीमद्भगवद्गीताटीकायां त्रयोदशोऽध्यायः॥ १३॥

---

श्रीभगवानुवाच ।

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।

श्रीः । शरीरात्मविवेकेन संसारो जायते मृषा । इत्युक्तविशदार्थाय प्रस्तुतोऽध्याय ईर्यते ॥ १ ॥ भगवान् पुरुषस्य संसारनिरसनोपायं वक्तुं अध्यायं आरभमाणः सन् तावत् संसारनिवर्तकं ज्ञानं अपृष्टमपि वात्सल्यात् श्रोतृबुद्धिप्ररोचनार्थं स्तौति । परंभूय इति । हे अर्जुन ! अहं पूर्वं प्रथमं उक्तमपि भूयः पुनः ज्ञानानां सत्त्वरजस्तमात्मकानां प्रत्ययानां परं उत्कृष्टं ज्ञानं प्रकाशकं ज्ञानं प्रवक्ष्यामि प्रकर्षेण कथयामि । कथंभूतं ज्ञानम् । उत्तमं उद्गतं तमो तमोगुणः यस्मात् तत् उत्तमं सर्वे समस्ताः मुनयः यथाश्रुतं मननशीलाः मुनयः यत् ज्ञानं ज्ञात्वा स्वरूपत्वेन अनुभूय इतः देहपातात् ऊर्ध्वं परां सर्वोत्कृष्टां चरमपुरुषार्थलक्षणां सिद्धिं स्वरूपावस्थितिं गताः प्राप्ताः । मननेन मुनयो भूत्वा मुक्ताः अभूवन्नित्यर्थः ॥ १ ॥ पुनरपि ज्ञानस्तुत्या उक्तस्वरूपं निगमयति । इदमिति । मुनयः इदं वक्ष्यमाणत्वेन प्रतिश्रुतं ज्ञानं ज्ञप्तिस्वरूपं उपाश्रित्य अहं इति अंगीकृत्य मम सत्यज्ञानादिलक्षणस्य साधर्म्यं समानधर्मस्य भावः साधर्म्यं समानधर्मतां मद्रूपतां आगताः प्राप्ताः देहाध्यासेन मां विस्मृत्य संसारे अनुसरंतः संतः पुनः प्रबुद्धा इव भ्रमनिवृत्त्या स्वात्मानं मां प्राप्ताः । ननु—त्वत्प्राप्तौ को वा पुरुषार्थस्तत्राह । ये मुनयः मम साधर्म्यं आगताः प्राप्ताः ते मुनयः सर्गेपि अनादि-

सर्गेपि नोपजायंते प्रलये न व्यथंति च ॥ २ ॥
मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥
सर्वयोनिषु कौंतेय मूर्त्तयः संभवंति याः ।

भूतसृष्टौ आरब्धायामपि नोपजायंते नोत्पद्यंते जन्मविक्रियां नानुभवंति चेत्यपरं प्रलये संहारकाले न व्यथंति मरणदुःखमपि नानुभवंति ॥२॥ प्रकृतिपुरुषाभ्यां भूतोत्पत्तिः भवति । इति स्वविवक्षितार्थं दर्शयति । मम योनिरिति । हे पार्थ ! मम प्रकृतिपुरुषयोः नियंतुः महत् अपरिच्छिन्नत्वात् महती ब्रह्मस्वकार्याणां वृद्धिहेतुत्वात् मूलप्रकृतिः योनिः गर्भाधानाश्रयं अस्ति । अहं तस्मिन् महति ब्रह्मणि मूलप्रकृतौ योनौ गर्भाधानाश्रये गर्भं भूतभौतिकविस्तारहेतुं चिदाभासं दधामि प्रक्षिपामि । पूर्वं प्रलयकाले उपरतायां प्रकृतौ लीनं संतं पुनः सृष्टिकाले सर्गोन्मुखायां प्रकृतौ अविद्याकामकर्माशयवंतं पुरुषसंज्ञकं क्षेत्रज्ञं भोगायतनेन क्षेत्रेण संयोजयामीत्यर्थः । हे भारत ! ततः तस्मात् क्षेत्रक्षेत्रज्ञसंयोगात् सर्वभूतानां भूतभौतिकानां संभवः उत्पत्तिः भवति जायते ॥ ३ ॥ सर्वत्र सर्वभूतोत्पत्तिः मदधिष्ठानाभ्यां प्रकृतिपुरुषाभ्यामेव भवति इति अभिप्रायेणाह । सर्वयोनीति । हे कौंतेय हे कुंतीपुत्र! सर्वयोनिषु सर्वाश्च ताः योनयश्च सर्वयोनयः तासु सर्वयोनिषु चराचरोत्पत्तिनिमित्तेषु मनुष्यादिषु याः प्रसिद्धाः मूर्त्तयः स्थावरजंगमात्मिकाः शरीराकृतयः संभवंति उत्पद्यंते तासां मूर्तीनां महत् महती ब्रह्म प्रकृतिः योनिः मातृस्थानीया अस्ति । तत्र योनौ अहं बीजप्रदः बीजं गर्भाधानं प्रददातीति बीजप्रदः गर्भाधानादिकर्त्ता

तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥
सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।
निबध्नंति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥
तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम् ।

पिता जनकः अस्मि। मयैव प्रकृतिद्वारा सर्वं निष्पाद्यते इति यावत् ॥४॥ सत्त्वमिति । हे महाबाहो ! महांतौ दानकरणसमर्थौ बाहू हस्तौ यस्य सः महाबाहुः तत्संबुद्धौ हे महाबाहो सत्त्वं रजः तमः इति गुणाः त्रयः गुणाः प्रकृतिसंभवाः संतः प्रकृतेः मायायाः संभवः उत्पत्तिः येषां ते प्रकृतिसंभवाः देहे स्वकार्ये शरीरे देहिनं आध्यात्मिकसंबंधेन देहो विद्यते यस्य सः देही तं देहिनं साधिष्ठानं चिदाभासं निबध्नंति स्व-कार्यैः सुखदुःखमोहादिभिः संयोजयंति। कथंभूतं देहिनम् । अव्ययं अविनाशिनं यथा जले प्रतिबिंबितः सूर्यः जलगतकंपवानिव दृश्यते विचार्यमाणे सति तद्विकाररहितः अव्ययः। तथा अयमपि देही गुण-कार्यैः सुखदुःखमोहादिभिः विकारवानिव भासते। वस्तुतस्तु कूट-स्थत्वात् अव्यय एव अस्ति इति भावः ॥ ५ ॥ गुणाः देहिनं निबध्नंति इति उक्तं तत्र किं लक्षणः को गुणः केन कथं बध्नाति इत्यपेक्षायामाह । तत्र सत्त्वमिति। हे अनघ! न विद्यते अघं पातकं यस्य सः अनघः तत्संबुद्धौ हे अनघ हे निष्पाप! तत्र तेष्विति तत्र तेषु गुणेषु मध्ये सत्त्वं सत्त्वगुणः निर्मलत्वात् निर्मलस्य भावः निर्मलत्वं तस्मात् स्वच्छत्वात् प्रकाशकं आदर्शादिवत् असंगत्वेन समीपवर्त्ति-पदार्थजातस्य प्रकाशं करोति तत् प्रकाशकं भास्वरं सुखसंगेन सुखेन संगः सुखसंगः तेन चेत्यपरं ज्ञानसंगेन ज्ञानेन संगः ज्ञानसंगः तेन देहिनं बध्नाति अहं सुखी अहं ज्ञानी इति मनोधर्माः तदभिमानिनि

सुखसंगेन बध्नाति ज्ञानसंगेन चानघ ॥ ६ ॥
रजो रागात्मकं विद्धि तृष्णासंगसमुद्भवम् ॥
तन्निबध्नाति कौंतेय कर्मसंगेन देहिनम् ॥ ७ ॥
तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।

क्षेत्रज्ञे योजयति । कथंभूतं सत्त्वम् । अनामयं न विद्यते आमयो उपद्रवः यस्य तत् अनामयम् । निरुपद्रवं शांतमित्यर्थः ॥ ६ ॥ रजसो लक्षणं बंधकत्वं चाह । रज इति । हे कौंतेय ! त्वं रजः रजःसंज्ञकं गुणं रागात्मकं रंजनस्वरूपं विद्धि जानीहि । कथंभूतं रजः । तृष्णासंगसमुद्भवं तृष्णा अप्राप्ते जिघृक्षा च संगः प्राप्ते त्यागाभावः तृष्णासंगौ तृष्णासंगयोः समुद्भवः उत्पत्तिः यस्मात् तत् तृष्णासंगसमुद्भवं अथवा तृष्णासंगाभ्यां समुद्भवो यस्य तत् एतल्लक्षणं रजः कर्मसंगेन कर्मसु दृष्टादृष्टार्थेषु संगः अतिसंगः कर्मसंगः तेन देहिनं देहाभिमानवंतं निबध्नाति नितरां बध्नाति तृष्णासंगाभ्यां हेतुभ्यां रागात्मकं रजःकर्मसु संगं उत्पादयति । तेन कर्मसंगेन देही कोशकीटवत् संसारात् बहिर्गंतुं न शक्नोतीत्यर्थः । कर्मसु आसक्तोभवति ॥ ७ ॥ इदानीं तमोलक्षणं तद्बंधनप्रकारं च आह । तमस्त्विति । तुशब्देन तमसो निकृष्टत्वात् हेयत्वं नाम त्याज्यत्वं ध्वनितम् । हे भारत ! त्वं तमःआवरणात्मकं आवरणस्वरूपं अज्ञानजं अज्ञानात् जातं अज्ञानजं अज्ञानकार्यं विद्धि जानीहि । अज्ञानस्य अविद्यायाः इयं कार्यम् । इयं किम् । आवरणं विक्षेपः रजोमिश्रितेन तमसा विक्षेपः भवति केवलेन तमसा आवरणमेव उक्तम् । कथंभूतं तमः । सर्वदेहिनां सर्वे च ते देहिनश्च सर्वदेहिनः तेषां मोहनं स्वरूपाच्छादकम् । कदापि स्वरूपं

प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥
सत्त्वं सुखे संजयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥ ९ ॥
रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।

न स्मारयति इति भावः । लक्षणं उक्तबंधनप्रकारं च दर्शयति । तत् तमः प्रमादालस्यनिद्राभिः प्रमादः कार्याकार्यानवधानं च आलस्यं जाड्यं च निद्रा मनोवसादः प्रमादालस्यनिद्राः ताभिः देहिनं निबध्नाति नितरां बध्नाति ॥ ८ ॥ सत्त्वादयः त्रयो गुणाः सुखादिसंगेन देहिनं निबध्नंति इति उक्तम् । सामर्थ्यं विना तदसंभवात् तेषां सामर्थ्यं दर्शयति । सत्त्वमिति । हे भारत ! सत्त्वं सत्त्वगुणः सुखे संजयति दुःखप्राप्तौ सत्यां देहिनं सुखाभिमुखं करोति । सुखे एव सत्यपि रजः रजोगुणः कर्मणि कर्ममात्रे संजयति संयोजयति । उत्तमस्तु तमोगुणोपि ज्ञानं दैववशेन यथाकथंचित् सत्संगेन उत्पद्यमानं आत्मकर्मविषयं ज्ञानं आवृत्य आच्छाद्य अविवेकवता संपाद्य प्रमादे प्रकर्षेण मादः गर्वः प्रमादः तस्मिन् प्रमादे सदुपदिश्यमानज्ञानानवधाने संजयति संयोजयति ॥ ९ ॥ यदा यस्य गुणस्य आधिक्यं भवति तदा अन्यद्वयप्रतिबंधेन तस्य गुणस्य आविर्भावो भवति इति अभिप्रायेणाह । रजस्तमश्चेति । हे भारत ! सत्त्वं सत्त्वगुणः रजः रजोगुणः चेत्यपरं तमः तमोगुणः तान् अभिभूय तिरस्कृत्य प्रतिबध्येत्यर्थः । भवति आधिक्येन वर्त्तते तदा ज्ञानातिरेको भवतीत्यर्थः । तथा रजः रजोगुणं सत्त्वं सत्त्वगुणं चेत्यपरं तमः तमोगुणं अभिभूय तिरस्कृत्य भवति आधिक्येन वर्तते तदा कर्मप्रवृत्तिर्भवति । तथा तमः तमो-

रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥

सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।

ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ ११ ॥

लोभः प्रवृत्तिरारंभः कर्मणामशमः स्पृहा ।

रजस्येतानि जायंते विवृद्धे भरतर्षभ ॥ १२ ॥

गुणः सत्त्वं सत्त्वगुणं चेत्यपरं रजः रजोगुणं अभिभूय तिरस्कृत्य भवति आधिक्येन वर्त्तते तदा प्रमादालस्यनिद्राविर्भावो भवतीत्यर्थः ॥१०॥ एवमन्योन्यतिरस्कारेण सत्त्वादीनां वृद्धौ चिह्नानि आह त्रिभिः। सर्वद्वारेष्विति । यदा यस्मिन् काले अस्मिन् जीवात्मनः भोगायतने देहे शरीरे सर्वद्वारेषु सर्वाणि समस्तानि च तानि द्वाराणि देहच्छिद्राणि सर्वद्वाराणि तेषु सर्वद्वारेषु श्रोत्रादींद्रियेषु प्रकाशः यथाशास्त्रं शब्दादिप्रकाशकं ज्ञानं उपजायते भवति तदा तस्मिन् काले पुरुषः सत्त्वं सत्त्वगुणं विवृद्धं विशेषेण वृद्धं विवृद्धं वृद्धिंगतं विद्यात् जानीयात्। एतानि सत्त्वगुणवृद्धिलिंगानि। उत इति अव्ययं पादपूरणार्थम् ॥११॥ रजोगुणवृद्धिलिंगान्याह। लोभ इति। हे भरतर्षभ ! रजसि रजोगुणे विवृद्धे सति वृद्धिंगते सति एतानि लोभादीनि स्पृहांतानि चिह्नानि जायंते उत्पन्नानि भवंति । एतानि कानि। लोभः बहुधनागमेपि वृद्ध्यभिलाषेण आगते सत्पात्रे दानाभावः चेत्यपरं प्रवृत्तिः नित्यं कुर्वद्रूपता आरंभः गृहादिनिर्माणोद्यमः कर्मणां अशमः इदं लौकिकं वा वैदिकं प्राप्तं कर्म कृत्वा इदं करिष्यामि इति संकल्प्य सततानुपरमः स्पृहा दृष्टादृष्टार्थेषु उच्चावचेषु वस्तुषु मम इदं स्यात् इति जिघृक्षा ॥ १२ ॥

अप्रकाशो प्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायंते विवृद्धे कुरुनंदन ॥ १३ ॥
यदा सत्त्वे प्रवृद्धे तु प्रळयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥ १४ ॥
रजसि प्रळयं गत्वा कर्मसंगिषु जायते ।

तमोगुणवृद्धौ यानि लिंगानि तान्याह । अप्रकाश इति। हे कुरुनंदन! तमसि तमोगुणे विवृद्धे सति वृद्धिं गते सति एतानि लिंगानि जायंते उत्पन्नानि भवंति । एतानि कानि। अप्रकाशः कार्याकार्यविवेकाभावः चेत्यपरं अप्रवृत्तिः सदा अनुद्यमस्वभावता च प्रमादः सर्वत्र अनवधानं च मोहः देहगेहादौ अहं मम इति अभिनिवेशः ॥ १३ ॥ इदानीं मरणावसरे यस्मिन् गुणे विवृद्धे सति यत्फलं भविष्यति तत् आह द्वाभ्याम्। यदेति। यदा यस्मिन् मरणावसरे सत्त्वगुणे प्रवृद्धे सति वृद्धिंगते सति देहभृत् देहं बिभर्तीति देहभृत् जीवः प्रलयं प्रकर्षेण लयः मृत्युः प्रलयः तं मरणं याति प्राप्नोति तदा तस्मिन् मरणावसरे देहभृत् जीवः उत्तमविदां उत्तमं अश्वमेधादिना प्राप्य कार्यं ब्रह्म विदंति जानंति ते उत्तमविदः तेषां उत्तमविदां अथवा उत्तमान् हिरण्यगर्भादीन् विदंति उपासते तेषां लोकान् भोग्यत्वेन लोक्यंत इति लोकाः तान प्रतिपद्यते प्राप्नोति। कथंभूतान् लोकान्। अमलान् न विद्यंते मलाः येषु ते अमलाः तान् अमलान् रजस्तमप्रतिबंधराहित्येन सत्त्वाधिक्यात् प्रकाशमयान् ॥ १४ ॥ रजसीति। किंच देहभृत् देहं बिभर्तीति देहभृत् जीवः विवृद्धे वृद्धिं गते रजसि रजोगुणे प्रलयं प्रकर्षेण लयः मृत्युः प्रलयः तं प्रलयं मरणं गत्वा प्राप्य कर्मसंगिषु कर्मणः

तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥
कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम्।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥
सत्त्वात् संजायते ज्ञानं रजसो लोभ एव च।

संगो येषामस्ति ते कर्मसंगिनः तेषु कर्मसंगिषु कर्माभिनिविष्टचेतस्सु जायते उत्पन्नो भवति। तथा देहभृत् जीवः विवृद्धे तमसि तमोगुणे प्रलीनः सन् प्रकर्षेण लीनः प्रलीनः मृतः सन् मूढयोनिषु मूढा अज्ञानाश्च ताः योनयश्च मूढयोनयः तासु मूढयोनिषु पश्वादिषु जायते उत्पन्नो भवति॥ १५ ॥ इदानीं प्राक्तनसत्त्वादिगुणसंस्कारोपचितं वर्त्तमानजन्मनि आविर्भूतं फलं एकेनाह।* कर्मण इति। हे कौंतेय! कर्मफलविदः पंडिताः सुकृतस्य पुण्यरूपस्य सात्त्विकस्य कर्मणः सत्त्वगुणात्मककर्मणः सात्त्विकं सत्त्वगुणप्रधानं निर्मलं निर्गतः मलः दोषः यस्मात् तत् निर्मलं यथा वर्णाश्रमविहितकर्माकरणप्रत्यवायजनितदोषरहितं फलं फलति तत् फलं फलति सत्त्वरूपेण प्रादुर्भवति इति आहुः कथयंति। रजसः रजोगुणस्य कर्मणः फलं इह जन्मनि आविर्भूतं दुःखं जन्मप्रभृतिदरिद्रादिनिमित्तं क्लेशानुभवं आहुः वदंति। पूर्वस्मिन् जन्मनि धनादिलोभेन दानाभावात् दरिद्रादिदुःखं भवति इति कथयंति तथा तमसः तमोगुणस्य कर्मणः तामसकर्मणः अज्ञानं सर्वत्र अविवेकं फलं आहुः। जन्मादारभ्य मरणावधिपठितेपि तदभावः। जन्मांतरकृततामसकर्मफलमित्यर्थः॥ १६ ॥ सत्त्वादीनां निर्मलादिफलत्वे हेतुमाह। सत्त्वादीति। सत्त्वात् सत्त्वगुणात् ज्ञानं सारासारविवेकनैपुण्यं संजायते उत्पन्नं भवति तस्मात् ज्ञानात् निर्मलं

प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७ ॥
ऊर्ध्वं गच्छंति सत्त्वस्था मध्ये तिष्ठंति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छंति तामसाः ॥ १८ ॥
नान्यं गुणेभ्यः कर्त्तारं यदा द्रष्टानुपश्यति ।

फलं भवतीत्यर्थः। किंच रजसः रजोगुणात् लोभः उपार्जितेषु द्रव्येषु व्ययाभावः तेन व्ययाभावेन यावत् जीवश्च शरीरादिभोगाभावात् जन्मांतरे च दानाभावेन दरिद्रत्वात्। दुःखमेव रजसः फलमिति भावः। तमसः तमोगुणात् प्रमादमोहौ प्रमादः अकस्मादेव अनर्थोद्यमः च मोहः कार्याकार्यानवधारणं प्रमादमोहौ भवतः। चेत्यपरं तमसः तमोगुणात् अज्ञानं कार्यकारणसंघाते अहंकार इति अविवेकः भवति। प्रमादादित्रयं तमोगुणस्य कार्यं अज्ञानं स्वरूपावरणं तस्मात् भवतीत्यर्थः॥ १७ ॥ इदानीं सत्त्वादिप्रवृत्तिशीलानां फलभेदमाह। ऊर्ध्वमिति। सत्त्वस्थाः सत्त्वे सत्त्वगुणे तिष्ठंति ते सत्त्वस्थाः सत्त्ववृत्तिस्थाः ऊर्ध्वं अभ्युदयलक्षणं स्वर्गं गच्छंति प्राप्नुवंति सत्त्वोत्कर्षतारतम्यात्। उत्तरोत्तरशतगुणानंदान् मनुष्यगंधर्वपितृदेवलोकान् सत्यलोकपर्यंतान् प्राप्नुवंतीत्यर्थः। राजसाः तृष्णाद्याकुलाः रजोगुणयुक्ताः मध्ये मनुष्यलोके तिष्ठंति मनुष्यलोके उत्पद्यंते। रंजनात्मकेन रजोगुणेन युक्ताः विषयभोगासक्त्या मनुष्यलोकमेव प्राप्नुवंतीत्यर्थः। तामसा तमोगुणयुक्ताः पामराः अधः निकृष्टां स्थावरादियोनिं गच्छंति प्राप्नुवंति। तमोगुणतारतम्यात्। तामिस्रादिषु निरयेषु उत्पद्यंते। कथंभूताः तामसाः। जघन्यगुणवृत्तिस्थाः जघन्यः निकृष्टश्चासौ गुणः तमोगुणः जघन्यगुणः जघन्यगुणस्य वृत्तिं प्रमादादिवृत्तिं जघन्यगुणवृत्तिं जघन्यगुणवृत्तौ तिष्ठंतीति जघन्यगुणवृत्तिस्थाः ॥ १८ ॥ एवं गुणसंगात् ब्रह्मादिस्थावरांतः संसारः वर्णितः। इदानीं संसारनिवृत्त्युपायं दर्शयति। नान्यमिति। द्रष्टा

गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥
गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥

पश्यतीति द्रष्टा विवेकी यदा विद्याविद्यावस्थायां गुणेभ्यः सत्त्वादिगुणेभ्यः सकाशात् अन्यं अपरं कर्त्तारं करोतीति कर्त्ता तं कर्त्तारं नानुपश्यति नावलोकयति। अपि तु गुणा एव कर्माणि कुर्वंति आत्मा न करोति इति विचारेण आलोचयति। चेत्यपरं गुणेभ्यः सत्त्वादिगणेभ्यः परं आत्मानं विलक्षणं अकर्त्तारं वेत्ति जानाति। गुणसाक्षिणं जानातीति भावः। सः आत्मानात्मदर्शी मद्भावं मम भावः मद्गतधर्मः मद्भावः तं मद्भावं मद्रूपतां प्रत्यग्ब्रह्मैक्यलक्षणां अधिगच्छति प्राप्नोति। मामेव प्रविशतीति भावः ॥ १९ ॥ मद्भावं गच्छति इति उक्तं तदेव दर्शयति। गुणानेतानिति। देही देहोऽस्यास्तीति देही विवेकी एतान् प्रकृतान् गुणान् सत्त्वादीन् अतीत्य अतिक्रम्य अनात्मत्वेन त्यक्त्वा जन्ममृत्युजरादुःखैः जन्म च मृत्युश्च जरा च दुःखं च जन्ममृत्युजरादुःखानि तैः जन्म जनकजननीरेतोसृग्धारोत्पत्तिः। मृत्युः शरीरवियोगः। जरा वलीपलितश्वेतालकालंकारवती। दुःखं आध्यात्मादिभेदभिन्नम्। जन्ममृत्युजरादुःखैः विमुक्तः सन् जीवन् असंस्पृष्टः सन् प्रारब्धकर्मणि क्षीणे सति अमृतं जन्ममरणरहितं स्वस्य वास्तवं रूपं ब्रह्म अश्नुते प्राप्नोति। तद्रूपो भवतीत्यर्थः। कथंभूतान् गुणान्। देहसमुद्भवान् गुणत्रयकार्यत्वात् देहस्य समुद्भवो येभ्यस्ते देहसमुद्भवाः तान् यद्वा बीजतरुन्यायेन अन्योन्यहेतुत्वात् देहात् समुद्भवो प्रादुर्भावो येषां ते देहसमुद्भवाः तान् देहसमुद्भवान् ॥ २० ॥ गुणातीतः स्वरूपं भजते

प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७ ॥
ऊर्ध्वं गच्छंति सत्त्वस्था मध्ये तिष्ठंति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छंति तामसाः ॥ १८ ॥
नान्यं गुणेभ्यः कर्त्तारं यदा द्रष्टानुपश्यति ।

फलं भवतीत्यर्थः। किंच रजसः रजोगुणात् लोभः उपार्जितेषु द्रव्येषु व्ययाभावः तेन व्ययाभावेन यावत् जीवश्च शरीरादिभोगाभावात् जन्मांतरे च हानाभावेन दरिद्रत्वात्। दुःखमेव रजसः फलमिति भावः। तमसः तमोगुणात् प्रमादमोहौ प्रमादः अकस्मादेव अनर्थोद्यमः च मोहः कार्याकार्यानवधारणं प्रमादमोहौ भवतः। चेत्यपरं तमसः तमोगुणात् अज्ञानं कार्यकारणसंघाते अहंकार इति अविवेकः भवति। प्रमादादित्रयं तमोगुणस्य कार्यं अज्ञानं स्वरूपावरणं तस्मात् भवतीत्यर्थः॥ १७ ॥ इदानीं सत्त्वादिप्रवृत्तिशीलानां फलभेदमाह। ऊर्ध्वमिति। सत्त्वस्थाः सत्त्वे सत्त्वगुणे तिष्ठंति ते सत्त्वस्थाः सत्त्ववृत्तिस्थाः ऊर्ध्वं अभ्युदयलक्षणं स्वर्गं गच्छंति प्राप्नुवंति सत्त्वोत्कर्षतारतम्यात्। उत्तरोत्तरशतगुणानंदान् मनुष्यगंधर्वपितृदेवलोकान् सत्यलोकपर्यंतान् प्राप्नुवंतीत्यर्थः। राजसाः तृष्णाद्याकुलाः रजोगुणयुक्ताः मध्ये मनुष्यलोके तिष्ठंति मनुष्यलोके उत्पद्यंते। रंजनात्मकेन रजोगुणेन युक्ताः विषयभोगासक्त्या मनुष्यलोकमेव प्राप्नुवंतीत्यर्थः। तामसा तमोगुणयुक्ताः पामराः अधः निकृष्टां स्थावरादियोनिं गच्छंति प्राप्नुवंति। तमोगुणतारतम्यात्। तामिस्रादिषु निरयेषु उत्पद्यंते। कथंभूताः तामसाः। जघन्यगुणवृत्तिस्थाः जघन्यः निकृष्टश्चासौ गुणः तमोगुणः जघन्यगुणः जघन्यगुणस्य वृत्तिं प्रमादादिवृत्तिं जघन्यगुणवृत्तिं जघन्यगुणवृत्तौ तिष्ठंतीति जघन्यगुणवृत्तिस्थाः ॥ १८ ॥ एवं गुणसंगात् ब्रह्मादिस्थावरांतः संसारः वर्णितः। इदानीं संसारनिवृत्त्युपायं दर्शयति। नान्यमिति। द्रष्टा

गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥
गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥

पश्यतीति द्रष्टा विवेकी यदा विद्याविद्यावस्थायां गुणेभ्यः सत्त्वादिगुणेभ्यः सकाशात् अन्यं अपरं कर्त्तारं करोतीति कर्त्ता तं कर्त्तारं नानुपश्यति नावलोकयति। अपि तु गुणा एव कर्माणि कुर्वंति आत्मा न करोति इति विचारेण आलोचयति। चेत्यपरं गुणेभ्यः सत्त्वादिगणेभ्यः परं आत्मानं विलक्षणं अकर्त्तारं वेत्ति जानाति। गुणसाक्षिणं जानातीति भावः। सः आत्मानात्मदर्शी मद्भावं मम भावः मद्गतधर्मः मद्भावः तं मद्भावं मद्रूपतां प्रत्यग्ब्रह्मैक्यलक्षणां अधिगच्छति प्राप्नोति। मामेव प्रविशतीति भावः ॥ १९ ॥ मद्भावं गच्छति इति उक्तं तदेव दर्शयति। गुणानेतानिति। देही देहोऽस्यास्तीति देही विवेकी एतान् प्रकृतान् गुणान् सत्त्वादीन् अतीत्य अतिक्रम्य अनात्मत्वेन त्यक्त्वा जन्ममृत्युजरादुःखैः जन्म च मृत्युश्च जरा च दुःखं च जन्ममृत्युजरादुःखानि तैः जन्म जनकजननीरेतोसृग्धारोत्पत्तिः। मृत्युः शरीरवियोगः। जरा वलीपलितश्वेतालकालंकारवती। दुःखं आध्यात्मादिभेदभिन्नम्। जन्ममृत्युजरादुःखैः विमुक्तः सन् जीवन् असंस्पृष्टः सन् प्रारब्धकर्मणि क्षीणे सति अमृतं जन्ममरणरहितं स्वस्य वास्तवं रूपं ब्रह्म अश्नुते प्राप्नोति। तद्रूपो भवतीत्यर्थः। कथंभूतान् गुणान्। देहसमुद्भवान् गुणत्रयकार्यत्वात् देहस्य समुद्भवो येभ्यस्ते देहसमुद्भवाः तान् यद्वा बीजतरुन्यायेन अन्योन्यहेतुत्वात् देहात् समुद्भवो प्रादुर्भावो येषां ते देहसमुद्भवाः तान् देहसमुद्भवान् ॥ २० ॥ गुणातीतः स्वरूपं भजते

अर्जुन उवाच ।

कैर्लिंगैस्त्रीन् गुणानेतानतीतो भवति प्रभो ।
किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्त्तते ॥ २१ ॥

श्रीभगवानुवाच ।

प्रकाशं च प्रवृत्तिं च मोहमेव च पांडव ।

इति उक्तं श्रुत्वा अर्जुनः तल्लक्षणाचारोपायं जिज्ञासुः सन् पृच्छति । कैरिति । हे प्रभो हे सर्वसमर्थ! देही कैः कतरद्भिः लिंगैः लीनं अज्ञातं गमयंति ज्ञापयंति तानि लिंगानि तैः लिंगैः लक्षणैः एतान् प्रस्तुतान् त्रीन् गुणान् सत्त्वादीन् अतीतः अतिक्रम्य वर्तत इति अतीतः वर्त्तमानः भवति । इति ज्ञायते इति शेषः । किंच किमाचारः सन् कः आचारो यस्य सः किमाचारः कथं केनोपायेन एतान् सत्त्वादीन् त्रीन् गुणान् अतिवर्तते अतिक्रम्य वर्त्तनं करोति एतत् मह्यं कथय । त्वदन्यः कः कथयिष्यति अपितु न कोपीत्यर्थः ॥ २१॥
गुणातीतलक्षणं सुगोप्यमपि प्रेमभक्तप्रार्थनासहिष्णुतया प्रश्नोत्तराननुक्रामति । हे पार्थ ! उपायपूर्वकं उपेयं वक्तव्यं इति न्यायेपि स्वत्प्रश्नानुरोधेन प्रथमं गुणातीतलक्षणं शृणु । प्रकाशमित्यादिना । हे पांडव हे पंडुपुत्र! यः यतिः प्रकाशं स्वच्छत्वात् ज्ञानकार्यं सत्त्वगुणं चेत्यपरं प्रवृत्तिं प्रवृत्तिस्वभावत्वात् रजोगुणं चेत्यपरं मोहं अविवेकमूलत्वात् तमोगुणं इमानि प्रकाशादीनि गुणकार्याणि मम असंस्पृष्टानि इति ज्ञात्वा किंच रजस्तमःकार्याणि प्रवृत्तिमोहादीनि मनोधर्मकाणि प्रवृत्तानि मनसि आविर्भूतानि मम अनिष्टकराणि अकल्याणकराणि किमर्थं प्रवृत्तानि इति विविक्तज्ञानेन न द्वेष्टि तथा सत्त्वकार्याणि प्रकाशा-

न द्वेष्टि संप्रवृत्तानि न निवृत्तानि कांक्षति ॥ २२ ॥
उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्त्तंत इत्येव योऽवतिष्ठति नेंगते ॥ २३ ॥
समदुःखसुखः स्वस्थः समलोष्टाश्मकांचनः ।

दीनि निवृत्तानि निवृत्तिं गतानि मोहादिनिरासाय न कांक्षति तन्निरसनेन मम कल्याणं भवतु इति नेच्छति सः गुणातीतः उच्यते इति चतुर्थेनान्वयः ॥ २२ ॥ ननु—इदं स्वसंवेद्यलक्षणं परेण मादृशेन ज्ञातुं शक्यं इत्याशंक्य तस्य परसंवेद्यस्य लक्षणं वक्तुं किमाचारः इत्यस्य उत्तरमाह । उदासीन इति । यः यतिः परगृहवासी पांथः तद्गृहकार्येषु उदासीनवत् उदासीनेन तुल्यं उदासीनवत् उदासीन इव आस्ते । किंच गुणारंभके शरीरे उदासीन इव आस्ते । उदासीनस्य चिह्नं उच्यते । यः यतिः गुणैः प्रकाशादिभिः वा सुखदुःखादिभिः न विचाल्यते चलितो न भवति हर्षविषादादिकृतां मुखनेत्रादिविक्रियां न भजते । किंतु गुणा एव सत्त्वादय एव वर्तंते वर्तनं कुर्वंति न तु अहं इति । एवं प्रकारेण यः यतिः अवतिष्ठति स्वरूपेण निश्चलः तिष्ठति सः यतिः नेंगते स्वरूपं विहाय गुणतादात्म्यं न गच्छति । यत्तदोर्नित्यः संबंधः ॥ २३ ॥ किंच ततोपि परसंवेद्यलक्षणं अनुवदति । समदुःख इति । कथंभूतः यः । समदुःखसुखः दुःखं प्रतिकूलं च सुखं अनुकूलं दुःखसुखे समे प्रातिभासिकस्वरूपे मिथ्यात्वेन तुल्ये दुःखसुखे यस्य सः समदुःखसुखः । तत्र हेतुः—स्वस्थः स्वे स्वरूपे तिष्ठतीति स्वस्थः स्वरूपात् अप्रच्युतस्वभावः अत एव स्वरूपातिरिक्तं न किमपि सत्यमिति दर्शनात् । समलोष्टाश्मकांचनः लोष्टं पांसुपिंडः च अश्मा पाषाणः च कांचनं सुवर्णं लोष्टा-

तुल्यप्रियाप्रियो धीरस्तुल्यनिंदात्मसंस्तुतिः ॥ २४ ॥
मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारंभपरित्यागी गुणातीतः स उच्यते ॥ २५ ॥
मां च यो व्यभिचारेण भक्तियोगेन सेवते ।

श्मकांचनानि समानि तुल्यानि लोष्टाश्मकांचनानि यस्य सः समलोष्टाश्मकांचनः। तथा तुल्यप्रियाप्रियः प्रियं प्रीतिविषयं च अप्रियं तद्विपरीतं प्रियाप्रिये तुल्ये आत्मत्वेन समे प्रियाप्रिये यस्य सः तुल्यप्रियाप्रियः। तत्र हेतुः धीरः धीमान् ज्ञानी। पुनः कथंभूतः यः। तुल्यनिंदात्मसंस्तुतिः आत्मनः संस्तुतिः आत्मसंस्तुतिः निंदा च आत्मसंस्तुतिश्च निंदात्मसंस्तुती तुल्ये निदात्मसंस्तुती यस्य सः तुल्यनिदात्मसंस्तुतिः आत्मानुसंधानात् निंदास्तुत्यादेः कुतोनुसंधानं स्यादित्यर्थः॥ २४ ॥ मानापमानयोरिति। किंच। पुनः कथंभूतः यः। मानापमानयोः मानः पूजा च अपमानः तिरस्कारः मानापमानौ तयोः तुल्यः समः प्राकृतपुरुषैः मानापमानौ शरीरं अनुलक्ष्य क्रियेते मानापमानाभ्यां मम किं इति अभिप्रायेण चेत्यपरं समाधानात् तुल्यः। तथा मित्रारिपक्षयोः अरीणां शत्रूणां पक्षः अरिपक्षः मित्रं च अरिपक्षश्च मित्रारिपक्षौ तयोः मित्रारिपक्षयोः तुल्यः समः। पुनः कथंभूतः यः। सर्वारंभपरित्यागी सर्वे च ते आरंभाश्च सर्वारंभाः सर्वारंभान् कार्योद्यमान् परित्यक्तुं शीलं यस्य सः सर्वारंभपरित्यागी। एवं उक्तविशेषणैः यः पुरुषः युक्तः भवति सः पुरुषः गुणातीतः उच्यते कथ्यते ॥ २५ ॥ इदानीं कथं चैतान् त्रीन् गुणान् अतिवर्तते इत्यस्य उत्तरं एकेन श्लोकेनाह। मां चेति। यः यतिः अव्यभिचारेण न विद्यते व्यभिचारो भेदः यस्य सः अव्यभिचारः तेन भक्तियोगेन सप्रेमाखंडैकरसवाक्यार्थज्ञानेन मां ब्रह्मरूपं परमेश्वरं नारायणं सेवते भजते सः यतिः एतान् सत्त्वादीन् गुणान् अतीत्य

स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ २६ ॥
ब्रह्मणो हि प्रतिष्ठाहममृतस्याऽव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकांतिकस्य च ॥ २७ ॥

इति श्रीमद्भगवद्गीतासू० गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

अतिक्रम्य प्रत्यग्दृष्ट्या पराग्भूतान् कृत्वा ब्रह्मभूयाय ब्रह्मभावाय कल्पते योग्यो भवति ॥ २६ ॥ ननु—यो मां तीव्रेण भक्तियोगेन भजति सः मद्भजनसामर्थ्यात् गुणान् अतिहाय ब्रह्मरूपो भवति । कथं अन्यभजनेन अन्यप्राप्तिः इत्याशंक्य अहमेव सर्वात्मकं ब्रह्म इत्युपलक्षणत्वेन अध्यायार्थं उपसंहरति। ब्रह्मणोहमिति। अहं त्वदुपदेष्टा ब्रह्मणः सत्यज्ञानादिलक्षणस्य प्रतिष्ठा प्रतिरूपं तिष्ठतीति प्रतिष्ठा प्रतिमा अस्मि। यत् सत्यज्ञानानंतादिरूपं सर्वात्मकं अव्यक्तं ब्रह्म तदेवाहं मूर्तिमान्। यथा सर्वावभासकं महाभूततेजोराशिसूर्यमंडलं तद्वदहं ब्रह्मणः प्रतिष्ठानीभूता प्रतिमेत्यर्थः । तथा अमृतस्य मोक्षस्य अहं प्रतिष्ठा स्वरूपं अस्मि । हीति निश्चयेन । कथंभूतस्य अमृतस्य । अव्ययस्य न विद्यते व्ययो कालत्रयेपि नाशः यस्य सः अव्ययः तस्य। चेत्यपरं तथा शाश्वतस्य शश्वत् निरंतरं भवः शाश्वतः तस्य शाश्वतस्य शश्वत्स्वभावस्य धर्मस्य शुद्धसत्त्वात्मकस्य प्रतिष्ठा प्रतिमा अहं अस्मि। हीति निश्चयेन । चेत्यपरं तथा ऐकांतिकस्य निरतिशयस्य मानुषादिब्रह्मांतातिशयरहितस्य सुखस्य परमानंदस्य अहं प्रतिष्ठा स्वरूपं अस्मि। 'ब्रह्मणो हि प्रतिष्ठाहम्' इत्यनेन ब्रह्मपदं लक्षितम्।'अव्ययस्यामृतस्य' इत्यनेन ज्ञानपदं लक्षितम्। 'शाश्वतस्य च धर्मस्य' इत्यनेन सत्यपदं लक्षितम्। 'सुखस्यैकांतिकस्य' इत्यनेन अनंतपदं लक्षितम्। 'सत्यं ज्ञानमनंतं ब्रह्म' इति श्रुतेः ॥२७॥ ॥ इति श्रीबालबोधिन्यां श्रीमद्भगवद्गीताटीकायां चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीभगवानुवाच ।

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छंदांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥

श्रीः । वैराग्येण विना ज्ञानं न च भक्तिरतः स्फुटम् । वैराग्योपस्कृतं ज्ञानमीशः पंचदशेऽदिशत् ॥ १ ॥ परमेश्वरं एकांतभक्त्या भजतः पुंसः तत्प्रसादात् लब्धज्ञानेन ब्रह्मभावो भवति इति उक्तम् । अविरक्तस्य एकांतभक्तिः चेत्यपरं ज्ञानं न संभवति । अतः वैराग्यपूर्वकं ज्ञानं उपदेष्टुकामः भगवान् प्रथमं संसारस्वरूपं वृक्षालंकारेण वर्णयति । ऊर्ध्वमूलमिति । सर्वज्ञाः संसारं अश्वत्थं श्वः प्रभातपर्यंतं तिष्ठतीति श्वत्थः न श्वत्थः अश्वत्थः तं अश्वत्थं प्राहुः वदंति । यथा अश्वत्थं कुठारेण तक्षा छिनत्ति तथा संसारवृक्षोपि कालेन प्रतिक्षणं च्छिद्यमानं मत्वा नश्वरभावेन अश्वत्थ इति कथ्यते । कथंभूतं अश्वत्थम् । ऊर्ध्वमूलं ऊर्ध्वे सर्वोत्कृष्टे ब्रह्मणि मूलं यस्य सः ऊर्ध्वमूलः तं अथवा ऊर्ध्वं सर्वोत्कृष्टं क्षराक्षराभ्यां विलक्षणं ब्रह्म मूलं यस्य सः ऊर्ध्वमूलः तम् । साधारणवृक्षः कदाचित् उन्मूलितः सन् शुष्यति अयं तु न तथा । व्यापकब्रह्ममूलत्वात् । ऊर्ध्वमूलोपि तत्त्वज्ञानं विना न शुष्यतीति भावः । पुनः कथंभूतं अश्वत्थम् । अधःशाखं अधः तस्मात् ब्रह्मणः अर्वाचीनाः कार्योपाधयः हिरण्यगर्भादयः शाखाः यस्य सः तं अधःशाखम् पुनः कथंभूतम् । अव्ययं प्रवाहरूपेण अविच्छेदेन कालत्रयेपि नाशशून्यम् । छंदांसि ऋगादयः त्रयो वेदाः यस्य ऊर्ध्वमूलोधःशाखस्य अश्वत्थस्य पर्णानि धर्माधर्मप्रतिपादनद्वारेण छायास्थानीयकर्मफलैः संसारवृक्षस्य सर्व-

अधश्चोर्ध्वं प्रसृतास्तस्य शाखा
गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसंततानि
कर्मानुबंधीनि मनुष्यलोके ॥ २ ॥

जीवाश्रयत्वेन पर्णानि संति । यः पुरुषः तं एवंभूतं अश्वत्थं वेद जानाति सः पुरुषः वेदवित् वेदार्थवित् भवति । कः वेदार्थः? । संसारवृक्षस्य मूलं ईश्वरः श्रीनारायणः शाखाः नारायणांशभूताः ब्रह्मादयो देवाः प्रवाहरूपेण नित्यः वेदोक्तैः कर्मफलैः सेव्यतां प्राप्तः । अयं वेदार्थः । एवं यः विद्वान् सः वेदवित् इति स्तूयते ॥ १ ॥ पुनरपि तरुवैलक्षण्यं द्योतयति । अधश्चोर्ध्वमिति । तस्य च उक्तस्य अश्वत्थवृक्षस्य अधः अधस्थानीयाः शाखाः अधस्थानीयतया उक्ताः हिरण्यगर्भादयः तेभ्यः हिरण्यगर्भादिभ्यः निकृष्टाः पापकर्माणः पश्वादियोनिषु गताः प्रसृताः विस्तारं गताः संति । चेत्यपरं तस्य अश्वत्थस्य ऊर्ध्वं ऊर्ध्वस्थानीयाः शाखाः तेभ्यः हिरण्यगर्भादिभ्यः सुकृतिनः देवादियोनिषु गताः प्रसृताः विस्तारं गताः संति । शाखोपशाखाः संसारवृक्षस्य अधश्चोर्ध्वं विस्तारं गता इत्यर्थः । कथंभूताः शाखाः । गुणप्रवृद्धाः गुणैः सत्त्वादिभिः जलसेचनैरिव प्रवृद्धाः प्रकर्षेण वृद्धिं गताः । पुनः कथंभूताः शाखाः । विषयप्रवालाः विषयाः शब्दस्पर्शरूपरसगंधाः प्रवालाः मनोहरकोमलपल्लवाः यासां ताः विषयप्रवालाः । जलसेचनैः यथा उपशाखाग्राः कोमलतया मनोहरा भवंति तथा शब्दादयः मनोहराः भवंतीत्यर्थः । किंच मुख्यं मूलं सर्वाधारं ऊर्ध्वमेव वर्त्तते ततः अन्यानि मूलानि अधोवर्तीनि संति ।

न रूपमस्येह तथोपलभ्यते
नांतो न चादिर्न च संप्रतिष्ठा ।
अश्वत्थमेनं सुविरूढमूलम्

तानि विरूढानि वटवृक्षवत् अवांतराणि मूलानीत्यर्थः । किंच अधः अधोभागे चशब्दात् उर्ध्वं ऊर्ध्वभागे मूलानि अनु अनुलक्षेण संततानि विरूढानि संति । मुख्यं मूलं ईश्वरः एक एव । इमानि अवांतरमूलानि तत्तद्भोगवासनालक्षणानि । तेषां कार्यमाह । मनुष्यलोके मनुष्याणां लोकः मनुष्यलोकः तस्मिन् कर्मानुबंधीनि कर्म अनुबंधः अनंतरभावि येषां तानि कर्मानुबंधीनि ऊर्ध्वाधोलोकेषु उपभुक्त भोगवासनाभिः कर्मक्षये मनुष्यलोके प्राप्तानां तदनुरूपा कर्मप्रवृत्तिः भवति ॥ २ ॥ ननु -एवं ब्रह्ममूलत्वात् अयं वृक्षः वास्तव एव इत्याशंक्य विवर्त्त-त्वात् अस्य वृक्षस्य वास्तवत्वं न घटते इत्यभिप्रायेणाह । न रूप-मिति । संसारे स्थितैः प्राणिभिः अस्य संसारवृक्षस्य इह मूलका-रणे ब्रह्मणि रूपं स्वरूपं न उपलभ्यते न दृश्यते । भ्रांत्या दृष्टमपि मृषेत्यर्थः । तथा त्वं युक्त्या भावयसि । ततः ब्रह्ममूलत्वाद्धेतोः अस्य संसारवृक्षस्य आदिः परिणामारंभादिवत् उत्पत्तिः नास्ति । किंच अस्य संसारवृक्षस्य उत्पत्तेः अभावात् अंतः नाशः नास्ति । आद्यं-तयोः अभावात् स्वप्नमिव प्रतिष्ठापि स्थितिरपि नास्ति । कथं तिष्ठति इति नोपलभ्यते न दृश्यते । आद्यंतयोः यत् स्वरूपं नास्ति तत् स्वरूपं मध्येपि नास्ति । विवर्त्तत्वात् । रज्वादौ सर्पादिवदित्यर्थः । एवं मृषा चेत् अस्य का भीतिः इति न मंतव्यम् । मिथ्यापि बाल-ग्रहवत् अनर्थाय भवति इत्याशयेन उपायेन च तं वृक्षं उन्मूल्य तदा-

असंगशस्त्रेण दृढेन छित्वा ॥ ३ ॥
ततः पदं तत्परिमार्गितव्यम्
यस्मिन् गता न निवर्तंति भूयः ।

धारः आत्मा अन्वेषणीयः इत्याह । अश्वत्थमिति । विवेकिना एवं प्रकृतं अश्वत्थं श्वः प्रभातपर्यंतं तिष्ठतीति श्वत्थः न श्वत्थः अश्वत्थः तं नश्वरसंसारतरुं असंगशस्त्रेण असंगः स्त्रीपुत्रादिषु संगराहित्यं अहंममतात्यागः शस्त्रमिव शस्त्रं असंगशस्त्रं तेन असंगशस्त्रेण वैराग्येण छित्वा पृथक्कृत्य छेदयित्वा ततः संसारवृक्षच्छेदानंतरं पदं प्रपंचविवर्त्ताधिष्ठानं स्वात्मानं परिमार्गितव्यं अन्वेषणीयम् । कथंभूतं अश्वत्थम् । सुविरूढमूलं सुविरूढं अत्यंतबद्धं मूलं यस्य सः सुविरूढमूलः तम् । कथंभूतेन असंगशस्त्रेण । दृढेन गुरुशास्त्रवाक्येषु दृढविश्वासेन ॥ ३॥ तत इति । विचारवता संसारतरुं छित्वा द्वैधीभावं नीत्वा ततः तस्मात् वैराग्यात् विक्षेपकाभावात् तत् पदं प्रपंचविवर्त्ताधिष्ठानं स्वात्मानं परिमार्गितव्यं परि आसमंतात् अन्वेषणीयम् सामान्यविशेषरूपतया यत् कार्यजातं तत् अस्य विषयं सर्वाधिष्ठानं तद्व्यतिरेकेण किमपि वास्तवं नास्ति इति आलोचनीयम् । विवेकिनः यस्मिन् पदे स्वाध्यस्ताभिमानं त्यक्त्वा गताः संतः निमग्नाः संतः भूयः पुनः न निवर्त्तंते । तस्मात् पदात् परावृत्य पुनः संसारं नानुभवंतीत्यर्थः । यथा सिंधौ सैंधवमिव पुनः न निवर्त्तंते । रज्जौ सर्प इव शुक्तौ रजतमिव । अन्वेषणप्रकारमाह । अहं देहेंद्रियाधारः त्वंपदलक्ष्यः घटाकाशस्थानीयः तमेव परमात्मानमेव महाकाशस्थानीयं तत्पदलक्ष्यम् । किंच आद्यं हिरण्यगर्भादिसंसारस्य मूलकारणं पुरुषं सर्वस्मात् कार्यकारणात् पुरा आस इति पुरुषः तं पुरुषं प्रपद्ये शरणं गतोस्मि ।

तमेव चाद्यं पुरुषं प्रपद्ये
यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥
निर्मानमोहा जितसंगदोषा
अध्यात्मनित्या विनिवृत्तकामाः ।

यथा जलाकाशं घटाकाशे प्रविलाप्य सोपि घटोपाधिविविक्तत्वेन नाम घटच्छिन्नत्वेन महाकाशं भजति । तथा बुद्धौ प्रतिफलितं चैतन्यं प्रतीचि अंतर्गते ब्रह्मणि प्रविलीय तत् प्रत्यक् अंतर्गतं ब्रह्म त्वंपदलक्ष्येन एकतां गतं इति भावयामि । यतः यस्मात् पुरुषात् पुराणी अनादित्वात् चिरंतनी प्रवृत्तिः सृष्टिपरंपरा प्रसृता विस्तारं गता । पूर्वं 'सत्यं ज्ञानमनंतं ब्रह्म' 'यतः प्रवृत्तिः प्रसृता पुराणी' इत्यनेन । 'यतो वा इमानि भूतानि जायंते' इति श्रुतेः ॥ ४ ॥ तत्प्राप्तौ साधनांतराणि दर्शयन् आह । निर्मानमोहा इति । हे अर्जुन! अमूढाः न मूढाः अमूढाः तत्त्वज्ञानिनः तत् प्रसिद्धं अव्ययं कालत्रयेपि नाशशून्यं पदं वैष्णवं पदं गच्छंति इति अन्वयः । कथंभूताः अमूढाः । निर्मानमोहाः मानः देहादौ अहंबुद्धिः च मोहः देहसंबंधिषु ममताकुलता मानमोहौ निर्गतौ मानमोहौ येभ्यस्ते निर्मानमोहाः अत एव जितसंगदोषाः संगस्य दोषः संगदोषः जितः संगदोषो स्त्रीपुत्रादिषु आसक्त्यभिनिवेशः यैस्ते जितसंगदोषाः अत एव अध्यात्मनित्याः आत्मनि प्रत्यग्ब्रह्मरूपिणि अधिकृत्य वर्त्तमानं इति अध्यात्मं अध्यात्मे निवृत्तिशास्त्रे नित्याः परिनिष्ठिताः अध्यात्मनित्याः अत एव विनिवृत्तकामाः विशेषेण निरवशेषतया निवृत्तः रज्जुज्ञानेन सर्प इव दृष्टादृष्टार्थविषयः कामः इच्छा येभ्यस्ते विनिवृत्तकामाः । पुनः कथंभूताः अमूढाः । सुखदुःखसंज्ञैः सुखानि च दुःखानि च

द्वंद्वैर्विमुक्ताः सुखदुःखसंज्ञैः
गच्छंत्यमूढाः पदमव्ययं तत् ॥ ५ ॥
न तद्भासयते सूर्यो न शशांको न पावकः।
यद्गत्वा न निवर्तंते तद्धाम परमं मम ॥ ६ ॥
ममैवांशो जीवलोके जीवभूतः सनातनः।

सुखदुःखानि सुखदुःखानि संज्ञा नाम येषां तानि सुखदुःखसंज्ञानि तैः सुखदुःखसंज्ञैः शीतोष्णादिभिः द्वंद्वैः युगलैः विमुक्ताः विशेषेण मुक्ताः विमुक्ताः रहिताः। अत एव अमूढाः ज्ञानिनः भूत्वा अव्ययं विनाशरहितं पदं सर्वाधिष्ठानं प्रत्यग् अंतर्गतं ब्रह्म गच्छंति तादात्म्येन प्राप्नुवंति। अनुभवंतीति भावः ॥ ५ ॥ तदेव गंतव्यं पदं विशिनष्टि। न तदिति। हे पार्थ! सूर्यः जगत्प्रकाशकारकः तत् पदं न भासयते न प्रकाशयति। तथा शशांकः शशस्य अंकं लांच्छनं यस्य सः शशांकः शशलांच्छनः चंद्रः तत् पदं न भासयते न प्रकाशयति। तथा पावकः सर्वान् पावं पावनं करोतीति पावकः अग्निः तत्पदं न भासयते न प्रकाशयति। अनेन अधिकारिणां सूर्यादीनामपि अविषयं। तत्पदम्। मनुष्याणां अविषयं अस्ति इति किमुवक्तव्यम्?। योगिनः यत् पदं गत्वा प्राप्य न निवर्त्तंते जन्ममरणाभ्यां न योग्याः भवंति तत् धाम मम रूपं अस्ति। कथंभूतं धाम परमं सर्वोत्कृष्टं सूर्यादीनां प्रकाशकारकम् ॥ ६ ॥ पराग्दृष्टित्वेन बहिर्दृष्टित्वेन सूर्यादीनां अधिकारितया वर्त्तमानानां अध्यात्मसंबंधेन संसारांतःपातित्वं भवति। मनुष्याणां संसारांतःपातित्वं भवति इति किमुवक्तव्यम्? इत्याशयेनाह। ममैवांश इति। जीवलोके जीवानां लोकः

मनः षष्ठानींद्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥
शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गंधानिवाशयात् ॥ ८ ॥
श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।

समूहः जीवलोकः तस्मिन् जलोपाधिना निरंशस्य आकाशस्य अंश इव मम निरंशस्य अंशः अंश इव अंशः अविद्यया जीवभूतः सन् जीवत्वेन प्रसृतः सन् मनःषष्ठानि मनः अंतःकरणं षष्ठं येषां तानि मनःषष्ठानि इंद्रियाणि श्रोत्रादीनि तानि इंद्रियाणि पुनः कर्षति पुनः जाग्रत्सृष्ट्यारंभे जीवलोके संसारभोगाय आकर्षति । कथंभूतः जीवः । सनातनः अनादिकालमारभ्य वर्त्तमानत्वात् चिरंतनः । कथंभूतानि इंद्रियाणि । प्रकृतिस्थानि सुषुप्तिप्रलययोः प्रकृतौ स्वकारणे तन्मात्रतया तिष्ठंति तानि प्रकृतिस्थानि सुषुप्तिप्रलययोः सर्वस्य ब्रह्मप्राप्तौ सत्यां पुनः संसारः कथं इत्युच्यते । सत्यम् । सुषुप्तिप्रलययोः ब्रह्मप्राप्तिः किंतु ज्ञानाज्ञानकृतौ संसारमोक्षौ भवतः ॥ ७ ॥ तानि आकृष्य किं करोति इत्यपेक्षायामाह द्वाभ्याम् । शरीरमिति । ईश्वरः शरीरस्वामी जीवः यत् यदा कर्मवशात् शरीरं शरीरांतरं अवाप्नोति प्राप्नोति चेत्यपरं यत् यस्मात् प्राक्तनशरीरात् उत्क्रामति अतिक्रम्य गच्छति । किंच जीवः एतानि मनःषष्ठानि इंद्रियाणि गृहीत्वा याति तैः सह गच्छति । ननु—देहे मृते सति श्रोत्रादीनि तथैव दृश्यंते । कथं तानि गृहीत्वा याति इति । उच्यते । इत्याशंक्य सदृष्टांतमाह । आशयात् गंधाश्रयात् पुष्पात् वायुः गंधान् सुगंधान् गृहीत्वा गच्छति । तथा श्रोत्रादिगोलकाशयात् इंद्रियाण्येव गृहीत्वा गच्छतीत्यर्थः ॥ ८ ॥ कानि तानि मनःषष्ठानि इंद्रियाणि इत्य-

अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥
उत्क्रामंतं स्थितं वापि भुंजानं वा गुणान्वितम् ।
विमूढा नानुपश्यंति पश्यंति ज्ञानचक्षुषः ॥ १० ॥
यतंतो योगिनश्चैनं पश्यंत्यात्मन्यवस्थितम् ।

पेक्षायां तदभिधानपूर्वकं तत्प्रयोजनं आह । श्रोत्रमिति । अयं जीवः श्रोत्रं शब्दोपलब्धिकरणं इंद्रियं चेत्यपरं चक्षुः रूपोपलब्धिकरणं इंद्रियं चेत्यपरं स्पर्शनं त्वगिंद्रियं चेत्यपरं रसनं जिह्वेंद्रियं चेत्यपरं घ्राणं गंधोपलब्धिकरणं इंद्रियं चेत्यपरं मनः अंतःकरणं मनःषष्ठानि इमानि पंच ज्ञानेंद्रियाणि अधिष्ठाय आश्रित्य विषयान् शब्दस्पर्शरूपरसगंधान् उपसेवते तत्तदिंद्रियद्वारा मनोरथेन आगत्य उपभुंक्ते॥९॥ननु-एवं सति सर्वेपि कार्यकारणविलक्षणं आत्मानं किं न पश्यंति इत्याशंक्याह । उत्क्रामंतमिति । हे अर्जुन ! विमूढाः विशेषेण मूढाः पामराः विमूढाः बहिर्दृष्टयः जीवभूतं ममांशं नानुपश्यंति नावलोकयंति । के पश्यंति इत्यपेक्षायामाह । ज्ञानचक्षुषः ज्ञानमेव चक्षुः चक्षुरिंद्रियं येषां ते ज्ञानचक्षुषः विवेकिनः मां सर्वांतरात्मानं पश्यंति अवलोकयंति । कथंभूतं ममांशम् । उत्क्रामंतं उत्क्रामतीति उत्क्रामन् तं उत्क्रामंतं प्रारब्धकर्मणि क्षीणे सति पूर्वं शरीरं विहाय शरीरांतरं गच्छंतं अथवा स्थितं तस्थौ इति स्थितः तं स्थितं तस्मिन्नेव शरीरे तिष्ठंतं अथवा भुंजानं भुनक्तीति भुंजानः तं भुंजानं विषयान् सेवमानं अथवा गुणान्वितं गुणैः सत्त्वादिभिः अन्वितः युक्तः गुणान्वितः तं गुणान्वितं बाह्यांतःकरणैः अवगुंठितम् ॥ १० ॥ 'बहूनां जन्मनामंते ज्ञानवान् मां प्रपद्यते' इति उक्तं आत्मनः दुर्विज्ञेयत्वं तत्प्रकरणात् इदानीं दर्शयति । यतंत इति । योगिनः ब्रह्मात्मदर्शने

यतंतोप्यकृतात्मानो नैनं पश्यंत्यचेतसः ॥ ११ ॥
यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चंद्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२ ॥

एकाग्रचित्ताः एनं स्वात्मानं प्रत्यंचं अंतर्यामिणं पश्यंति अहंब्रह्मास्मीति साक्षात् अनुभवंति । कथंभूताः योगिनः । यतंतः यतंति ते यतंतः प्रयत्नं कुर्वंतः। कथंभूतं एनम् । आत्मनि सर्वस्य आत्मभूते ब्रह्मणि स्थितं तस्थौ इति स्थितः तं स्थितं ऐक्येन वर्त्तमानं महाकाशे घटाकाशमिव । अकृतात्मानः अकृतः विक्षिप्तः आत्मा मनः येषां ते अकृतात्मानः बहिर्दृष्टयः । कथंभूताः अकृतात्मानः । यतंतः अपि प्रयत्नं कुर्वंतः अपि अचेतसः संतः चेतः स्वरूपं विस्मृत्य वर्त्तंत इति अचेतसः एनं स्वात्मानं न पश्यंति साधनाभिनिवेशेन आत्मानं देहं कृतार्थं मन्यन्ते ॥ ११ ॥ अनंतत्वेन निरवयत्वेन तत् पद इदं तत् इति निर्देष्टुं अशक्यत्वात् कार्येण कारणं प्रत्यक्षानुमेयं इति न्यायं अनुस्मृत्य कार्यद्वारा दर्शयति । यदादित्यमिति । यत् प्रसिद्धं आदित्यगतं आदित्ये सूर्ये गतं प्राप्तं आदित्यगतं सूर्यमंडलांतर्वर्ति तेजः प्रकाशनसामर्थ्यं अखिलं समस्तं जगत् स्थावरजंगमात्मकं भासयते प्रकाशयति । किंच चंद्रमसि निशाकरे चंद्रे यत् प्रकाशकरं तेजः चंद्रमंडलांतर्वर्त्ति अस्ति किंच अग्नौ हुतवहे पावके यत् प्रकाशकरं तेजः दाहकशक्तिः अस्ति । हे अर्जुन! त्वं तत् कार्यावभासकं तेजः सूर्यचंद्राग्निगतं तेजः मामकं मम इदं मामकं विद्धि जानीहि । दीपादौ महाभूततेजोवत् तेजः धातुं विनापि सूर्यादीन् प्रकाशयति तत्तेजः सर्वावभासकं तत्पदं मदीयं स्वरूपं जानीही-

गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥१३॥
अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।

ति भावः ॥ १२ ॥ किंच अन्यत् तेजः प्रकाशशक्त्यैव न । किंतु अनंतशक्तित्वेन वर्त्तमानं इत्यभिप्रेत्य काचित् शक्तिः दर्शयति । गामाविश्येति । हे पार्थ! अहं अनंतशक्तिः गां पृथिवीं ओजसा धारणशक्त्या आविश्य प्रविश्य भूतानि चतुर्विधानि भूतानि धारयामि । पृथिवीद्वारा सर्वभूतस्थितिं करोमि । अन्यथा जले प्रक्षिप्तपांसुपिंडवत् विशीर्णा भविष्यति । तथा रसात्मकः रस एव आत्मा स्वरूपं यस्य सः रसात्मा रसात्मा एव रसात्मकः अमृतमयः सोमः औषधिवनस्पतिपतिः चंद्रः भूत्वा तद्रूपेण सर्वाः समस्ताः औषधीः व्रीहियवादीः पुष्णामि तत्तद्वृत्तौ तास्ताः औषधीः अमृतस्राविकिरणैः संवर्धयामि ॥ १३ ॥ एवं उपलक्षणेन आधिदैविकशक्त्युपलक्षितं आत्मानं दर्शयित्वा आध्यात्मिकशक्तिद्वारापि दर्शयति । अहमिति । अहं वैश्वानरः विश्वसंबंधी नरः विश्वनरः विश्वनर एव वैश्वानरः दहनपाचनप्रकाशनशक्तिमान् भूत्वा प्राणिनां प्राणाः येषां संति ते प्राणिनः तेषां प्राणिनां प्राणवतां देहं कार्यकारणसंघातं शरीरं आश्रितः सन् अधिष्ठाय जाठराग्निरूपेण वर्त्तमानः सन् चतुर्विधं चतस्रः विधाः प्रकाराः यस्य तत् चतुर्विधं भक्ष्यभोज्यलेह्यचोष्यभेदेन चतुःप्रकारकं भुक्तं अन्नं अदनयोग्यं पचामि पाकक्रियाशक्त्या परिणामं नयामि । किं तत् चतुर्विधं भक्ष्यं दंतैः अवखंड्य अवखंड्य भक्ष्यते तत् भक्ष्यं अपूपादि । भोज्यं केवलं जिह्वया विलोड्य निगीर्यते तत्

प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥
सर्वस्य चाहं हृदि सन्निविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनं च ।

पायसादि । लेह्यं जिह्वायां निक्षिप्य रसस्वादेन निगीर्यते तत् । खंडशर्करादि । चोष्यं दंष्ट्राभिः निष्पीड्य सारांशं निगीर्य अवशिष्टं त्यज्यते तत् इक्षुदंडादि । कथंभूतः अहम् । प्राणापानसमायुक्तः प्राणः उच्छ्वासकर्मा वायुः च अपानः निःश्वासकर्मा वायुः प्राणापानौ प्राणापानाभ्यां समायुक्तः प्राणापानसमायुक्तः । यथा लोके भस्त्रा पूरितेन वायुना अग्निः प्रदीप्तः सन् स्वकार्यसमर्थो भवति तथा जाठराग्निरपि प्राणापानाभ्यां प्रदीप्तः सन् चतुर्विधं अन्नं पचतीत्यर्थः ॥ १४ ॥ ननु—तवापि अनंतशक्तेः सहायापेक्षा इत्याशंक्य सहायादिषु ममैव शक्तिः इत्यभिप्रायेण सर्वत्र सर्वकार्यजननाकूलशक्ति उपलक्षणत्वेन दर्शयति । सर्वस्येति । सर्वस्य निखिलस्य प्राणिजातस्य हृदि अभ्यंतरे अहं तव सारथिः सन्निविष्टः सम्यक् अंतर्यामिरूपेण निविष्टः प्रविष्टः संनिविष्टः प्रयोज्यप्रवर्त्तकरूपेण अंतर्यामितया प्रविष्टः अस्मि । मां विना किमपि स्वतंत्रं नास्तीत्यर्थः । तदेव संक्षेपेण दर्शयति । मत्त इति । मत्तः अनंतशक्तेः स्मृतिः पूर्वानुभूतिस्मरणं जायते उत्पन्ना भवति इति अध्याहारः । चेत्यपरं सर्वेषु मत्तः अनंतशक्तेः ज्ञानं कर्त्तव्याकर्त्तव्यविषयालोचनं जायते उत्पन्नं भवति । चेत्यपरं अपोहनं तत्प्रमोषः नाम ज्ञानाकर्षणं तदभावः ज्ञानाभावः जायते उत्पन्नं भवतीत्यर्थः । किंच सर्वैः समस्तैः वेदैः कर्मोपासनाज्ञानप्रतिपादकैः निगमैः अहमेव तव सारथिरेव वेद्यः वेदितुं ज्ञातुं योग्यः वेद्यः ज्ञातव्यः अस्मि । कर्मभिः

वेदैश्च सर्वैरहमेव वेद्यो
वेदांतकृद्वेदविदेव चाहम् ॥ १९ ॥
द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।

इंद्रादिरूपेण अहमेव वेद्यः ईज्यः अस्मि । उपासनातादात्म्येन अहमेव वेद्यः ज्ञानेन अंतर्यामितया अहमेव वेद्यः सर्वस्वरूपेण ममैव विद्यमानत्वात् । कर्मभिः चित्तशुद्धिद्वारा उपासनया ऐकाग्र्यं संपाद्य ज्ञानेन अहं आत्मतया वेद्य इत्यर्थः । अहं वेदांतकृत् अस्मि । वेदनेन ज्ञानेन युक्ताः वेदाः वेदा एव अंताः सृष्टिस्थितिसंहारनिर्णयाः वेदांताः वेदांतान् करोतीति वेदांतकृत् । यद्वा वेदैः सर्वार्थप्रकाशकैः अंताः निर्णयाः वेदांताः वेदांतान् कृंतति भिनत्तीति वेदांतकृत् स्वकृतमर्यादासंरक्षणाय पृथक् करोतीति वेदांतकृत् अहमेव । यद्वा वेदाः साधनसाध्यादिविभागेन प्रवृत्तिद्योतकाः च अंताः अविद्यानाशेन तत्कार्यसाधनसाध्यविभागद्योतकाः वेदांताः वेदांतान् कृंतति नाशयति रज्ज्वां सर्पवत् आत्मनि विलापयतीति वेदांतकृत् अहमेव । किंच अहं वेदविदेव वेत्तीति वित् सर्वज्ञः वेदेभ्यः वित् सर्वज्ञः वेदवित् अहं अस्मि ॥ १९ ॥ इदानीं उत्तमाधिकारिणं उद्दिश्य शोधिततत्त्वंपदयोः एकार्थनिष्ठत्वेन स्वरूपलक्षणं दर्शयति त्रिभिः । द्वाविमावितिति । लोके व्यवहारभूमौ इमौ वक्ष्यमाणौ द्वौ द्विसंख्याकौ पुरुषौ स्तः । द्वौ कौ । क्षरः चेत्यपरं अक्षरः तावेव क्षराक्षरावेव विभागेन दर्शयति । उक्तयोः पुरुषयोः मध्ये यः एकः त्वंपदवाच्यः पुरुषः क्षरः परिच्छिन्नोपाधित्वात् क्षरतीति क्षरः सर्वाणि समस्तानि भूतानि ब्रह्मादिस्थावरांतानि शरीराणि

क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७ ॥
यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।

कविभिः इति उच्यते । द्वितीयः तत्पदवाच्यः पुरुषः अक्षरः न क्षरः अक्षरः यद्वा अश्नुते व्याप्नोति इति अक्षरः ईश्वरः कूटस्थः कूटे मायाप्रपंचे तिष्ठतीति कूटस्थः कविभिः इति उच्यते कथ्यते । अनेन तत्त्वंपदयोः सामानाधिकरण्यं उक्तम् ॥ १६ ॥ एवं क्षराक्षराभ्यां तत्त्वंपदगतवाच्यार्थौ अभिधाय नाम्ना कथयित्वा तत्त्यागेन उभयोः लक्ष्यैक्यं दर्शयति । उत्तम इति । उत्तमः उद्गतं तमः रजस्तमोपाधिः यस्मात् सः उत्तमः पुरुषः पुरा आस इति पुरुषः । यद्वा सर्वस्मात् पूर्वविद्यमानत्वात् पूर्णत्वात् आस इति पुरुषः अन्य एव तत्त्वंपदवाच्योपाधिभ्यां विलक्षणः अस्ति । श्रुतिभिः परमात्मा परमश्चासौ आत्मा च परमात्मा इति उदाहृतः कथितः । आत्मत्वेन क्षरात् अचेतनात् विलक्षणः परमत्वेन अक्षरात् चेत्यपरं भोक्तुः विलक्षण इत्यर्थः । परमात्मत्वमेव दर्शयति । यः परमात्मा लोकत्रयं लोकानां स्वर्गादीनां त्रयं लोकत्रयं आविश्य सर्पे रज्जुरिव सत्तास्फुरणद्वारा प्रविश्य बिभर्त्ति धारयति पोषयति सः ईश्वरः ईशनशीलः ईश्वरः अव्ययः । यद्यपि स्वसत्तया लोकत्रयं आविश्य बिभर्त्ति तथापि स्वरूपेण निर्विकारः ॥ १७ ॥ एवंभूतं पुरुषोत्तमत्वं आत्मनो नामनिर्वचनेन दर्शयति । किंच लोकवेदप्रसिद्धत्वेन स्वस्य सर्वसंबंधराहित्यं दर्शयति । यस्मादिति । यस्मात् कारणात्

अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥
यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।

अहं नित्यमुक्तः उत्तमः सन् उद्गतं तमः रजस्तमोपाधिः यस्मात्सः उत्तमः उपाधिविलक्षणः सन् क्षरं क्षरति तत् क्षरं जडकार्यवर्गं अतीतः अतिक्रम्य गतः असंसर्गत्वेन विद्यमानः अस्मि । चेत्यपरं अक्षरादपि कारणरूपेण व्यापकतया विद्यमानात् ईश्वरभावादपि अतीतः अतिक्रम्य गतः प्राप्तः ईश्वरभावासंस्पृष्टतया वर्त्तमानः अस्मि । अतः अस्मात् कारणात् लोके त्रिलोक्यां चेत्यपरं वेदे सर्वस्मिन् वेदराशौ पुरुषोत्तम इति प्रथितः प्रख्यातः अस्मि । क्षराक्षराभ्यां विलक्षणत्वेन पुरुषोत्तम इति ॥ १८ ॥ ननु—एवं सर्वजनोपि पुरुषोत्तमं त्वां ज्ञात्वा देवतांतरं विहाय किमिति त्वामेव न भजति ? इत्याशंक्य असंभावनाविपरीतभावनाभ्यां अभिभूतत्वात् सर्वस्य क्षुद्रविषयाकृष्टचेतस्त्वात् मद्भजने प्रवृत्तिर्न स्यात् इति केचिद्भाग्योदयेन ताभ्यां अनभिभूतस्य सर्वप्रकारेण मद्भजने प्रवृत्तिः स्यात् इति अभिप्रायेणाह । यो मामिति । हे भारत! हे भरतवंशोद्भव! यः कश्चित् मत्कृपयैव भाग्यवान् मद्रूपगुरूपदिष्टेर्थे संशयविपर्ययज्ञानरहितः एवं उक्तप्रकारेण क्षराक्षराभ्यां विलक्षणत्वेन असंमूढः सन् सम्यक् मूढः संमूढः अत्यंतचंचलमतिः संमूढः न भवतीति असंमूढः निश्चितमतिः सन् मां पुरुषोत्तमं उद्गतं गतं तमः रजस्तमोपाधिः यस्मात्सः उत्तमः पुरा पूर्वं आस इति पुरुषः पुरुषश्चासौ उत्तमश्च पुरुषोत्तमः तं पुरुषोत्तमं जानाति असंभावनाविपरीतभावनाराहित्येन साक्षात् पश्यति सः मद्भक्तः सर्ववित् सन् सर्वं मद्व्यतिरेकेण ईषदपि नास्ति इति

स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥
इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥२०॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु० पुराणपुरुषोत्तमयोगो नाम पंचदशोऽध्यायः॥१५॥

वेत्तीति सर्ववित् सर्वज्ञः सन् सर्वभावेन सर्वेषु ब्रह्मादिस्तंबपर्यंतेषु सत्तारूपेण वर्त्तत इति सर्वभावः तेन सर्वभावेन मां पुरुषोत्तमं भजति। अनन्यत्वेन मां सेवते इत्यर्थः। भारतेति संबोधनेन शुद्धवंशत्वात् तत्रापि अत्र अधिकारः अस्ति इति ध्वनितम् ॥ १९ ॥ अध्यायार्थं शास्त्रसमाप्तिद्योतनार्थं चोपसंहरति। इति गुह्यतममिति। हे अनघ हे व्यसनशून्य! इति उक्तप्रकारेण मया इदं प्रसिद्धं गुह्यतमं अतिशयेन गुह्यं इति गुह्यतमं गुह्यादपि गुह्यं शास्त्रं शास्त्ररहस्यं तवानुरोधेन उक्तं कथितम्। हे भारत! हे भरतवंशोद्भव! पुमान् एतत् शास्त्रं बुद्ध्वा ज्ञात्वा बुद्धिमान् बुद्धिर्विद्यते यस्य सः बुद्धिमान् तत्त्वज्ञानवान् स्यात् भवेत्। बुद्धिमत्त्वेपि किं स्यात् इत्यत आह। किंच कृतकृत्यः कृतं समाप्तिं गतं कृत्यं कर्म यस्य सः कृतकृत्यः भवति। कर्मभिर्निर्मुक्तो भवतीत्यर्थः। 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इति वचनात्। हे! अनघ! हे भारत! इति संबोधनाभ्यां निष्पापत्वात् शुद्धवंशोत्पन्नस्य तव अग्रे मया उक्तं अन्यस्य अग्रे वक्तव्यं इति संकल्पयितुं अयोग्यं इति सूचितम् ॥ २० ॥ मूलाज्ञाने वर्धतेऽश्वत्थवृक्षो ज्ञाते तस्मिन् लीयते स्थाणुपुंवत्। इत्येवं यत् सर्वशास्त्रार्थसारं येनावादि श्रीहरिं तं नमामि ॥ १ ॥ संसारशाखिनं छित्वा स्पष्टं पंचदशे प्रभुः। पुरुषोत्तमयोगाख्ये परं पदमुपादिशत् ॥ २ ॥ ॥ इति श्रीबालबोधिन्यां श्रीमद्भगवद्गीताटीकायां पंचदशोऽध्यायः ॥ १५ ॥

श्रीभगवानुवाच ।

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥१॥

श्रीः । पूर्वाध्यायारंभे 'ऊर्ध्वमूलमधःशाखमश्वत्थं' इति संसारवृक्षो वर्णितः। दैवासुरसंपद्धेतुकयोः मोक्षसंसारवृक्षयोः क्रमेण उपादानहान-[ग्रहणनाशन]नियमार्थं षोडशारंभः। तत्र तावत् महाफलत्वेन अभिमतां दैवीं संपदं आह। अभयमिति। हे भारत! यथा राजानं अनुवर्त्तमानस्य पुंसः तत्परिचारकाः राजसेवकाः आनुकूल्यत्वेन वर्त्तंते। तथा दैवीं देवस्य स्वयंप्रकाशस्य इयं दैवी तां दैवीं संपदं संपादनहेतुभूतां शुद्धसात्त्विकवृत्तिं अभिजातस्य रेतसः सेककाले जननीजनकशुद्धसत्त्ववृत्तिं अनुलक्षेण उत्पन्नस्य स्वजन्मांतरशुद्धविद्यादिसंस्कारं अभिजातस्य एतानि अभयादीनि षड्विंशतिलक्षणानि अनायासेन भवंति इति तृतीयेनान्वयः। एतानि कानि। अभयं न विद्यते भयं यस्य तत् अभयं साधारणतया लौकिके कर्मणि वा वैदिके कर्मणि यथावत् यथाशास्त्रं क्रियमाणे सति भयाभावः। चेत्यपरं सत्त्वसंशुद्धिः सत्त्वस्य अंतःकरणस्य संशुद्धिः असत्पथविमुखता चेत्यपरं ज्ञानयोगव्यवस्थितिः ज्ञानस्य आत्मज्ञानस्य योगः प्राप्तिः ज्ञानयोगः ज्ञानयोगे व्यवस्थितिः परिनिष्ठता ज्ञानयोगव्यवस्थितिः चेत्यपरं दानं दीयते तत् दानं प्राप्तस्य द्रव्यादेः यथासंविभागेन त्यागः किंच सर्वभूतानां अभयदानं किंच स्वभोज्यस्य अन्नादेः यथोचितसंविभागः चेत्यपरं दमः इंद्रियाणि दमयतीति दमः निषिद्धविषयेभ्यः बाह्येंद्रियाणां उपरमः चेत्यपरं यज्ञः यथाधिकारं प्राप्तं स्वधर्मानुष्ठानं किंच यथाधिकारं दर्शपूर्णमासादिः चेत्यपरं स्वाध्यायः

अहिंसा सत्यमक्रोधस्त्यागः शांतिरपैशुनम् ।
दयाभूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥२॥
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।

ब्रह्मयज्ञादिः चेत्यपरं तपः कृच्छ्रचांद्रायणादि किंच मनसः इंद्रियाणां ऐकाग्र्यं चेत्यपरं आर्जवं ऋजोर्भावः आर्जवं अवक्रता किंच अंतर्बहिः कापट्यव्यवहाराभावः ॥ १ ॥ अहिंसेति । किंच अहिंसा न हिंसा अहिंसा यज्ञार्थहिंसातिरेकेण वाङ्मनःकायजन्यपीडाराहित्यं किंच सत्यं यथादृष्टार्थसंभाषणं किंच अक्रोधः न क्रोधः अक्रोधः ताडितस्यापि चित्तक्षोभानुत्पत्तिः आरक्तवक्त्रनेत्रगात्रकंपनादिराहित्यं चेत्यपरं त्यागः कर्मणां फलत्यागः वा औदार्यं चेत्यपरं शांतिः अंतःकरणविकारोपरमः चेत्यपरं अपैशुनं पिशुनस्य परगुणदोषाविष्करणस्य भावः पैशुनं न पैशुनं अपैशुनं परगुणदोषराहित्यं च भूतेषु चतुर्विधभूतेषु दया कारुण्यं चेत्यपरं अलोलुप्त्वं न लोलुप्त्वं अलोलुप्त्वं सर्वपदार्थेषु कार्पण्यपरित्यागः च मार्दवं मृदोर्भावः मार्दवं मनोवाक्कायव्यापारेषु संकल्पवचनकर्मसु काठिन्याभावः च ह्रीः अकार्यप्रवृत्तौ लोकलज्जा शास्त्रलज्जा च अचापलं बहिः अंतःकरणेषु रजोगुणजन्यचापल्याभावः व्यर्थक्रियाराहित्यम् ॥ २ ॥ तेज इति । तेजः स्वधर्मानुष्ठानेन प्रागल्भ्यं चेत्यपरं क्षमा क्षम्यते अनया सा क्षमा कृष्टेपि ताडितेपि सहनशीलता परिभवादिषु उत्पद्यमानक्रोधप्रतिबंधः चेत्यपरं धृतिः दुःखादिभिः अवसन्नचित्तस्य स्थिरीकरणं शौचं बाह्याभ्यंतरशुद्धिः 'मृज्जलैस्तु स्मृतं बाह्यं भावशुद्धिस्तथांतरम्'—इति । अद्रोहः न द्रोहः अद्रोहः परानिष्टकारिमानसवृत्तिविशेषत्यागः चेत्यपरं नातिमानिता अतिमानः सर्वाधिक्यद्योतकः मनोधर्मः विद्यते

भवंति संपदं दैवीमभिजातस्य भारत ॥ ३ ॥
दंभो दर्पोभिमानश्च क्रोधः पारुष्यमेव च।
अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ ४ ॥
दैवी संपद्विमोक्षाय निबंधायासुरीमता।

यस्य सः अतिमानी अतिमानिनः भावः अतिमानिता अतिमानिता न भवति सा नातिमानिता आत्मनि पूज्यत्वाभिमानराहित्यं एतानि दैवीसंपच्चिह्नानि संति। यत्र दैवी संपत् वर्त्तते तत्रैव एतानि चिह्नानि आविर्भवंतीत्यर्थः ॥ ३ ॥ एकस्मिन्नेव मूले दैवासुरसंपद्विभागेन द्विरूपो वृक्षो विरोहति इति उक्तम्। तत्र दैवीसंपद्रूपः वृक्षभेदः निरूपितः। इदानीं अपरं भेदं सूत्रप्रायं अनुवदति। दंभ इति। हे पार्थ! आसुरीं असुषु इंद्रियेषु प्राणेषु विषयसुखलाभाय रमंति ते असुराः असुराणां इयं आसुरी तां आसुरीं संपदं असुरयोनिप्राप्तिहेतुभूतां अभिजातस्य अनुलक्ष्य उत्पन्नस्य एतानि दंभादीनि चिह्नानि भवंति इति शेषः। एतानि कानि। दंभः धर्मध्वजित्वं चेत्यपरं दर्पः धनविद्यादिनिमित्तेन परावमानहेतुः चेत्यपरं अभिमानः अहमेव ज्ञानी धार्मिकः अहमेव दानशूरः इति अभिनिवेशः चेत्यपरं क्रोधः उक्तलक्षणः प्रसिद्धः च पारुष्यं मनोवाक्कायैः सर्वकाठिन्यं च अज्ञानं कार्याकार्याविवेकः एतानि असुरसंपच्चिह्नानि सूत्रप्रायाणि कथितानि ॥ ४ ॥ ननु-एकमूलकः वृक्षः एक एव भवतु कथं तद्द्वैविध्यम्? इत्याशंक्य फलभेदात् वृक्षभेदः इति न्यायेन फलभेदं दर्शयति। दैवीति। दैवी संपत् विमोक्षाय मुक्तये मता मम चेत्यपरं सर्वेषां संमता अस्ति। चेत्यपरं आसुरी संपत् निबंधाय नितरां बंधः

माशुचः संपदं दैवीमभिजातोऽसि पांडव ॥ ५ ॥
द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥६॥
प्रवृत्तिं च निवृत्तिं च जनानविदुरासुराः ।

निबंधः तस्मै निबंधाय अपारसंसारप्राप्तये मता मम च सर्वेषां संमता अस्ति । एवं आसुरी संपत् निबंधाय ममेति श्रुत्वा इंद्रियलालनात् आसुरत्वं अस्माकं राज्ञां नितरां अस्तीति व्याकुलितांतःकरणं अर्जुनं ज्ञात्वा मन्निकटवर्त्तित्वेन हेतुना त्वं दैवी संपदं अभिजातोस्मि इति विश्वासं कुरु इति अभिप्रायेणाह । हे पांडव ! त्वं दैवीसंपदं अभिजातोसि । त्वं मां निरंतरत्वेन सर्वदा वर्त्तसे अनेनैव आत्मानं दैवी संपदं अनुलक्ष्य जातोस्मीति मन्यमानः सन् मा शुचः शोकं मा कार्षीः ॥५ ॥ उक्तं संसारभेदं अनूद्य विस्तरेण उक्तं दैवीसंपद्विभागं उपसंहृत्य असुरसंपद्विभागं विस्तरेण त्यागाय मत्तः शृणु इति आह । द्वाविति । हे पार्थ! हे अर्जुन ! अस्मिन् प्रत्यक्षत्वेन वर्त्तमाने श्रुतदृष्टे लोके लोक्यत इति लोकः तस्मिन् लोके भूर्भुवःस्वरात्मकलोके द्वावेव द्विसंख्याकावेव भूतसर्गौ सृज्येत इति सर्गौ भूतानां प्राणिमात्राणां सर्गौ जन्मप्रकारौ स्तः इति शेषः । द्वौ कौ दैवः दैवसर्गः चेत्यपरं आसुरः आसुरसर्गः । हे पार्थ! मया दैवः सर्गः 'अभयं सत्त्वसंशुद्धिः' इत्यादिना विस्तरशः विस्तरेण प्रोक्तः कथितः । इदानीं त्वं सूत्रप्रायस्य 'दंभो दर्प' इत्यादिना उक्तस्य वृत्तिस्थानीयं आसुरं आसुरसर्गं विस्तरशः विस्तरेण मे मत्तः शृणु ॥ ६ ॥ तमेव आसुरविस्तरं ' प्रवृत्तिमित्यादिना ' प्रद्विषंतोऽभ्यसूयका' इत्यंतेन ग्रंथेन अनुवदति द्वादशभिः

न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥७॥
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ ८ ॥
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः।

श्लोकैः प्रवृत्तिमिति असुराः जनाः प्रवृत्तिं धर्मे प्रवर्तनं चेत्यपरं निवृत्तिं अधर्मात् निवर्त्तनं न विदुः न जानंति। अतः हेतोः तेषु असुरस्वभावेषु जनेषु शौचं प्रवृत्तिनिवृत्तिशौचाचारः न विद्यते नास्ति। चेत्यपरं सत्यं यथार्थभाषणं न विद्यते चेत्यपरं तेषु असुरेषु आचारः शास्त्रप्रणीतः धर्मः न विद्यते नास्ति ॥ ७ ॥ तेषु सत्याचारौ न स्तः इति उक्तं प्रपंचयति। असत्यमिति। ते असुराः जगत् प्राणिजातं असत्यं नास्ति सत्यं वेदपुराणादिप्रमाणं यस्मिन् तत् असत्यं आहुः वदंति। वेदादीनां प्रामाण्यं न मन्यंते इत्यर्थः। तदुक्तम्। 'त्रयो वेदस्य कर्त्तारो मुनिभंडनिशाचराः'। अत एव अप्रतिष्ठं नास्ति प्रतिष्ठा धर्माधर्मरूपा व्यवस्था यस्य तत् अप्रतिष्ठं स्वाभाविकं जगत् आहुः वदंति। अत एव अनीश्वरं नास्ति ईश्वरः कर्त्ता व्यवस्थापकः यस्य तत् अनीश्वरं जगत् आहुः। तर्हि कुतोस्य जगतः उत्पत्तिं वदंति? इति आह। कथंभूतं जगत्। अपरस्परसंभूतं अपरश्च परश्च इति अपरस्परं अपरस्परतः स्त्रीपुरुषमिथुनात् संभूतं उत्पन्नं अपरस्परसंभूतम्। पुनः कथंभूतम्। कामहैतुकं कामः हेतुः यस्य तत् कामहेतुकं कामहेतुकमेव कामहैतुकं स्त्रीपुरुषयोः कामप्रवाहकारणं अन्यत् किम्? न किमस्य कामं विना जन्महेतुरित्यर्थः ॥ ८ ॥ एतामिति। किंच आसुराः असुरस्वभावाः जनाः एतां मिथ्याभूतां दृष्टिं दर्शनं अवष्टभ्य आश्रित्य

प्रभवंत्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥
काममाश्रित्य दुष्पूरं दंभमानमदान्विताः ।
मोहाद्गृहीत्वासद्ग्राहान् प्रवर्तंतेऽशुचिव्रताः ॥ १० ॥

नष्टात्मानः संतः शून्यवादाभिनिवेशेन शून्यसाक्षिणं आत्मानं नष्टयंति नाशयंति ते नष्टात्मानः मलिनचित्ताः संतः। ननु—एतादृशास्ते किमर्थं उत्पद्यंते इत्यत? आह। उग्रकर्माणः उग्रं स्वात्महिंस्रं कर्म येषां ते उग्रकर्माणः भूत्वा जगतः क्षयाय नाशाय प्रभवंति उत्पद्यंते। ननु-अकारणं वैरिणः जगतः ते कथं? इत्याशंक्य यत्र आत्महिंसां कुर्वंति तत्र परहिंसायां का शंका इत्यभिप्रायेणाह। कथंभूता असुराः। अहिताः न विद्यते हितं येषां ते अहिताः स्वमरणं पुरस्कृत्य आत्मवधे प्रवृत्ताः अत एव अल्पबुद्धयः अल्पा बुद्धिर्येषां ते अल्पबुद्धयः स्ववधे शत्रुत्वेन वर्त्तंते। जगतः क्षये तेषां का शंका? इत्यर्थः ॥ ९ ॥ काममिति। किंच असुराः जनाः दुष्पूरं त्रैलोक्यमपि दुःखेन कष्टेन पूरयितुं अशक्यः दुष्पूरः तं दुष्पूरं कामं अभिलाषापरपर्यायं आश्रित्य अवलंब्य दंभमानमदान्विताः संतः दंभश्च कुमारभृगुवसिष्ठप्रवृत्तधर्मं स्वस्मिन् संभाव्य बाह्यरंगाविर्भावरूपः धर्मध्वजः मानश्च अहं धर्मवान् इति अभिमानः दंभमानौ दंभमानाभ्यां मदः कार्याकार्यविवेकः दंभमानमदः दंभमानमदेन अन्विताः युक्ताः दंभमानमदान्विताः मोहात् दंभमानमदमोहात् असद्ग्राहान् असत्सु जारणमारणादिषु ग्राहाः आग्रहाः असद्ग्राहाः तान् असद्ग्राहान् गृहीत्वा स्वीकृत्य प्रवर्त्तंते परमपुरुषार्थत्वेन लोके वर्त्तनं कुर्वंति। कथंभूताः असुराः। अशुचिव्रताः अशुचीनि मद्यमांसादीनि व्रतानि देवतापूजानियमाः येषां ते अशुचिव्रताः ॥ १० ॥ चिंतामिति। किंच कथंभूताः

चिंतामपरिमेयां च प्रलयांतामुपाश्रिताः।
कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११ ॥
आशापाशशतैर्बद्धाः कामक्रोधपरायणाः।

असुराः अपरिमेयां परिमातुं अशक्या अपरिमेया तां अपरिमेयां अपरिमितां चिंतां इदं कृत्वा इदं करिष्यामि इदं कथं भविष्यति इत्यादिरूपां अंतःकरणप्रवृत्तिं उपाश्रिताः आश्रित्य स्थिताः। पुनः कथंभूताः असुराः। कामोपभोगपरमाः काम्यंते इष्यंति इति कामाः शब्दादिविषयाः कामानां उपभोगः प्रीत्या सेवनं कामोपभोगः कामोपभोग एव परमः परमपुरुषार्थः येषां ते कामोपभोगपरमाः। कामोपभोगपरमत्वं तेषामेव दर्शयति। पुनः कथंभूताः। एतावत् कामोपभोग एव पुरुषार्थः नान्यत्किमपि जन्मसाफल्यं इति एवं प्रकारेण निश्चिताः निश्चयः संजातो येषां ते निश्चिताः निश्चयवंतः। कथंभूतां चिंताम्। प्रलयांतां प्रलय एव मरणमेव अंतः पर्यवसानं यस्याः सा प्रलयांता तां प्रलयांताम् ॥११॥ आशापाशशतैरिति। किंच असुरजनाः इति शेषः। कामभोगार्थं कामानां ईप्सितकामानां भोगः विषयसेवनं कामभोगः कामभोगाय इति कामभोगार्थं अन्यायेन चौर्यादिना अर्थसंचयान् अर्थानां द्रव्याणां संचयाः राशयः अर्थसंचयाः तान् अर्थसंचयान् ईहंते इच्छंति। कुर्वंतीत्यर्थः। कथंभूताः असुरजनाः। आशापाशशतैः आशा एव सदसत्पदार्थलिप्सा एव पाशाः बंधनरज्जवः आशापाशाः आशापाशानां शतानि अनेकानि आशापाशशतानि तैः आशापाशशतैः बद्धाः पाशिताः। पुनः कथंभूताः। कामक्रोधपरायणाः कामः विषयाभिलाषः च क्रोधः विषयप्रतिघातः कामक्रोधौ कामक्रोधौ परं गमननिरोधकं

ईहंते कामभोगार्थमन्यायेनार्थसंचयान् ॥ १२ ॥
इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥
असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥ १४ ॥
आढ्योऽभिजनवानास्मि कोन्योस्ति सदृशो मया ।

अयनं आशापाशबंधनस्थानं येषां ते कामक्रोधपरायणाः ॥ १२ ॥ प्रलयांतां अपरिमेयां उक्तां चिंतां प्रपंचयति चतुर्भिः । इदमद्येति । अद्य अधुना मया इदं अर्थजातं लब्धं प्राप्तं अहं इमं काममानं सर्वं प्राप्स्ये प्राप्स्यामि । किंच अपरमपि मनोरथं मनसः प्रियं प्राप्स्ये इदं वर्त्तमानं धनं पदार्थजातं मे मम गृहे अस्ति इदं एतज्जातीयं धनं बहुतरं धनं पुनः भविष्यति ॥ १३ ॥ असाविति । किंच यथा मया असौ शत्रुः वैरी हतः घातितः तथा अहं अपरान् अन्यान् अवशिष्टान् सर्वान हनिष्ये नाशयिष्यामि । ननु—तव किं सामर्थ्यं इत्याशंक्य तत्र करतलेन बाहुस्फोटनं कृत्वा आह । अहं शत्रुहनने ईश्वरः समर्थः अस्मि। किंच अहं अहमेव भोगी भोगो ऽस्यास्तीति भोगी भोगवान् अस्मि । चेत्यपरं अहं सिद्धः कृतार्थः अस्मि । अहमेव बलवान् बलं विद्यते यस्य सः बलवान् शरीरद्रव्यबलेन संपन्नः अस्मि । अहमेव सर्वस्मादपि सुखी सुखमस्यास्तीति सुखी सुखवान् अस्मि ॥ १४ ॥ आढ्येति । किंच अहं आढ्यः धनादिभिः संपन्नः अस्मि । किंच अहं अभिजनवान् अभिजनः पुत्रपौत्रादिजनः विद्यते यस्य सः अभिजनवान् कुलीनः अस्मि ।

यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५ ॥

अनेकचित्तविभ्रांता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतंति नरकेऽशुचौ ॥ १६ ॥

अस्मिन् समये मया सदृशः मत्तुल्यः कः अन्यः पुरुषः अस्ति। अपि तु कोपि नास्ति । इति नेत्रकटाक्षोक्तिः । यस्मात् अहं इदानीं सर्वैः गुणैः चेत्यपरं लौकिकत्वेन संपन्नः अस्मि तस्मात् अहं इदानीं यक्ष्ये सर्वेभ्यः दीक्षितेभ्यः श्रेष्ठत्वाय यज्ञं करिष्यामि । तथा दास्यामि सामान्ययाचकाय चेत्यपरं विशेषयाचकाय देशांतरे कीर्तिविस्ताराय नटविटादिभ्यः अभिप्रेतं इष्टं प्रयच्छामि । ततः यज्ञदानाभ्यां इह अस्मिन् लोके चेत्यपरं परत्र परलोके मोदिष्ये मोदं आनंदं प्राप्स्ये इति एवं प्रकारेण मनोरथेन अभिनिविष्टमनसः सामान्येन अज्ञानविमोहिताः संतः अज्ञानेन गाढाज्ञानेन विमोहिताः अत्यंतं मोहिताः अज्ञानविमोहिताः । अपरिमितां चिंतां प्रापुरित्यर्थः ॥ १५ ॥ तदेव अज्ञानविमोहितत्वं स्फुटयन् अज्ञानफलं अनुवदति। अनेकचित्तविभ्रांता इति । असुराः जनाः कामभोगेषु कामानां इच्छितकामानां भोगाः विषयाः कामभोगाः तेषु कामभोगेषु प्रसक्ताः संतः प्रकर्षेण सक्ताः प्रसक्ताः अभिनिविष्टाः संतः अशुचौ कश्मले नरके ततोपि अधमे नरके पतंति । कथंभूताः असुरजनाः । अनेकचित्तविभ्रांताः अनेकेषु नानामनोरथेषु चित्तं अभिनिविष्टांतःकरणं अनेकचित्तं अनेकचित्तेन नानामनोरथाकृष्टत्वेन पूर्वापरानुसंधानराहित्येन विभ्रांताः विक्षिप्तचित्ताः अनेकचित्तविभ्रांताः अत एव मोहजालसमावृताः मोह एव जालं मोहजालं मोहजालेन समावृताः

आत्मसंभाविताःस्तब्धा धनमानमदान्विताः ।
यजंते नामयज्ञैस्ते दंभेनाविधिपूर्वकम् ॥ १७ ॥
अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।

अत्यंतं गुंफिताः मोहजालसमावृताः यथा यंत्रे आमिषेषु मरणोन्मुखाः मीना इव ॥ १६ ॥ यक्ष्ये दास्यामि इति तेषां मनोरथः उक्तः । तत्कार्यं इदानीं दर्शयति । आत्मसंभाविता इति । ते असुरजनाः दंभेन लोके धर्मध्वजित्वस्थापनहेतुना अविधिपूर्वकं यथास्यात्तथा विधिपूर्वकं यथाशास्त्रं न भवति यस्मिन् कर्मणि यथा भवति तथा अविधिपूर्वकं विधिरहितं नामयज्ञैः नाममात्रेण यज्ञसंज्ञा येषां ते नामयज्ञाः तैः नामयज्ञैः यजंते यज्ञान् ब्राह्मणद्वारा संपादयंति । कथंभूताः ते । आत्मसंभाविताः आत्मनैव संभाविताः आत्मसंभाविताः न तु अन्यैः संभाविताः वयं सर्वेभ्यः श्रेष्ठाः इति संभावनां प्राप्ताः । पुनः कथंभूताः । स्तब्धाः संभावनागर्वोद्रेकेण अनम्राः । पुनः कथंभूताः । धनमानमदान्विताः धनेन मानः अभिमानः धनमानेन मदः स्वनिकृष्टतिरस्कारः धनमानमदेन अन्विताः युक्ताः धनमानमदान्विताः ॥ १७ ॥ अविधिपूर्वकं यजंति इति उक्तं दर्शयति । अहंकारमिति । पुनः कथंभूताः ते । अहंकारं अहमेव यज्ञकर्त्ता इति अहंकरणं चेत्यपरं बलं शिष्टपराभवकरणं च दर्पं क्रूरस्वभावतां च कामं दृष्टादृष्टाभिलाषं च क्रोधं कामप्रतिघातजन्यतीव्राक्रोशवृत्तिविशेषं संश्रिताः अहंकारादीन् आश्रित्य वर्त्तमानाः आत्मपरदेहेषु आत्मदेहः स्वदेहः च परदेहाः अन्यदेहाः आत्मपरदेहाः तेषु आत्मपरदेहेषु मां चिदाभासेन रूपेण वर्त्तमानं परमेश्वरं प्रद्विषंतः प्रकर्षेण द्विषंति ते प्रद्विषंतः द्वेषं कुर्वंतः। पुनः कथंभूताः । अभ्यसूयकाः सन्मार्गवर्त्तिनां गुणेषु दोषारोपकाः

मामात्मपरदेहेषु प्रद्विषंतोऽभ्यसूयकाः ॥ १८ ॥
तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभामासुरीष्वेव योनिषु ॥ १९ ॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।

पश्वादीनां अविधिना हिंसया द्रोहमात्रमेव भवति। 'अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्। असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह' इति ॥१८॥ ये एवंभूताः तेभ्यः कां गतिं ददासि इत्यपेक्षायां सदैव आसुरी-मेव गतिं ददामि इत्याह। तानिति। अहं तान् उक्तप्रकारान् नराधमान् नरेषु परमपुरुषार्थोपयोगित्वेन उत्तमनरजातिषु अधमाः चांडालाः नराधमाः तान् नराधमान् अजस्रं निरंतरं संसारेषु जन्ममृत्युमार्गेषु क्षिपामि अनवरतं संसारं दास्यामि। ननु—शुभकर्मिणामपि संसार-प्राप्तिः भवत्येव इत्याशंक्य तेभ्यः तद्वैलक्षण्यं दर्शयति। आत्मपरदेह-द्वेषत्वात् क्रूरत्वात् नराधमत्वात् तान् पूर्वोक्तान् अशुभान् न विद्यते शुभं कल्याणं येषां ते अशुभाः तान् अशुभान् अमंगलान् आसुरीषु अतिक्रूरासु योनिषु व्याघ्रसर्पादियोनिषु अजस्रं निरंतरं क्षिपामि। न तु देवमनुष्यादियोनिषु इत्यर्थः। कथंभूतान् नराधमान्। आत्मपरदेहेषु मां चिदंशेन वर्त्तमानं द्विषतः द्विषंति ते द्विषंतः तान् द्विषतः अत एव क्रूरान् सर्वत्र आत्मनः मम द्वेषात् क्रूरकर्मणः ॥ १९ ॥ आसुरीयोनिप्राप्तौ का क्षतिरित्याशंक्य तद्गतिमाह। आसुरीमिति। हे कौंतेय! ते असुरजनाः मां परमेश्वरं अप्राप्य मत्प्राप्त्युपायं सन्मार्गं अप्राप्य ततः सन्मार्गाभावात् अधमां अतिनिकृष्टां कृमिकीटादिरूपां वा स्थावरादिरूपां गतिं गम्यत इति गतिः तां गतिं फलं यांति प्राप्नु-

मामप्राप्यैव कौंतेय ततो यांत्यधमां गतिम् ॥ २० ॥
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥२१॥
एतैर्विमुक्तः कौंतेय तमोद्वारैस्त्रिभिर्नरः।

यंति। कथंभूताः ते। जन्मनि जन्मनि प्रतिजन्मनि आसुरीं असुराणां इयं आसुरी तां आसुरीं योनिं मूढयोनिं आपन्नाः प्राप्ताः अत एव मूढाः अविवेकिनः अतः हेतोः आत्मपरदेहेषु मां द्विषंतीत्यर्थः ॥२०॥ आसुरीसंपदः विस्तारं ब्रह्मायुषापि वक्तुं अशक्यमिति मत्वा उक्तानुक्तसंग्रहं त्रिधा राशौ सिद्धवत् कृत्वा आह। त्रिविधमिति नरकस्य नरकप्राप्तेः इदं वक्ष्यमाणं त्रिविधं त्रिप्रकारं द्वारं प्रवेशमार्गः अस्ति। कथंभूतं द्वारम्। आत्मनः स्वस्य नाशनं नाशयति तत् नाशनं नाशकारकं यथा वर्त्तमानस्य सूर्यप्रकाशस्य सर्वोपि त्रिविधः व्यवहारः नेत्रतिमिरं मेघावरणं नीहारः अदर्शनहेतुभूतः। तथा इदमपि त्रिविधं नरकद्वारं आविर्भूतप्रकाशस्य आत्मनः अदर्शनहेतुभूतमित्यर्थः। किं तत् त्रित्रिधम्?। कामः विषयाभिलाषः चेत्यपरं क्रोधः प्रसिद्धः तथा लोभः अधिकतृष्णा तस्मात् कारणात् मुमुक्षुः एतत् प्रसिद्धं त्रयं कामक्रोधलोभात्मकं नरकद्वारं त्यजेत् ॥ २१ ॥ ततः किं स्यात् इत्यपेक्षायां आह। एतैरिति। हे कौंतेय! हे कुंतीपुत्र! नरः पुरुषः एतैः कामादिभिः त्रिभिः त्रिसंख्याकैः तमोद्वारैः तमसः नरकस्य द्वाराणि तमोद्वाराणि तैः तमोद्वारैः नरकप्रवेशमार्गैः विमुक्तः सन् विशेषेण मुक्तः सन् आत्मनः स्वस्य श्रेयः श्रेयःसाधनं तपोयोगादिकर्म कल्याणं आचरति। ततः किं तत्राह। नरः पुरुषः ततः तस्मात्

आचरत्यात्मनः श्रेयस्ततो याति परां गतिम्॥ २२ ॥

यः शास्त्रविधिमुत्सृज्य वर्त्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥२३॥

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।

श्रेयआचरणात् परां श्रेष्ठां गतिं मोक्षाख्यां याति गच्छति प्राप्नोतीति यावत् ॥ २२ ॥ अन्यथा दोषमाह । य इति । यः असुरभावमापन्नः शास्त्रविधिं शास्त्रस्य विधिः शास्त्रविधिः तं शास्त्रविधिं शास्त्रेण कर्त्तव्यतया उपदिष्टं श्रेयोनुष्ठानं उत्सृज्य त्यक्त्वा कामकारतः यथेच्छं वर्त्तते वर्त्तनं करोति सः असुरभावसंपन्नः सिद्धिं कामादित्रयनिरसकद्वारहेतुभूतां चित्तशुद्धिं न आप्नोति न प्राप्नोति । चेत्यपरं सुखं चित्तशुद्ध्यभावेन ऐहिकं निरीहजन्यं अनुकूलसंवेदनीयं आनंदवृत्तिविशेषं सुखं न प्राप्नोति । तथा परां आमुष्मिकीं गतिं गम्यत इति गतिः तां गतिं फलं न प्राप्नोति तत्साधनोपायमपि न प्राप्नोति । तत्र कुतस्तत्प्राप्तिरित्यर्थः ॥ २३ ॥ आस्तां तावत् इतरेषां कथा अस्मिन् समये मया किं कर्त्तव्यं इति साकांक्षं प्रति आह । तस्मादिति । यस्मात् शास्त्रविध्युल्लंघने ऐहिकामुष्मिकविघातः अस्ति तस्मात् कारणात् हे अर्जुन ! ते तव कार्याकार्यव्यवस्थितौ कार्यं इदं कार्यं च अकार्यं इदं अकार्यं कार्याकार्ये कार्याकार्ययोः व्यवस्थितिः व्यवस्था कार्याकार्यव्यवस्थितिः तस्यां कार्याकार्यव्यवस्थितौ शास्त्रं श्रुतिस्मृतिपुराणादिकं प्रमाणं प्रकर्षेण मानं नियामकं प्रमाणं अस्ति । किंच त्वं शास्त्रविधानोक्तं शास्त्रस्य श्रुतिस्मृतिपुराणादिकस्य विधानं यथावर्णाश्रमनिय-

ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्त्तुमिहार्हसि ॥२४॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु० दैवासुरसंपद्विभागयोगो नाम षोडशोऽध्यायः॥१६॥

तात्पर्यः शास्त्रविधानं शास्त्रविधानेन उक्तं कथितं शास्त्रविधानोक्तं कर्म इदानीं प्राप्तं युद्धाख्यं स्वधर्मरूपं कर्म कर्तुं संपादयितुं अर्हसि योग्यो भवसि । अन्यथा शास्त्रोल्लंघनेन असुरभावं प्राप्तस्य तव अनिष्टं स्यात् इत्यर्थः ॥ २४ ॥　॥ दैवासुराभिधानेन ह्यत्यागत्यागपक्षतः । प्रोक्तमेकं फलं येन तस्मै श्रीपतये नमः ॥ १ ॥ इति श्रीबालबोधिन्यां श्रीमद्भगवद्गीताटीकायां षोडशोऽध्यायः ॥१६॥



अर्जुन उवाच।

ये शास्त्रविधिमुत्सृज्य यजंते श्रद्धयान्विताः।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥१॥

श्रीभगवानुवाच।

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा।

श्रीः। अतिक्रम्य नरः शास्त्रं यजति श्रद्धयान्वितः। का तन्निष्ठेति जिज्ञासुर्जिष्णुः कृष्णं स पृच्छति ॥ १ ॥ शास्त्रविधिमुत्सृज्य कामकारं श्रद्धया वर्त्तमानानां किं अधिकारः अस्ति वा नास्ति इति बुभुत्सया पृच्छति। तेषां सा श्रद्धा सात्त्विकी वा राजसी वा तामसी इति भगवंतं अर्जुनः पृच्छति। ये शास्त्रेति। हे कृष्ण! ममाशयसंशयाकर्षणसमर्थ! ये पुरुषाः शास्त्रविधिं शास्त्रस्य विधिः शास्त्रविधिः तं उत्सृज्य दुःखबुद्ध्या वा आलस्येन अनादृत्य श्रद्धया आदरेण अन्विताः संतः युक्ताः संतः अथवा केवलं आचारपरंपरया देवताराधनादौ प्रवर्त्तमानाः संतः यजंते देवतांतराणि पूजयंति तेषां पुरुषाणां निष्ठा यस्यां नितरां तिष्ठंतीति निष्ठा स्थितिः का अस्ति किं सत्त्वं सात्त्विकी देवपूजा वा रजः राजसी पूजा आहो अथवा तमः तामसी पूजा अस्ति इति कथय ॥ १ ॥ तत्रोत्तरं विचार्यमाणे श्रद्धा एकैव गुणभेदेन त्रिधा भवति। कालभेदेन आकाश इव इति अभिप्रायेणाह। त्रिविधेति। देहिनां देहाः येषां संति ते देहिनः तेषां देहिनां देहवतां जीवानां स्वभावजा स्वभावात् पूर्वजन्मगुणसंस्कारात् जाता स्वभावजा सा प्रसिद्धा श्रद्धा भक्तिः त्रिविधा त्रिप्रकारमिति त्रिविधा सत्त्वादिगुणत्रयभिन्नप्र-

सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥२॥
सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥
यजंते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।

कारा भवति । किं तत् त्रैविध्यं सात्त्विकी सत्त्वस्य सत्त्वगुणस्य इयं सात्त्विकी सत्त्वगुणयुक्ता चेत्यपरं राजसी रजसः रजोगुणस्य इयं राजसी रजोगुणयुक्ता चेत्यपरं तामसी तमसः तमोगुणस्य इयं तामसी तमोगुणयुक्ता । हे पार्थ ! त्वं तां त्रिविधोक्तां वक्ष्यमाणां शृणु । शास्त्रतत्त्वज्ञानतः प्रवर्त्तमानानां परमेश्वरपूजां एकविधैव लोकाचारमात्रेण प्रवर्त्तमानानां त्रिविधा श्रद्धा भवति इति तात्पर्यम् ॥ २ ॥ तस्याः एकत्वं अनुवदन् धर्मधर्मिणोः अभेदं दर्शयति । सत्त्वानुरूपेति । हे भारत ! सर्वस्य देहिनः सत्त्वादिगुणयुक्तस्य पुरुषस्य श्रद्धा भक्तिः सत्त्वानुरूपैव सत्त्वमेव सत्त्वगुण एव अनुरूपं आनुलक्ष्येण स्वरूपं यस्याः सा सत्त्वानुरूपा भवति । अन्यथा काम्यनिषिद्धानुष्ठानयोः श्रद्धाया अनुपपत्तेः । उक्तयोः धर्मधर्मिणोः अभेदं स्फोटयति । अयं प्रसिद्धः पुरुषः श्रद्धामयः श्रद्धाप्रचुरः श्रद्धामयः अस्ति । यथा शुक्लः पटः रक्तं उत्पलं नीलं उत्पलम् । यः पुरुषः यच्छ्रद्धः या सात्त्विकी वा राजसी वा तामसी श्रद्धा यस्य सः यच्छ्रद्धः अस्ति स एव पुरुष एव सः तच्छ्रद्धः भवति इति शेषः । यथा शुभ्रः स्फटिकः उपाधिरहितः शुभ्रतया प्रतीयते आरक्तोपाधौ वा कृष्णोपाधौ तथैव प्रतीयते तथैव गुणत्रय उपाधौ श्रद्धा भवतीति तात्पर्यम् ॥ ३॥ 'यो यच्छ्रद्धः स एव सः' इति यदुक्तं तत् कार्यद्वारा प्रपंचयति । यजंत इति । सात्त्विकाः सत्त्वेन सत्त्वगुणेन युक्ताः

प्रेतान् भूतगणांश्चान्ये यजंते तामसा जनाः ॥ ४ ॥
अशास्त्रविहितं घोरं तप्यंते ये तपो जनाः ।
दंभाहंकारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥
कर्षयंतः शरीरस्थं भूतग्राममचेतसः ।

सात्त्विकाः सात्त्विकीश्रद्धायुक्ताः देवान् दीव्यंति प्रकाशमाना भवंति ते देवाः तान् देवान् इंद्रादीन् यजंते पूजयंति । राजसाः रजसा रजोगुणेन युक्ताः राजसाः राजसीश्रद्धायुक्ताः यक्षरक्षांसि यक्षाः कुबेरादयः च रक्षांसि निर्ऋत्यादयः यक्षरक्षांसि यजंते पूजयंति । अन्ये उभयविलक्षणाः तामसाः तमसा तमोगुणेन युक्ताः तामसाः तामसीश्रद्धायुक्ताः जनाः जननधर्माणः प्रेतान् चेत्यपरं भूतगणान् मातृकाविनायकादीन् यजंते पूजयंति ॥ ४ ॥ राजसतामसेषु पुनः विशेषांतरमाह । अशास्त्रविहितमिति द्वाभ्याम् । ये प्रसिद्धाः जनाः जननमरणभाजः घोरं दारुणं आत्महिंस्रं तपः अनुष्ठानं तप्यंते कुर्वंति । हे पार्थ ! त्वं तान् जनान् असुरनिश्चयान् विद्धि जानीहि इति द्वितीयेनान्वयः । कथंभूताः जनाः । दंभाहंकारसंयुक्ताः दंभः धनार्जननिमित्तबहिर्धर्माविष्करणं च अहंकारः कृतार्थोहमिति अभिनिवेशः दंभाहंकारौ दंभाहंकाराभ्यां संयुक्ताः संश्लिष्टाः दंभाहंकारसंयुक्ताः । पुनः कथंभूताः। कामरागबलान्विताः कामः अभिलाषः च रागः प्राप्तेषु आसक्तिः च बलं पराभवकरणाग्रहः कामरागबलानि कामरागबलैः अन्विताः युक्ताः यद्वा कामरागयोः बलं आधिक्यं तेन कामरागबलेन अन्विताः युक्ताः । कथंभूतं तपः । अशास्त्रविहितं शास्त्रयोग्यं न भवति तत् अशास्त्रविहितं अविधिकरणम् ॥ ५ ॥ कर्षयंत इति । किंच पुनः कथंभूताः जनाः शरीरस्थं शरीरे भौतिकं

मां चैवांतःशरीरस्थं तान् विद्धयासुरनिश्चयान् ॥६॥

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥

कारणरूपे देहे तिष्ठतीति शरीरस्थः तं भूतग्रामं भूतानां पृथिव्यादीनां ग्रामः समूहः भूतग्रामः तं भूतग्रामं कर्षयंतः कर्षयंति ते कर्षयंतः वृथैव उपवासादिभिः कृशं कुर्वंतः। पुनः कथंभूताः । अचेतसः अविवेकिनः यथा वृक्षशाखाग्रे स्थित्वा वृक्षशाखाच्छेदने प्रवृत्तः सन् आत्मपातं न जानाति तथा भूतग्रामं कर्षयंतः संतः शरीरपातान् न जानंति । अत एव अविवेकिन इत्यर्थः । चेत्यपरं अंतःशरीरस्थं अंतःशरीरे तिष्ठतीति अंतः शरीरस्थः तं अंतःशरीरस्थं अंतर्यामितया वर्त्तमानं मां परमेश्वरं कर्षयंतः मदाज्ञाशास्त्रलंघनेन तपः कुर्वंतः । हे पार्थ! त्वं तान् पापरूपान् असुरनिश्चयान् असुषु प्राणेंद्रियेषु रमंति ते असुराः असुराणां निश्चयः कृतकृत्यता येषां ते असुरनिश्चयाः तान् विद्धि जानीहि ॥ ६ ॥ प्रासंगिकं परिसमाप्य आहारादिषु श्रद्धानिष्ठं गुणत्रैविध्यं दर्शयति । आहार इति । यथा श्रद्धा गुणभेदेन त्रिविधा भवति तथा सर्वस्य सर्वजनस्य आहारोपि अन्नादिरपि त्रिविधः तिस्रः विधाः प्रकाराः यस्य सः त्रिविधः त्रिप्रकारः गुणापेक्षया प्रियो भवति इष्टो भवति । तथा यज्ञः त्रिविधः भवति । तथा तपः त्रिविधं भवति । तथा दानं त्रिविधं भवति । त्वं तेषां आहारादीनां इमं वक्ष्यमाणं भेदं असांकर्यं शृणु अवधारय । एतच्च राजसतामसाहारयज्ञादिपरित्यागेन सात्त्विकाहारयज्ञादिसेवया सत्त्ववृद्धौ यत्नः कर्त्तव्यः इति एतदर्थं कथ्यते ॥ ७ ॥

आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः॥८॥
कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः।

तत्र तावत् आहारत्रैविध्यं श्रावयति त्रिभिः। आयुरिति। हे अर्जुन! इमे वक्ष्यमाणाः आहाराः सात्त्विकप्रियाः सात्त्विकानां सत्त्वगुणयुक्तानां प्रियाः इष्टाः सात्त्विकप्रियाः संति। कथंभूताः आहाराः। आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः आयुः जीवनोपचयः च सत्त्वं चित्तोत्साहः च बलं देहशक्तिः च आरोग्यं रोगाभावः च सुखं अंतःप्रसन्नता च प्रीतिः अभिरुचिः आयुःसत्त्वबलारोग्यसुखप्रीतयः आयुःसत्त्वबलारोग्यसुखप्रीतीनां विवर्धनं विस्तारः येभ्यस्ते आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः। पुनः कथंभूताः। रस्याः रसेन उपेताः युक्ताः रस्याः। पुनः कथंभूताः। स्निग्धाः स्नेहेन पूरिताः परिपूर्णाः स्निग्धाः। पुनः कथंभूताः। स्थिराः सारांशेन चिरकालस्थायिनः। पुनः कथंभूताः। हृद्याः दृष्ट्वैव मनोरमाः॥ ८॥ राजसाहारान् दर्शयति। कट्वम्लेति। अत्र लवणोष्णयोः मध्यवर्त्ती अतिशब्दः वर्त्तते। सः अतिशब्दः कट्वादिषु सप्तसु योज्यः। हे पार्थ! एते प्रसिद्धाः आहाराः राजसस्य रजोगुणयुक्तस्य इष्टाः प्रियाः संति। एते के? कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः अतिकटुः निंबादिः। च अत्यम्लः तिंतिणीजंबीरादिः। अतिलवणः सैंधवादिक्षारद्रव्यम्। अत्युष्णश्च प्रसिद्धः करेण आदातुं अशक्यः। अतितीक्ष्णश्च तिक्तं मरीचादिः। अतिरूक्षश्च कोद्रवादिः। अतिविदाही च सर्षपादिः। कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः। कथंभूताः आहाराः। दुःखशो-

आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥
यातयामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १० ॥
अफलाकांक्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।

कामयप्रदाः दुःखं च भक्षणकाले पीडाजनकं शोकः भाविसंतापकरः आमयश्च रोगः दुःखशोकामयाः दुःखशोकामयान् प्रकर्षेण ददति ते दुःखशोकामयप्रदाः ॥ ९ ॥ इदानीं तामसाहारान् दर्शयति । हे पार्थ ! यत् अन्नं यातयामं मंदपक्कं यद्वा यातः अतिक्रांतः यामः प्रहरः यस्य तत् यातयामं शैत्यावस्थां आपन्नं अस्ति । चेत्यपरं यत् अन्नं गतरसं गतः रसो यस्य तत् गतरसं शैत्यावस्थां आपन्नस्य स्वादुरसाभावात् गतसारं ओदनव्यंजनादि अस्ति । किंच यत् अन्नं पूति गंधयुक्तं सूपादि अस्ति । किंच यत् अन्नं पर्युषितं दिनांतरपक्कं अस्ति । किंच यत् अन्नं उच्छिष्टं बालकादिभुक्तावशिष्टं यद्वा दंतैः अवखंडितावशिष्टं अस्ति । किंच यत् अन्नं अमेध्यं भक्षणायोग्यं पलांडुलशुनादि अस्ति एवंभूतं भोजनं तामसप्रियं तामसस्य तमोगुणयुक्तस्य प्रियं इष्टं तामसप्रियम् । भवति इति शेषः ॥ १० ॥ इदानीं यज्ञत्रैविध्यमाह । अफलेति । हे पार्थ ! सः प्रसिद्धः सात्त्विकः सत्त्वस्य सत्त्वगुणयुक्तस्य अयं सात्त्विकः यज्ञः ज्ञेयः । इति शेषेण अन्वयः । स कः यज्ञः । अफलाकांक्षिभिः फलानां आकांक्षा इच्छा येषां ते फलाकांक्षिणः फलाक्षिणः न भवंति ते अफलाकांक्षिणः तैः अफलाकांक्षिभिः विधिदृष्टः विधिना यथाशास्त्रविधिना दृष्टः संपादितः विधिदृष्टः यः यज्ञः इज्यते अनुष्ठीयते । किं कृत्वा । यष्टव्यं ईश्वरोद्देशेन यथाधिकारं यष्टव्यं इति एवं प्रकारेण मनः अंतःकरणं

यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥११॥
अभिसंधाय तु फलं दंभार्थमपि चैव यत्।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥१२॥
विधिहीनमसृष्टान्नं मंत्रहीनमदक्षिणम्।

समाधाय निश्चलं कृत्वा ईश्वराज्ञया यथावर्णाश्रमानुष्ठानं कर्त्तव्यं इति मनः एकाग्रं कृत्वा फलाशां विना यथाविधानं यज्ञो निवर्त्यते स सात्त्विको यज्ञ इत्यर्थः॥ ११ ॥ राजसयज्ञमाह। अभिसंधायेति। हे भरतश्रेष्ठ! भरतानां भरतवंश्यानां राज्ञां श्रेष्ठः भरतश्रेष्ठः तत्संबुद्धौ हे भरतश्रेष्ठ! त्वं तं प्रसिद्धं राजसं रजसः रजोगुणयुक्तस्य अयं राजसः तं राजसं यज्ञं विद्धि जानीहि। सः कः। यत् यः यज्ञः राजसैः रजोगुणयुक्तपुरुषैः इति शेषः। फलं यज्ञफलं अभिसंधाय कर्मारंभे गृहे निक्षिप्तद्रव्यवत् असंशयं अमुत्र फलं उपभोगाय भविष्यति इति विश्वासेन संकल्प्य इहलोके धनमानलाभं उद्दिश्य दंभार्थं दंभाय इति दंभार्थं महत्त्वख्यापनार्थं इज्यते यज्ञः क्रियते स राजसयज्ञ इत्यर्थः ॥ १२ ॥ तामसयज्ञमाह। विधिहीनमिति। शिष्टाः इति शेषः। तं प्रसिद्धं तामसं तमसः तमोगुणयुक्तस्य अयं तामसः तं तामसं यज्ञं परिचक्षते कथयंति। तमेव यज्ञमेव अनेकविशेषणैः विशिनष्टि। कथंभूतं यज्ञम्। विधिहीनं विधिना यथाशास्त्रविधिना हीनः रहितः विधिहीनः तं विधिहीनं यस्मिन् यज्ञे विधिः विधानं नास्ति। पुनः कथंभूतम्। असृष्टान्नं ब्राह्मणेभ्यः न सृष्टं न संपादितं अन्नं यस्मिन् सः असृष्टान्नः तं असृष्टान्नम्। पुनः कथंभूतम्। मंत्रहीनं मंत्रैः यथावत् मंत्रोच्चारणैः हीनः रहितः मंत्रहीनः तं मंत्रहीनम्। पुनः कथंभूतम्। अदक्षिणं न विद्यते दक्षिणा अल्पा यथोक्ता वा दक्षिणा यस्मिन् सः अदक्षिणः तम्। पुनः कथं-

श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥
देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥
अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।

भूतम् । श्रद्धाविरहितं श्रद्धया आस्तिक्यबुद्ध्या विरहितः श्रद्धाविरहितः तं यस्मिन् यज्ञे श्रद्धापि नास्ति ॥ १३ ॥ इदानीं सात्त्विकादिभेदेन तपस्त्रैविध्यं वदन् प्रथमं शारीरादिभेदेन तपस्त्रैविध्यमाह । देवद्विजेति । हे पार्थ! विद्वज्जनैः इति शेषः । एतत् सर्वं शारीरं शरीरस्य इदं शारीरं तपः अनुष्ठानं उच्यते कथ्यते । एतत् किम् । देवद्विजगुरुप्राज्ञपूजनं देवाः इंद्रादयः च द्विजाः ब्राह्मणाः च गुरवः उपदेष्टारः च प्राज्ञाः बुद्धिमंतः देवद्विजगुरुप्राज्ञाः देवद्विजगुरुप्राज्ञानां पूजनं देवद्विजगुरुप्राज्ञपूजनं चेत्यपरं शौचं मृज्जलाभ्यां बाह्यसंस्कारः चेत्यपरं आर्जवं इंद्रियेषु अवक्रता च ब्रह्मचर्यं ऋतौ स्त्रीसंगः चेत्यपरं अहिंसा वचनशरीराभ्यां परपीडाराहित्यम् । इदं शरीरस्य तपोनुष्ठानम् ॥ १४ ॥ वाचिकं तप आह । हे कौंतेय! विद्वद्भिः यत् एतत् सर्वं वाङ्मयं वाक्प्रचुरं वाङ्मयं वाग्रूपं तपः अनुष्ठानं उच्यते कथ्यते । एतत् किं अनुद्वेगकरं उद्वेगं मानसक्षोभं करोति तत् उद्वेगकरं उद्वेगकरं न भवति तत् अनुद्वेगकरं वाक्यं वचनं अनृतमपि वाक्यं अनुद्वेगकरं भवति तन्निवारणार्थं चेत्यपरं सत्यं यथाशास्त्रं परदारधनाद्यपहरणं त्वया कृतं निषिद्धं अप्रियं भवति । तन्निवारणार्थं प्रियं कर्णमधुरं प्रतारणया उक्तं वाक्यं त्वं धर्मवान् इति प्रियं भवतु हितं न भवति तन्निवारणार्थं हितं हितकारकम् । हे देवदत्त! त्वया सर्वप्रकारेण हितमेव कर्तव्यं इति एवंरूपं चेत्यपरं स्वा-

स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥
मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत् तपो मानसमुच्यते ॥ १६ ॥
श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।

ध्यायाभ्यसनं स्वाध्यायस्य स्वधीतब्रह्मयज्ञस्य अभ्यसनं प्रतिदिनमावृत्तिः स्वाध्यायाभ्यसनं यत् एतत् वाङ्मयं तपः उच्यते ॥ १५ ॥ मानसं तप आह । विद्वज्जनैः इति शेषः । इति एवं प्रकारेण एतत् सर्वं मानसं मनसः इदं मानसं तपः अनुष्ठानं उच्यते कथ्यते। एतत् किम् । मनःप्रसादः मनसः अंतःकरणस्य प्रसादः प्रसन्नता मनःप्रसादः चेत्यपरं सौम्यत्वं सौम्यस्य भावः सौम्यत्वं उग्रस्वभावराहित्यं चेत्यपरं मौनं मननात् मनोधर्मात् मुनिः मुनेर्भावः मौनं मनोनैश्चल्ये सति वाङ्नियमः चेत्यपरं आत्मविनिग्रहः आत्मनः इन्द्रियसहितस्य मनसः निग्रहः नियमनं आत्मविनिग्रहः चेत्यपरं भावसंशुद्धिः भावस्य चित्ताभिप्रायस्य संशुद्धिः भावसंशुद्धिः सर्वव्यवहारेषु अंतःकापट्यराहित्यम् ॥ १६ ॥ एवं शारीरादिभेदेन त्रिविधं तपः उक्त्वा इदानीं गुणभेदेन त्रिविधं तपः दर्शयन् सन् प्रथमं सात्त्विकं तपः आह । श्रद्धयेति । हे पार्थ! शिष्टाः इति शेषः । तत् उक्तप्रकारं त्रिविधं तिस्रः विधाः प्रकाराः यस्य तत् त्रिविधं शारीरादिभेदभिन्नं तपः अनुष्ठानं सात्त्विकं सत्त्वस्य सत्वगुणयुक्तस्य इदं सात्त्विकं परिचक्षते कथयंति । कथंभूतं तपः। नरैः पुरुषैः परया श्रेष्ठया श्रद्धया आत्यंतिक्या आस्तिक्यबुद्ध्या तप्तं अनुष्ठितम् । कथंभूतैः नरैः। अफलाकांक्षिभिः फलानां आकांक्षा इच्छा

अफलाकांक्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥१७॥
सत्कारमानपूजार्थं तपो दंभेन चैव यत्।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥१८॥
मूढग्राहेणात्मनो यत् पीडया क्रियते तपः।

येषां ते फलाकांक्षिणः फलाकांक्षिणः न भवंति ते अफलाकांक्षिणः तैः अफलाकांक्षिभिः। पुनः कथंभूतैः। युक्तैः नियतांतःकरणैः नियतांतःकरणत्वात् अफलाकांक्षित्वम् ॥ १७ ॥ राजसं तपः आह। सत्कारेति। हे पार्थ! नरैः पुरुषैः इति शेषः। सत्कारमानपूजार्थं सत्कारः साधुवादः 'अयं तापसः धर्मात्मा अनेन सदृशः कोऽपि नास्ति'— इति साधुवादः च मानः प्रत्युत्थानाभिवादनपूर्वकसन्मानः च पूजा गोधनान्नवस्त्रादिदानपूजा सत्कारमानपूजाः सत्कारमानपूजाभ्यः इति सत्कारमानपूजार्थं चेत्यपरं दंभेन परैः सत्कारमानपूजाविहीनोऽपि स्वयमेव अहं धर्मात्मा इति धर्मध्वजित्वेन यत् प्रसिद्धं तपः अनुष्ठानं क्रियते विद्वज्जनैः इति शेषः। तत् प्रसिद्धं तपः अनुष्ठानं इह लोके राजसं रजसः रजोगुणयुक्तस्य इदं राजसं प्रोक्तं उच्चारितं सत्कारादिकामनया कृतम्। कथंभूतं तपः। चलं चंचलं अनित्यम्। पुनः कथंभूतम्। अध्रुवं क्षणिकं फलव्यभिचारम् ॥१८॥ तामसं तपः आह। मूढग्राहेणेति। अविवेकिजनैः इति शेषः। मूढग्राहेण मूढेन अविवेकेन ग्राहः दुराग्रहः मूढग्राहः तेन मूढग्राहेण आत्मनः देहद्वयसंघातस्य पीडया यत् प्रसिद्धं तपः अनुष्ठानं क्रियते वा अथवा परस्योत्सादनार्थं परस्य शत्रुभूतस्य उत्सादनं नाशः परस्योत्सादनं परस्योत्सादनाय इति परस्योत्सादनार्थं तपः अनुष्ठानं क्रियते तत् तपः तामसं तमसः तमोगुणयुक्तस्य इदं

परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥
दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥२०॥
यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्राजसमुदाहृतम् ॥२१॥

तामसं उदाहृतम् । उच्चारितं तमसा निर्वर्तितं उक्तम् ॥ १९ ॥ इदानीं दानत्रैविध्यं वदन् सन् प्रथमं सात्त्विकं दानमाह । दातव्यमिति । न्यायार्जितं धनं स्वभोगोपक्षीणावशिष्टं दानार्हतया दातव्यं दातुं योग्यं दातव्यं इति निश्चयेन यत् प्रसिद्धं दानं अनुपकारिणे न विद्यते उपकारो यस्मात् सः अनुपकारी तस्मै अनुपकारिणे यद्वा उपकरोतीति उपकारी उपकरोति 'अस्मै दानं दत्तं चेत् अयं मां उपकरिष्यति' उपकारी उपकारी न भवतीति अनुपकारी तस्मै देशे पुण्यदेशे चेत्यपरं काले ग्रहणादौ चेत्यपरं पात्रे सत्पात्रे दीयते क्रियते जनैः इति शेषः । तत् प्रसिद्धं दानं सात्त्विकं सत्त्वस्य सत्त्वगुणस्य इदं सात्त्विकं स्मृतम् । यद्वा पात्रे 'संप्रदाने चतुर्थी' पात्रे पातीति पाता तस्मै पात्रे पाति दानं गृहीत्वा यजमानं संरक्षति पात्रे पात्रभूताय ॥२०॥ राजसं दानमाह । यत्त्विति । हे पार्थ! जनैः इति शेषः । यत् दानं प्रत्युपकारार्थं प्रत्युपकाराय इति प्रत्युपकारार्थं उपकारार्थं समयविशेषे अयमपि मां उपकारं करिष्यति एतदर्थं वा अथवा पुनः फलं स्वर्गादिसुखं उद्दिश्य संकल्प्य परिक्लिष्टं यथा स्यात्तथा मानसकष्टं यथा भवति तथा दीयते क्रियते तत् दानं राजसं रजसः रजोगुणस्य इदं राजसं उदाहृतं कथितम् । चशब्देन संबोधनं तुशब्देन

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥
ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।

शेषः ॥२१॥ तामसदानमाह । अदेशेति । किंच हे पार्थ! तामसजनैः इति शेषः । अदेशकाले देशः शुद्धदेशः च कालः दानसमयः देशकालौ देशकालौ न भवतः तौ अदेशकालौ अदेशकालयोः समाहारः अदेशकालं तस्मिन् अदेशकाले म्लेच्छाद्याक्रांतप्रदेशे अशुचिस्थाने चेत्यपरं दानानर्हसमये अशौचादौ अपात्रेभ्यः न पात्राः न सत्पात्राः अपात्राः तेभ्यः अपात्रेभ्यः नटविटादिसदृशेभ्यः अपात्रभूतेभ्यः ब्राह्मणेभ्यः यत् प्रसिद्धं दानं दीयते क्रियते तत् दानं तामसं तमसः तमोगुणस्य इदं तामसं उदाहृतं उच्चारितम् । बुधैः इति शेषः । कथंभूतं दानम् । असत्कृतं सत्कृतं न भवति तत् असत्कृतं पादप्रक्षालनादिसत्कारहीनम् । पुनः कथंभूतम् । अवज्ञातं तिरस्कारयुक्तम् ॥२२॥ ननु- एवं विचार्यमाणे सति सर्वमपि यज्ञतपोदानादि राजसतामसप्रायमेव इति व्यर्थो यज्ञादिप्रयासः इत्याशंक्य तथाविधस्यापि सात्त्विकत्वापादनप्रकारं दर्शयितुं आह । ॐ तत्सदिति । हे पार्थ! शिष्टैः इति शेषः । ॐ तत् सत् इति एवं प्रकारेण त्रिविधः तिस्रः विधाः यस्य सः त्रिविधः त्रिप्रकारकः ब्रह्मणः परमात्मनः मम निर्देशः निर्दिश्यते अनेनेति निर्देशः नामोच्चारणं स्मृतः । किं तत् त्रैविध्यं ॐ एकाक्षरं ब्रह्म ब्रह्मणः नाम चेत्यपरं तत् तेजोरूपं ब्रह्मणः नाम चेत्यपरं सत् सत्वरूपं ब्रह्मणः नाम एवं त्रिविधोऽपि निर्देशः ब्रह्मणः नामनिरुक्तिः विगुणमपि सर्वं कर्म सगुणीकर्तुं समर्थं अस्ति इत्याशयेनाह । तेन त्रिवि-

ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥२३॥
तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तंते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥
तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः ।

धब्रह्मरूपनिर्देशेन ब्राह्मणाः चेत्यपरं वेदाः चेत्यपरं यज्ञाः पुरा सृष्ट्यारंभे विहिताः ब्राह्मणादयः अतिपवित्रतमाः निर्मिताः ॥२३॥ इदानीं प्रत्येकं ॐकारादीनां प्राशस्त्यं दर्शयिष्यन् सन् ॐकारस्य साकल्येनार्थमाह । तस्मादिति । यस्मात् ॐकारः ब्रह्मणः निर्देशः प्रशस्तः तस्मात् कारणात् ॐ इति एवं प्रकारेण उदाहृत्य उच्चार्य ब्रह्मवादिनां ब्रह्म वेदं वदंति ते ब्रह्मवादिनः तेषां ब्रह्मवादिनां वैदिकानां यज्ञदानतपःक्रियाः यज्ञाः अश्वमेधादयः च दानानि अन्नदानादीनि च तपांसि कृच्छ्रचांद्रायणादीनि यज्ञदानतपांसि यज्ञदानतपस्सु क्रियाः कर्माणि यज्ञदानतपःक्रियाः सततं सार्वकालं प्रवर्तंते प्रतिमंत्रं चेत्यपरं मंत्रावसानं ॐकारमुच्चार्य कर्माणि भवंति । कथंभूताः यज्ञदानतपःक्रियाः । विधानोक्ताः विधानेन यथाशास्त्रविधिना उक्ताः उच्चारिताः विधानोक्ताः ॐकाररूपेण सर्वत्र ब्रह्मणः व्याप्तिः दर्शिता ॥ २४ ॥ एवं ॐकारस्य प्राशस्त्यं दर्शयित्वा तदिति निर्देशस्य प्राशस्त्यं दर्शयति । तदिति । तत् नित्यनैमित्तिकानुष्ठानं तत्फलार्थं तेन विधानेन तन्निर्देशेन ब्रह्मणः व्याप्तिदर्शिना । हे पार्थ ! मोक्षकांक्षिभिः मोक्षं कांक्षन्ति इच्छंति ते मोक्षकांक्षिणः तैः मोक्षकांक्षिभिः मोक्षेच्छुभिः तत् इति उच्चार्य चेत्यपरं फलं फलाभिलाषं अनभिसंधाय अकृत्वा विविधाः नानाप्रकाराः यज्ञतपःक्रियाः यज्ञाश्च तपांसि च यज्ञतपांसि यज्ञतपस्सु क्रियाः कर्माणि यज्ञतपःक्रियाः

दानक्रियाश्च विविधाः क्रियंते मोक्षकांक्षिभिः ॥२५॥
सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥२६॥
यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥

चेत्यपरं दानक्रियाः दानानां क्रियाः कर्माणि दानक्रियाः क्रियंते संपाद्यंते निर्वर्त्यंत इत्यर्थः ॥ २५ ॥ एवं तन्निर्देशस्य प्राशस्त्यं उक्त्वा इदानीं सच्छब्दस्य प्राशस्त्यं दर्शयति द्वाभ्याम् । सद्भाव इति । सद्भावे सच्चासौ भावश्च सद्भावः तस्मिन् सद्भावे अस्तित्वे देवदत्तस्य पुत्रादिकं अस्ति इति अस्मिन् अर्थे चेत्यपरं साधुभावे साधुश्चासौ भावश्च साधुभावः तस्मिन् साधुभावे साधुत्वे देवदत्तस्य पुत्रादिश्रैष्ठ्यं अस्ति इति अस्मिन् अर्थे सत् इति एतत् पदं प्रयुज्यते प्रकर्षेण युक्तं भवति । हे पार्थ! तथा सच्छब्दः सत् इति शब्दः सच्छब्दः प्रशस्ते मांगलिके कर्मणि विवाहादिकर्मणि युज्यते संगच्छते ॥ २६ ॥ सामान्याकारेण सत्तास्वरूपेण सच्छब्दस्य व्याप्तिः अस्ति इति कृत्वा पुनरपि बहुधा सच्छब्दस्य प्राशस्त्यं दर्शयति । यज्ञे इति । यज्ञे चेत्यपरं तपसि अनुष्ठाने चेत्यपरं दाने या प्रसिद्धा स्थितिः निष्ठा अस्ति सा निष्ठा सत् इति एवं प्रकारेण उच्यते कथ्यते । चेत्यपरं तदर्थीयं यस्य इदं नामत्रयं स एव परमात्मा एव अर्थः फलं यस्य तत् तदर्थं तदर्थमेव तदर्थीयं कर्म पूजोपहारगृहांगणपरिमार्जनोपलेपरंगमालिकादिक्रियाः तत्सिद्धये कर्मसिद्धये अन्यदपि कर्म क्रियते उद्यानशालिक्षेत्रधनार्जनादिविषयं कर्म सत् इति अभिधीयते यस्मादेवं अतिप्रशस्तं एतत् नामत्रयं तस्मादेतत् सर्वकर्मसाद्गुण्यार्थं कीर्तयेत् इति तात्पर्यार्थः ॥ २७ ॥

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्।
असदित्युच्यते पार्थ न च तत् प्रेत्य नो इह ॥२८॥

इति श्रीमद्भगवद्गीतासूपनि० श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥१७॥

एवं विचार्यमाणे सति सर्वत्र सद्रूपेण ब्रह्मप्राप्तौ एतां अनादृत्य बहिर्दृष्टयः यज्ञादीनि अनुतिष्ठंति तेषां तत्सर्वं असत् भवति इत्यभिप्रायेणाह। अश्रद्धयेति। हे पार्थ! अश्रद्धया न श्रद्धा अश्रद्धा तया अश्रद्धया आस्तिक्यबुद्धिराहित्येन देवतोद्देशेन अग्नौ हुतं प्रक्षिप्तं चेत्यपरं दत्तं ब्राह्मणेभ्यः समर्पितं चेत्यपरं तप्तं कृच्छ्रचांद्रायणादि अनुष्ठितं तपः अनुष्ठानं चेत्यपरं यत् अन्यदपि कृतं कर्म असत् भवति इति एवंप्रकारेण तत्सर्वं कर्म असत् उच्यते मिथ्या कथ्यते। पंडितैः इति शेषः॥ ननु-कृतं कर्म फलं दास्यत्येव इत्याशंक्य मुख्यफलाभावात् इहामुत्र तत् दुःखायैव भवति इत्याशयेनाह। यज्ञादीनां मुख्यं फलं आत्मज्ञानं अश्रद्धया कृतं यज्ञादि तत् असत् भवति इति कृत्वा इह अस्मिंल्लोके जीवन्मुक्तये न भवति चेत्यपरं प्रेत्य मृत्वा प्रारब्धकर्मक्षये सति चेत्यपरं अस्मिन् शरीरे पतिते सति मोक्षप्राप्तयेऽपि न भवति किंतु इह अमुत्र जन्ममरणायैव भवतीत्यर्थः। 'श्रद्धया देयं अश्रद्धया न देयं' इति शिक्षाश्रुतेः श्रद्धया कृतं सत्फलं भवति अश्रद्धया कृतं असत्फलं भवति इति गम्यते॥ २८॥ भक्तप्रश्नानुरोधेन श्रद्धात्रयमुदीरितम्। मुक्तये सात्त्विकी श्रद्धा नेतरा इति बुद्धितः॥ १॥ ॥ इति श्रीबालबोधिन्यां श्रीमद्भगवद्गीताटीकायां सप्तदशोऽध्यायः ॥१७॥

---

अर्जुन उवाच ।

संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।
त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १ ॥

श्रीः । न्यासत्यागविभागेन सर्वगीतार्थसंग्रहम् । स्पष्टमष्टादशे प्राह परमार्थविनिर्णये ॥ १ ॥ कर्मसंन्यासस्य तदनुष्ठानस्य च अविरोधप्रकारं बुभुत्सुः अर्जुनः उवाच । संन्यासस्येति । हे हृषीकेश! हृषीकाणां इंद्रियाणां ईशः स्वामी तत्संबुद्धौ हे हृषीकेश! हे सर्वेंद्रियनियामक ! हे केशिनिषूदन! केशिं केशिनामानं हयाकृतिदैत्यं निषूदयति नाशयतीति केशिनिषूदनः तत्संबुद्धौ हे केशिनिषूदन! हे महाबाहो ! महांतः श्रेष्ठाः बाहवो हस्ताः यस्य सः तत्संबुद्धौ हे महाबाहो ! अहं संन्यासस्य चेत्यपरं त्यागस्य तत्त्वं स्वरूपं पृथक् विवेकेन वेदितुं ज्ञातुं इच्छामि । त्वं मां कृपया कथय इति शेषः । सर्वशास्त्रार्थे उक्ते सति त्यागसंन्यासतत्त्वजिज्ञासया प्रश्नकरणे त्वमेव हेतुः इति मनसि निधाय हृषीकेशेति संबोधनाभिप्रायः । विभागेन इदं उत्तरं त्वमेव वक्तुं समर्थः असि कर्कटिकाफलवत् । यथा केशिनाम्नः महतः हयाकृतेः दैत्यस्य युद्धे मुखं व्यादाय भक्षयितुं आगच्छतः अत्यंतव्यात्ते मुखे बाहुं प्रवेश्य तत्क्षणमेव विवृद्धेन तेनैव बाहुना कर्कटिकाफलवत् तं विदार्य निषूदितवान् भागशः द्विधा कृतवान् । तथा त्यागसंन्यासौ विभागेन दर्शनीयौ इत्यभिप्रायेण केशिनिषूदनेति संबोधनाभिप्रायः । महाबाहो इति शत्रुनिवारणेन भक्तस्वीकरणसामर्थ्यं दर्शितम् । इति संबोधनाभिप्रायः । इत्यनेन अलम् ॥ १ ॥ एवं अर्जुनाभिप्रायं ज्ञात्वा उत्तरं

श्रीभगवानुवाच ।

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥
त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।

श्रीभगवानुवाच इत्याह। काम्यानामिति। हे पार्थ ! कवयः कवयंति ते कवयः क्रांतदर्शिनः निष्कर्षार्थतत्त्वज्ञाः काम्यानि कामयंति मनोरथान् संपादयंति तानि काम्यानि तेषां काम्यानां स्वर्गप्राप्तिसाधनानां कर्मणां 'पुत्रकामः यजेत, स्वर्गकामः यजेत' इत्यादिकर्मणां न्यासं स्वरूपेण त्यागं संन्यासं विदुः जानंति। तथा विचक्षणाः त एव संदिग्धार्थनिर्णयनिपुणाः सर्वकर्मफलत्यागं सर्वाणि समस्तानि च तानि कर्माणि नित्यनैमित्तिकानि सर्वकर्माणि सर्वकर्मणां फलानि सर्वकर्मफलानि सर्वकर्मफलानां त्यागः सर्वकर्मफलत्यागः तं त्यागं प्राहुः कथयंति। न तु स्वरूपतः कर्मत्यागं वदंति ॥ २ ॥ एवं त्यागे संन्यासस्वरूपं प्रदर्श्य केचन नित्यनैमित्तिककर्मत्यागयोः विवदंति। स्वाभिप्रायेण तन्निर्णयादौ मतभेदं उपन्यस्यति। त्याज्यमिति। एके सांख्याः प्रकृतिपुरुषविभागज्ञाः दोषवत् दोषेण तुल्यं दोषवत् जन्ममरणहेतुभूतं यथा दोषः त्यज्यते तद्वत् नित्यनैमित्तिकं कर्म त्याज्यं इति प्राहुः एवंप्रकारेण कथयंति। यद्वा पशुहिंसादिदोषवत् कर्म त्याज्यं इति प्राहुः। कथंभूताः एके। मनीषिणः मनसः अंतःकरणस्य ईषिणः नियामकाः मनीषिणः कर्मणि कृते सति हिंसायां अवश्यंभावित्वात्। अपरे मीमांसकाः यज्ञदानतपःकर्म यज्ञश्च दानं

यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ३ ॥
निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ॥ ४ ॥
यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।

च तपश्च यज्ञदानतपांसि यज्ञदानतपस्सु कर्म यज्ञदानतपःकर्म न त्याज्यं इति एवं प्रकारेण प्राहुः वदंति तेषां अयं अभिप्रायः ॥ ३॥ एवं परमतं अनूद्य त्यागे स्वमतं वदन् प्रथमं श्रोतारं संमुखीकरोति । निश्चयमिति। हे भरतसत्तम ! भरतेषु भरतराजेषु सत्तमः श्रेष्ठः भरतसत्तमः तत्संबुद्धौ हे भरतसत्तम! त्वं तत्र तस्मिन्निति तत्र त्यागे विषये निश्चयं निर्णयं मे मत्तः शृणु अवधारय। ननु-त्यागस्तु लोकशास्त्रयोः प्रसिद्ध एव तद्विषयं निश्चयं शृणु इति किं गोप्यमिव वदसि इत्याशंक्य त्यागेपि सूक्ष्मतया दुर्विज्ञेयः त्रिविधप्रकारः त्यागः अस्ति इति अभिप्रायेणाह । हे पुरुषव्याघ्र ! पुरुषेषु नरेषु व्याघ्रः श्रेष्ठः तत्संबुद्धौ हे पुरुषव्याघ्र हे नरश्रेष्ठ ! हि यस्मात् कारणात् त्यागः त्रिविधः त्रिप्रकारः संप्रकीर्तितः सम्यक् कथितः । विद्भिरिति शेषः ॥ ४ ॥ एवं श्रोतारं अभिमुखीकृत्य स्वमतं दर्शयति । यज्ञदानेति । हे पार्थ ! यज्ञदानतपःकर्म यज्ञश्च दानं च तपश्च यज्ञदानतपांसि यज्ञदानतपस्सु कर्म क्रिया यज्ञदानतपःकर्म । मुमुक्षुभिः इति शेषः । न त्याज्यं किंतु तत् यज्ञदानतपःकर्म कार्यमेव कर्तव्यमेव । मुमुक्षुणापि विदुषा चित्तशुद्धिपर्यंतं आवश्यकं यज्ञादिकं कर्तव्यमित्याह । मनीषिणां मनीषा आत्मज्ञानेच्छा येषामस्ति ते मनीषिणः तेषां मनीषिणां मुमुक्षूणां एतानि पावनानि पावयंति तानि पावनानि चि-

यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥
एतान्यपि तु कर्माणि संगं त्यक्त्वा फलानि च।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥
नियतस्य तु संन्यासः कर्मणो नोपपद्यते।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥

त्तशुद्धिकराणि यावत् चित्तशुद्धिपर्यंतं कर्तव्यानि संति। एतानि कानि। यज्ञः पंचमहायज्ञादिः चेत्यपरं दानं अन्नदानादि चेत्यपरं तपः कृच्छ्र-चांद्रायणादि ॥ ५ ॥ येन प्रकारेण कृतानि एतानि कर्माणि पावनानि भवंति तं प्रकारं दर्शयन् सन् आह। एतानीति। हे पार्थ! एतान्यपि यज्ञदानादीन्यपि कर्माणि क्रियाः कर्तव्यानि कर्तुं योग्यानि कर्तव्यानि संति। किं कृत्वा संगं कर्तृत्वाभिनिवेशं चेत्यपरं फलानि अदृष्टजनकानि त्यक्त्वा विहाय केवलं ईश्वरस्य आराधनतया कर्तव्यानीत्यर्थः। इति एवं प्रकारेण निश्चितं अध्यवसितं उत्तमं निर्दोषं मे सर्वज्ञस्य मतं अभिप्रायः अस्ति। कथंभूतं मतम्। उत्तमं उत् उद्गतं तमः तमोगुणः यस्मात् तत् उत्त-मम्॥६॥ 'त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्त्तित' इत्युक्तं त्यागत्रै-विध्यं इदानीं दर्शयन् प्रथमं तामसं त्यागमाह। नियतस्येति। हे पार्थ! नियतस्य वेदप्रतिपादितस्य नित्यस्य कर्मणः कर्तुं योग्यं कर्म तस्य कर्मणः नित्यानुष्ठानस्य संन्यासः सम्यक् न्यासः त्यागः संन्यासः नोपपद्यते न योग्यो भवति। चित्तशुद्धिद्वारा ज्ञानोत्पत्तिहेतुकत्वात् नित्यस्य त्यागो ऽनुचित इति भावः। तस्य नित्यस्य कर्मणः परित्यागः मोहात् अविवेकेन अथवा औत्कंठ्येन कृतश्चेत् तर्हि शिष्टैः तामसः तमसः अयं तामसः त्यागः परिकीर्तितः कथितः। उभयलोकवि-घातकत्वात् स त्यागः कृत इत्यर्थः ॥ ७ ॥ राजसं त्यागमाह। दुःख-

दुःखमित्येव यत्कर्म कायक्लेशभयात् त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥८॥

कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।

मिति । पुमान् इति शेषः । इति एवं प्रकारेण कायक्लेशभयात् कायस्य शरीरस्य क्लेशः कायक्लेशः कायक्लेशस्य भयं कायक्लेशभयं तस्मात् यत् नित्यं कर्म नित्यानुष्ठानं त्यजेत् ज्ञानवादं आश्रित्य परित्यजेत् । इतीति किम् । दुःखं प्रातःस्नानादौ शीतादिनिमित्तं दुःखं भवति यः कर्त्ता राजसं त्यागं कृत्वा विरोचनसिद्धांतेन शरीरमेव आत्मानं मन्यमानः सन् तमेव नानाविषयभोगैः संपूजयन् सन् कर्मत्यागेन वर्त्तेत सः राजसत्यागी तं राजसं त्यागं कृत्वापि त्यागफलं त्यागस्य फलं त्यागफलं नैव लभेत् न प्राप्नुयात् । यथा ग्रीष्मे मध्याह्ने अध्वनि वस्त्रादिसामग्रीभाराक्रांतः पुरुषः मार्गे एव सामग्रीं विहाय गतः त्यागफलं ऐहिकामुष्मिके न प्राप्नोति । तथा अयमपि कायक्लेशभयात् तूष्णीं नित्यं कर्म त्यक्त्वा वर्तमानः सन् उभयलोकविधुरः भवतीत्यर्थः ॥ ८ ॥ सात्त्विकत्यागमाह । कार्यमिति । हे अर्जुन ! यत् प्रसिद्धं कर्म वेदप्रतिपादितं कर्म कार्यं कर्तुं योग्यं कार्यं वर्णाश्रमप्राप्तं अस्ति इति शेषः । इति एवं बुद्ध्या तत् प्रसिद्धं कर्म पुरुषेण इति शेषः । क्रियते । कथंभूतं कर्म । नियतं नित्यम् । किं कृत्वा । संगं कर्तृत्वाभिनिवेशं चेत्यपरं फलं पितृलोकफलं त्यक्त्वा यद्यपि नित्यस्य कर्मणः फलं नास्ति तथापि साधारणकर्मणा पितृलोकोस्ति । पितृलोकफलं चित्तशुद्धिद्वारा इति वेदवचनं ज्ञानफलं श्रूयते तदपि त्यक्त्वा सः प्रसिद्धः त्यागः कर्तृत्वाभिनिवेश-

संगं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः॥९॥
न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः॥१०॥
न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः।

फलाभिलाषत्यागः सात्त्विकः सत्त्वगुणात्मकः। मम मह्यं इति शेषः। मतः मान्यः। अस्ति इति शेषः॥ ९॥ एवंभूतसात्त्विकत्यागपरिनिष्ठितस्य लक्षणमाह। न द्वेष्टीति। त्यागी त्यागोऽस्यास्तीति त्यागी सात्त्विकत्यागवान् अकुशलं न विद्यते कुशलं शरीरसुखं यस्मिन् तत् अकुशलं शिशिरे प्रातःस्नानादिकं कर्म काम्यं कर्म न द्वेष्टि किंतु न्यायार्जितस्य धनस्य सद्विनियोगबुद्ध्या परमेश्वरोद्देशेन अनुतिष्ठति। नेत्यपरं कुशले सुखकरे कर्मणि उष्णकाले मध्याह्नस्नानादौ नानुषज्जते न सक्तो भवति। किंतु ईश्वरे भारं आरोप्य तदर्पणं यथा भवति तथा करोति। कथंभूतः त्यागी। सत्त्वसमाविष्टः सत्त्वेन सत्त्वगुणेन समाविष्टः स्थितः सत्त्वसमाविष्टः। पुनः कथंभूतः। मेधावी मेधा शास्त्रहृदयज्ञानबुद्धिः यस्यास्तीति मेधावी। पुनः कथंभूतः। छिन्नसंशयः छिन्नः नष्टः संशयः इदं शास्त्रतात्पर्यं भवति वा न भवति इति संदेहः यस्य सः छिन्नसंशयः॥ १०॥ देहाभिमानवता अशेषकर्म त्यक्तुं अशक्यं इत्यभिप्रायेण कर्मफलत्यागिनं स्तौति। न हीति। देहभृता देहं बिभर्तीति देहभृत् तेन देहभृता देहाभिमानवता अशेषतः निरवशेषेण आत्मज्ञानं विना इति शेषः कर्माणि नित्यनैमित्तिकानि यथाधिकारप्राप्तानि त्यक्तुं परिहातुं न शक्यं न योग्यं भवति॥ यावत् देहबुद्धिः अस्ति तावत् प्राप्तकर्माकरणे दोषः अस्ति। ननु—भोजने कृते सति

यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥
अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥१२॥
पंचैतानि महाबाहो कारणानि निबोध मे ।

तृप्तिरिव कर्मणि कृते सति फलं स्यादेव इत्याशंक्याह । यः पुरुषः तु कर्मफलत्यागी कर्मणां फलानि कर्मफलानि कर्मफलानां त्यागः अस्यास्तीति कर्मफलत्यागी । भवति इति शेषः । सः पुरुषः त्यागी त्यक्तुं कर्मफलं त्यक्तुं शीलं यस्य सः त्यागी इति एवं प्रकारेण पंडितैः इति शेषः अभिधीयते कथ्यते ॥ ११ ॥ एवंभूतस्य कर्मफलत्यागस्य फलमाह । अनिष्टमिति । हे पार्थ ! अत्यागिनां कर्मफलं न त्यजंति ते अत्यागिनः तेषां अत्यागिनां सकामानां कर्मणः पापपुण्यमिश्रितस्य कर्मणः त्रिविधं त्रिप्रकारकं फलं प्रेत्य परलोके भवति । किं तत् त्रिविधम् । अनिष्टं तामसस्य कर्मणः फलं नरकसंबंधि, चेत्यपरं इष्टं सात्त्विकस्य कर्मणः फलं देवसंबंधि, चेत्यपरं मिश्रं राजसस्य कर्मणः फलं मनुष्यसंबंधि यदा विधिप्राप्तानि कर्माणि ईश्वरार्पितानि न फलंति तदा विधिना न्यस्तकर्मणां कर्मफलं न भवतीति किमु वक्तव्यम् ? इति अभिप्रायेणाह । संन्यासिनां तु विधिना त्यक्तकर्मफलानां तु क्वचिदपि त्रिविधं कर्मफलं न भवति ईश्वरार्पणेन कृतस्य कर्मणः त्रिविधमपि कर्मफलं न भवतीत्यर्थः ॥ १२ ॥ ननु—कर्म कुर्वतः कर्मफलं कथं न भवेत् इत्याशंक्य संगत्यागिनः निरहंकारस्य सतः कर्मफलेन लेपो नास्ति इति उपपादयितुं आह । पंचैतानि इति पंचभिः । हे महाबाहो ! महांतौ देवब्राह्मणपूजकौ बाहू हस्तौ यस्य सः महाबाहुः

सांख्ये कृतांते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥१३॥
अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्।
विविधाश्च पृथक् चेष्टा दैवं चैवात्र पंचमम् ॥१४॥
शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः।

तत्संबुद्धौ हे महाबाहो! सर्वकर्मणां स्वभावशास्त्रप्राप्तानां सिद्धये निष्पत्तये एतानि अनंतरश्लोके वक्ष्यमाणानि पंच पंचसंख्याकानि कारणानि कर्मप्रवर्तकवचनानि संति। त्वं मे मत्तः निबोध जानीहि। कथंभूतानि कारणानि। सांख्ये सम्यक् ख्यायते ज्ञायते आत्मा अनेनेति सांख्यं यद्वा संख्यायंते गण्यंते तत्त्वानि यस्मिन् तत् सांख्यं तस्मिन् सांख्ये ज्ञानप्रतिपादकशास्त्रे प्रोक्तानि उच्चारितानि। कथंभूते सांख्ये। कृतांते कृतस्य कर्मणः अंतः परिसमाप्तिः यस्मिन् तत् कृतांतं यद्वा कृतः अंतः निर्णयः यस्मिन् तत् कृतांतं तस्मिन् कृतांते वेदांतसिद्धांते ॥ १३ ॥ एवं पंच कर्मकारणानि हेतून् दर्शयति। अधिष्ठानमिति। एतानि कानि। अधिष्ठानं कर्माधारं शरीरं तथा कर्त्ता करोतीति कर्त्ता चिज्जडग्रंथिः अहंकारः चेत्यपरं पृथग्विधं पृथक् भिन्ना विधा चेष्टा तस्य तत् पृथग्विधं अनेकव्यापारं करणं बाह्यांतःकरणसमूहं चेत्यपरं पृथक् कार्येण स्वरूपेण विविधाः अनेकप्रकारकाः चेष्टाः प्राणापानादीनां व्यापाराः चेत्यपरं अत्र एतेषु पंचमं कारणं दैवं सर्वेंद्रियानुग्राहकम्। एतानि पंच कारणानि सर्वकर्मसिद्धये भवंति न तु अन्यानि इत्यर्थः ॥ १४ ॥ पूर्वं सामान्यतः सर्वकर्मणां सिद्धये पंच कारणानि इत्युक्तम्। इदानीं सामान्यकर्मशब्दं त्रिधा राशीकृत्य तस्यापि अमी पंच हेतवः संति इति अनुवदति। शरीरेति। हे पार्थ!

न्याय्यं वा विपरीतं वा पंचैते तस्य हेतवः ॥१५॥
तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥१६॥
यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।

नरः साधारणपुरुषः शरीरवाङ्मनोभिः शरीरं देहः च वाक् वाणी च मनः अंतःकरणं शरीरवाङ्मनांसि तैः शरीरवाङ्मनोभिः यत् प्रसिद्धं न्याय्यं न्यायात् न्यायेन वा अनपेतं युक्तं न्याय्यं धर्मरूपं वा अथवा विपरीतं अधर्मरूपं कर्म प्रारभते प्रकर्षेण करोति तस्य कर्मणः एते उक्ताः पंच अधिष्ठानादयः हेतवः कारणानि संति एतैर्विना किमपि कर्म न सिद्ध्यतीत्यर्थः ॥ १५ ॥ ततः किमित्यत आह । तत्रेति । तत्र तस्मिन् इति तत्र तस्मिन् सर्वस्मिन् कर्मणि एते पंच हेतवः संति इति एवं सति यः साधारणपुरुषः केवलं अधिष्ठानादिसंसर्ग-शून्यं आत्मानं परमात्मानं कर्तारं करोतीति कर्त्ता तं कर्तारं पश्यति अवलोकयति सः प्रसिद्धः दुर्मतिः दुष्टा मतिः बुद्धिः यस्य सः अथवा दुःखरूपे अनात्मनि देहे मतिः अहंबुद्धिः यस्य सः दुर्मतिः बहिर्दृष्टिः अकृतबुद्धित्वात् अकृता शास्त्राचार्योपदेशाभ्यां असंस्कृता बुद्धिर्यस्य सः अकृतबुद्धिः अकृतबुद्धेः भावः अकृतबुद्धित्वं तस्मात् अकृतबु-द्धित्वात् हेतोः न पश्यति सम्यक् न पश्यति ॥ १६ ॥ कस्तर्हि सुमतिः यस्य कर्मलेपो नास्ति इत्युक्तं इत्यपेक्षायामाह । यस्येति । हे पार्थ ! यस्य पुरुषस्य अहंकृतः अहमिति कर्त्ता अहंकृतः भावः अभि-प्रायः नास्ति यद्वा अहंकृतः अहं करोतीति अहंकृत् तस्य अहंकृतः अहंकारस्य भावः कर्तृत्वाभिनिवेशः यस्य पुरुषस्य नास्ति अत एव

हत्वापि स इमाल्लोकान् न हंति न निबध्यते ॥१७॥
ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।
करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥ १८ ॥
ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।

हेतोः यस्य पुरुषस्य बुद्धिः न लिप्यते इष्टानिष्टबुद्ध्या कर्मसु न सज्जते । अतः हेतोः एवंभूतः देहादिव्यतिरिक्तात्मदर्शी सः पुरुषः इमान् लोकान् सर्वानपि प्राणिनः लोकदृष्ट्या हत्वापि न हंति न मारयति तत्फलैः हननफलैः न निबध्यते न बंधं प्राप्नोति । राज्याधिकारित्वात् राजन्यवंशोत्पन्नस्य अर्जुनस्य अयं उपदेशः । उत्पन्नात्मसाक्षात्कारेपि जनकादयः यथापराधं प्राणांतदंडेषु दोषाधिकारिणः न भवंति इति तात्पर्यम् ॥ १७ ॥ सर्वैरपि प्रकारैः आत्मा हननक्रियायाः कर्त्ता न भवति इति उपपादितम् । इदानीं आत्मनः तत्संबंधः कर्मसंबंधः नास्ति इति अभिप्रायेणाह । ज्ञानमिति । हे पार्थ ! त्रिविधा त्रिप्रकारा कर्मचोदना चोद्यते प्रवर्त्यते अनया सा चोदना कर्मणां चोदना प्रेरणा कर्मचोदना अस्ति । का सा त्रिविधा । ज्ञानं स्वस्य इष्टतमकर्मसाधनं इदमेव इति निश्चयः चेत्यपरं ज्ञेयं इष्टसाधनज्ञानकर्म चेत्यपरं परिज्ञाता इत्थंभूतज्ञानज्ञेयाश्रयः । किंच त्रिविधः त्रिप्रकारकः कर्मसंग्रहः कर्म संगृह्यते अनेनेति कर्मसंग्रहः अस्ति । कोसौ त्रिविधः । करणं साधनतमं द्रव्यं चेत्यपरं कर्म कर्तुः इष्टतमं कर्म चेत्यपरं कर्त्ता कर्मनिवर्त्तकः ॥१८॥ चोदनासंग्रहयोः ज्ञानकर्मकर्तॄणां प्राधान्यात् तेषां ज्ञानकर्मकर्तॄणां गुणभेदेन त्रैविध्यं आह । ज्ञानमिति । गुणसंख्याने गुणाः

प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥१९॥
सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥२०॥
पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् ।

सत्त्वादयः सम्यक् ख्यायंते प्रकाश्यंते यस्मिन्निति गुणसंख्यानं तस्मिन् गुणसंख्याने सांख्यशास्त्रे ज्ञानं प्रकृतिपुरुषवैलक्षण्यद्योतकं शास्त्रं चेत्यपरं कर्म कर्तुः इष्टतमा क्रिया चेत्यपरं कर्त्ता कर्मनिवर्तकः गुणभेदतः गुणानां सत्त्वादिगुणानां भेदः गुणभेदः गुणभेदादिति गुण-भेदतः गुणभेदेन त्रिधैव त्रिप्रकारमेव प्रोच्यते प्रकर्षेण उच्यते । हे पार्थ! त्वं तानि ज्ञानादीनि यथावत् यथागुणभेदेन शृणु अवधारय । मत्त इति शेषः ॥ १९ ॥ तत्रादौ ज्ञानत्रैविध्यं वदन् सन् प्रथमं सात्त्विकज्ञानं आह । सर्वभूतेष्विति । हे पार्थ! पुरुषः इति शेषः । येन ज्ञानेन सर्वभूतेषु ब्रह्मादिस्थावरांतेषु भावं सद्रूपं ईक्षते पश्यति त्वं तत् प्रसिद्धं ज्ञानं सात्त्विकं सत्त्वस्य सत्त्वगुणस्य इदं सात्त्विकं विद्धि जानीहि । कथंभूतं भावम् । एकं जात्यादिसंबंधरहितम् । पुनः कथंभूतम् । अव्ययं न विद्यते व्ययो नाशः यस्य सः अव्ययः तं अव्ययं विकाररहितम् । पुनः कथंभूतम् । अविभक्तं विभक्तः भिन्नः न भवतीति अविभक्तः तं अविभक्तं अनुस्यूतम् । कथं-भूतेषु सर्वभूतेषु । विभक्तेषु विभागेन वर्त्तमानेषु ॥ २० ॥ इदानीं राजसं ज्ञानं आह । पृथक्त्वेनेति । यत् प्रसिद्धं ज्ञानं ज्ञायते तत् ज्ञानं सर्वेषु समस्तेषु भूतेषु ब्रह्मादिस्थावरांतेषु पृथग्विधान् पृथक् भिन्नाः विधाः प्रकाराः येषां ते पृथग्विधाः तान् पृथग्विधान् । सुखदुः-

वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥
यत्तु कृत्स्नवदेकस्मिन् कार्येऽसक्तमहैतुकम् ।
अतत्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥
नियतं संगरहितमरागद्वेषतः कृतम् ।

खादिरूपेण विलक्षणान् नानाभावान् अनेकसङ्घातान् क्षेत्रज्ञरूपान् पृथक्त्वेन पृथग्भावः पृथक्त्वं तेन पृथक्त्वेन भिन्नत्वेन वेत्ति जानाति। हे पार्थ! त्वं तत् प्रसिद्धं ज्ञानं राजसं रजसः रजोगुणस्य इदं राजसं विद्धि जानीहि ॥ २१ ॥ तामसं ज्ञानमाह। यत्त्विति। हे पार्थ! यत् ज्ञानं-एकस्मिन् कार्ये एकस्यां पार्थिवप्रतिमादौ कृत्स्नवत् कृत्स्नेन संपूर्णेन तुल्यं कृत्स्नवत्। यथा वेदांतिनां ब्रह्मैव एकं परिपूर्णं तथा प्रतिमादिकं परिपूर्णं अस्ति नान्यत्किंचिद्देवतांतरमित्यर्थः। कथंभूतं ज्ञानम्। असक्तं अभिनिवेशयुक्तम्। पुनः कथंभूतम्। अहैतुकं हेतुकं न भवति तत् अहैतुकं युक्तिरहितम्। पुनः कथंभूतम्। अतत्वार्थवत् तत्त्वानां अर्थः तत्त्वार्थः तत्त्वार्थेन तुल्यं तत्त्वार्थवत् तत्त्वार्थवत् न भवति तत् अतत्त्वार्थवत् परमार्थगंधशून्यम्। पुनःकथंभूतम्। अल्पं क्षुद्रविषयनिष्ठं तुच्छम्। पंडितैः इति शेषः। तत् ज्ञानं तामसं तमसः तमोगुणस्य इदं तामसं तमोगुणसंबंधि उदाहृतं उच्चारितम् ॥ २२ ॥ इदानीं कर्मत्रैविध्यं अनुवदन् सन् प्रथमं सात्त्विकं कर्म आह। नियतमिति। हे पार्थ! अफलप्रेप्सुना फलं प्राप्तुं इच्छतीति फलप्रेप्सुः फलप्रेप्सुः न भवतीति अफलप्रेप्सुः तेन अफलप्रेप्सुना फलेच्छारहितेन यत् उक्तलक्षणं कर्म कृतं तत् प्रसिद्धं कर्म सात्त्विकं सत्त्वस्य सत्त्वगुणस्य इदं

अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥
यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४ ॥
अनुबंधं क्षयं हिंसामनवेक्ष्य च पौरुषम् ।

सात्त्विकं उच्यते कथ्यते। कथंभूतं कर्म। नियतं नित्यत्वेन युक्तम्। पुनः कथंभूतम्। संगरहितं संगेन कर्तृत्वाभिनिवेशनेन रहितं शून्यं संगरहितम्। पुनः कथंभूतम्। अरागद्वेषतः रागः पुत्रादिप्रीत्यनुबंधः च द्वेषः परकर्मोत्कर्षासहनं रागद्वेषौ रागद्वेषौ न भवतः तौ अरागद्वेषौ अरागद्वेषाभ्यां इति अरागद्वेषतः रागद्वेषशून्येन कृतम् ॥ २३ ॥ राजसं कर्म आह। यत्त्विति। हे पार्थ ! कामेप्सुना कामं इच्छितमनोरथं प्राप्तुं इच्छतीति कामेप्सुः तेन कामेप्सुना कर्मफलेप्सुना यत् प्रसिद्धं कर्म वा अथवा साहंकारेण अहंकारेण सहितं साहंकारं तेन साहंकारेण अहं ब्राह्मणः मया इदं कर्म कर्त्तव्यं अनेन कर्मणा अहं दीक्षितः भविष्यामि इत्यभिनिवेशेन क्रियते तत् कर्म राजसं रजसः रजोगुणस्य इदं राजसं उदाहृतं कथितम्। बुधैः इति शेषः। कथंभूतं कर्म। पुनः भूयः बहुलायासं बहुलः विपुलः आयासः क्लेशः यस्मिन् तत् बहुलायासम् ॥ २४ ॥ तामसं कर्म आह। अनुबंधमिति। पुरुषेण इति शेषः। यत् प्रसिद्धं कर्म मोहात् केवलं अविवेकेन आरभ्यते क्रियते किं कृत्वा अनुबंधं अनु अनुलक्ष्येण बद्ध्यत इति अनुबंधः तं अनुबंधं पश्चाद्भाविशुभाशुभं चेत्यपरं क्षयं शरीरवित्तव्ययं चेत्यपरं हिंसां परपीडां चेत्यपरं पौरुषं स्वसामर्थ्यं अनवेक्ष्य नावलोक्य तत् कर्म तामसं तमसः तमोगुणस्य इदं तामसं उदाहृतं कथितम्।

मोहादारभ्यते कर्म तत्तामसमुदाहृतम् ॥ २५ ॥
मुक्तसंगोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते॥२६॥
रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।

पंडितैरिति शेषः। तेन कर्मणा इह परत्र सुखं नास्ति ॥ २५ ॥ इदानीं कर्तृत्रैविध्यं वदन् सन् प्रथमं सात्त्विकं कर्त्तारं आह। मुक्तसंग इति। हे पार्थ ! ज्ञानिभिः इति शेषः। सात्त्विकः सत्त्वगुणात्मकः कर्त्ता कर्मकर्त्ता उच्यते कथ्यते। कथंभूतः कर्ता। मुक्तसंगः मुक्तः त्यक्तः संगः कर्तृत्वाभिमानः येन सः मुक्तसंगः। पुनः कथंभूतः। अनहंवादी अहंकारेण गर्वोक्त्या वदतीति अहंवादी अहंवादी न भवतीति अनहंवादी गर्वोक्तिशून्यः। पुनः कथंभूतः। धृत्युत्साहसमन्वितः धृतिः स्वधर्मानुष्ठाने वैकल्यराहित्येन धैर्यं च उत्साहः स्वधर्मानुष्ठानहर्षोद्यमः धृत्युत्साहौ धृत्युत्साहाभ्यां समन्वितः युक्तः धृत्युत्साहसमन्वितः। पुनः कथंभूतः कर्ता। सिद्ध्यसिद्ध्योः सिद्धिः कर्मसमाप्तिः च असिद्धिः केनचित्प्रतिबंधेन असमाप्तिः सिद्ध्यसिद्धी तयोः सिद्ध्यसिद्ध्योः निर्विकारः हर्षविषादशून्यः ॥ २६ ॥ राजसं कर्त्तारं आह। रागीति। हे पार्थ! ज्ञानिभिः राजसः रजोगुणात्मकः कर्त्ता कर्मकर्त्ता परिकीर्त्तितः कथितः। कथंभूतः कर्त्ता। रागी पुत्रादिकुशलनिमित्ते कर्मणि रागो विद्यते यस्य सः रागी। पुनः कथंभूतः सः। कर्मफलप्रेप्सुः कर्मणां फलं प्राप्तुं इच्छतीति कर्मफलप्रेप्सुः परलोके फलाभिलाषी। पुनः कथंभूतः सः। लुब्धः आरब्धे कर्मणि यथोचितधनत्यागं अकृत्वा परस्वाभिलाषी। पुनः कथंभूतः सः। हिंसात्मकः अविधिना पशुमारकस्वभावः।

हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥२७॥
अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८ ॥
बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।

पुनः कथं भूतः सः । अशुचिः यथोक्तशौचशून्यः । पुनः कथंभूतः सः । हर्षशोकान्वितः हर्षः लाभजनितः च शोकः अलाभजनितः हर्षशोकौ हर्षशोकाभ्यां अन्वितः युक्तः हर्षशोकान्वितः ॥२७॥ तामसं कर्त्तारं आह । अयुक्त इति । हे पार्थ ! ज्ञानिभिः इति शेषः । तामसः तमोगुणात्मकः कर्त्ता कर्मकर्त्ता उच्यते कथ्यते । कथंभूतः कर्त्ता । अयुक्तः न युक्तः योग्यः अयुक्तः अनवहितांतःकरणः । पुनः कथंभूतः । प्राकृतः विवेकशून्यः शास्त्रसंस्कारशून्यः । पुनः कथंभूतः । स्तब्धः वृक्ष इव अनम्रः किंच शठः स्वसामर्थ्यवंचकः । पुनः कथंभूतः । नैष्कृतिकः निष्ठुरस्वभावः । पुनः कथंभूतः । अलसः स्वजीवनहेतुभूतेपि उद्योगरहितः । पुनः कथंभूतः । विषादी विषादः खेदः यस्यास्तीति विषादी स्वस्थावस्थायामपि आक्रोशशोकस्वभावः । पुनः कथंभूतः । दीर्घसूत्री दीर्घं सूत्रं कर्तव्यं यस्यास्तीति दीर्घसूत्री अद्य वा श्वः शीघ्रं कर्तव्यं तत् कर्तव्यं मासे पक्षे अयने करोति इति दीर्घकालविधायी ॥२८॥ इदानीं बुद्धेः त्रैविध्यं दर्शयति । बुद्धेरिति । हे धनंजय ! धनं आत्मधनं जयतीति धनंजयः तत्संबुद्धौ हे धनंजय हे अर्जुन ! त्वं बुद्धेः निश्चयात्मिकायाः बुद्धेः चेत्यपरं धृतेः धारणायाः गुणतः गुणेभ्यः इति गुणतः सत्त्वादिगुणेभ्यः त्रिविधं त्रिप्रकारकं भेदं शृणु अवधारय । कथंभूतं भेदम् । पृथक्त्वेन सत्त्वादिभिन्नभावेन मया प्रोच्यमानं

प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ! ॥ २९ ॥
प्रवृत्तिं च निवृत्तिं च कार्याकार्यें भयाभये ।
बंधं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥ ३० ॥
यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।

प्रोच्यतेसौ प्रोच्यमानः तं प्रोच्यमानं कथ्यमानम्। कथंभूतेन पृथक्त्वेन। अशेषेण समग्रेण गुणभेदेन त्रिधा भवति तमवधारयेत्यर्थः ॥ २९ ॥ एवं बुद्धिधृत्योः त्रिविधं भेदं प्रतिज्ञाय आदौ बुद्धित्रैविध्यं वदन् सन् प्रथमं सात्त्विकीं बुद्धिं दर्शयति। प्रवृत्तिमिति। हे पार्थ ! या प्रसिद्धा बुद्धिः निश्चयात्मिका प्रवृत्तिं धर्मप्रवृत्तिं अथवा संसारहेतुभूतं प्रवृत्तिमार्गं चेत्यपरं निवृत्तिं अधर्मात् परावृत्तिं अथवा मोक्षहेतुभूतं निवृत्तिमार्गं चेत्यपरं कार्याकार्ये कार्यं इदं योग्यं च अकार्यं इदं अयोग्यं कार्याकार्ये कर्त्तव्याकर्त्तव्ये चेत्यपरं भयाभये भयं लोकशास्त्रदंडत्रासः च अभयं लोकशास्त्रदंडत्रासराहित्यं भयाभये चेत्यपरं बंधं अनेककर्मभिः बंधनं चेत्यपरं मोक्षं अनेकसंसारेभ्यो विमोक्षणं वेत्ति जानाति सा प्रसिद्धा बुद्धिः सात्त्विकी सत्त्वगुणात्मिका। भवेत् इति शेषः ॥ ३० ॥ राजसीं बुद्धिं आह। ययेति। हे पार्थ ! पुरुषः इति शेषः। यया बुद्ध्या धर्मं धर्मरूपं कर्म चेत्यपरं अधर्मं अधर्मरूपं कर्म चेत्यपरं कार्यं कर्त्तुं योग्यं कार्यं कर्त्तव्यं चेत्यपरं अकार्यं कर्तुं योग्यं न भवति तत् अकार्यं अकर्तव्यं अयथावत् यथावत् यथाशास्त्रं न भवति तत् अयथावत् संशयास्पदत्वेन प्रजानाति प्रकर्षेण जानाति सा प्रसिद्धा बुद्धिः राजसी रजोगुणात्मिका भवेत् । धर्माधर्मौ सात्त्विकीबुद्धिवत् राजसी विजानाति। अत्र

अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥
अधर्मं धर्ममिति या मन्यते तमसा वृता ।
सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ३२ ॥
धृत्या यया धारयते मनःप्राणेंद्रियक्रियाः ।

को विशेषः ? राजसी कदाचित् धर्मेण अर्थलाभो भवति धर्मं करोति । कदाचित् अधर्मेण अर्थलाभः भवति अधर्मं करोति । तथा सात्त्विकी न । राजस्यां संशयबाहुल्यात् ॥ ३१ ॥ तामसीं बुद्धिं आह । अधर्ममिति । हे पार्थ ! या बुद्धिः अधर्मं न धर्मः अधर्मः तं अधर्मं धर्मं मन्यते आत्मज्ञानं विना यथा गृहस्थाश्रमोचितं पंचाग्निधारासंपातसहनोदकवासादिकं स्वस्य धर्मं मन्यते किं च आत्मज्ञानं विना यथा संन्यासाश्रमोचितकाषाय-वस्त्रधारणं कौपीनपरिवर्तनभिक्षादिकं धर्मं मन्यते तद्वत् इत्यर्थः । चेत्यपरं या बुद्धिः सर्वार्थान् सर्वे समस्ताश्च ते अर्थाः पदार्थाः सर्वार्थाः तान् सर्वार्थान् लौकिकपदार्थान् निषिद्धान् विपरीतान् योग्यान् मन्यते । यद्वा ये योग्याः पदार्थाः संति ते पदार्थाः निषिद्धाः भवंति । हे पार्थ ! सा बुद्धिः तामसी तमोगुणात्मिका पंडितैः ज्ञेया । कथंभूता बुद्धिः । तमसा तमोगुणेन आवृता व्याप्ता ॥ ३२ ॥ इदानीं प्रतिज्ञातं धृतित्रयं दर्शयन् सन् प्रथमं सात्त्विकीं धृतिमाह । धृत्या ययेति । हे पार्थ ! पुरुषः इति शेषः । यया प्रसिद्धया धृत्या धारणया मनःप्राणेंद्रियक्रियाः मनः कामक्रोधादिशक्तिः च प्राणः प्रवृत्तकर्मजननानुकूलाशक्तिः च इंद्रियाणि इंद्रियव्यापारशक्तयः मनःप्राणेंद्रियाणि मनःप्राणेंद्रियाणां क्रियाः स्वाभाविकप्रवृत्तयः मनः-

योगेनाऽव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥ ३३ ॥
यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ।
प्रसंगेन फलाकांक्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥
यया स्वप्नं भयं शोकं विषादं मदमेव च ।

प्राणेंद्रियक्रियाः धारयते धारणं करोति सा प्रसिद्धा धृतिः धारणा सात्त्विकी सत्त्वगुणात्मिका ज्ञेया। कथंभूतया धृत्या। योगेन चित्तवृत्तिनिरोधेन अव्यभिचारिण्या व्यभिचरति सा व्यभिचारिणी व्यभिचारिणी न भवति सा अव्यभिचारिणी तया अव्यभिचारिण्या रजस्तमःकार्यविषयैः अनाकृष्टरूपया ॥ ३३ ॥ राजसीं धृतिं आह। ययेति। हे अर्जुन! पुरुषः इति शेषः। यया प्रसिद्धया धृत्या धारणया धर्मकामार्थान् धर्मश्च कामश्च अर्थश्च धर्मकामार्थाः तान् धर्मकामार्थान् त्रिवर्गभूतान्। पुरुषार्थत्वेन इति शेषः। पुरुषार्थस्य भावः पुरुषार्थत्वं तेन पुरुषार्थत्वेन धारयते धारणं करोति। हे पार्थ! सा प्रसिद्धा धृतिः धारणा राजसी रजसः रजोगुणस्य इयं राजसी रजोगुणात्मिका ज्ञेया। कथंभूता धृतिः। प्रसंगेन धर्मकामार्थातिसक्त्या फलाकांक्षी फलं आकांक्षते इच्छते सा फलाकांक्षी ॥ ३४ ॥ इदानीं तामसीं धृतिं आह। ययेति। हे पार्थ! दुर्मेधाः दुष्टा निषिद्धाचरणनिष्ठा मेधा बुद्धिर्यस्य सः दुर्मेधाः पुरुषः यया धृत्या स्वप्नं निद्रां अथवा स्वप्नं मनोरथं चेत्यपरं भयं त्रासं चेत्यपरं शोकं गतस्यानुचिंतनं चेत्यपरं विषादं खेदं अन्येन अपकृते सति दुःखं चेत्यपरं मदं धनादितया उन्मादं एवं कदापि न विमुंचति न त्यजति सा प्रसिद्धा धृतिः धारणा तामसी तमोगुणस्य इयं तामसी तमो-

न विमुंचति दुर्मेधा धृतिः सा पार्थ तामसी ॥ ३५ ॥
सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ! ।
अभ्यासाद्रमते यत्र दुःखांतं च निगच्छति ॥ ३६ ॥
यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।

गुणात्मिका ज्ञेया । यथा धृत्या सर्वार्थात् भ्रश्यति ॥ ३५ ॥ प्रसंगात् सुखस्यापि त्रैविध्यं अर्धेन प्रतिजानीते । सुखमिति । हे भरतर्षभ ! भरतेषु भरतराजेषु ऋषभः श्रेष्ठः भरतर्षभः तत्संबुद्धौ हे भरतर्षभ ! त्वं इदानीं गुणभेदेन त्रिविधं त्रिप्रकारं सुखं मे मम वचनात् शृणु । एवं सुखत्रैविध्यं प्रतिज्ञाय सार्धेन सात्त्विकं सुखं दर्शयति । अभ्यासादिति । पुरुषः यत्र यस्मिन् सुखे अभ्यासात् अतिपरिचयात् रमते यथा शास्त्रेण अतिपरिचयेन तत् सुखं प्रतिपद्य प्राप्य विश्रांतिं आप्नोति तथा अध्यात्मशास्त्रपरिचयात् स्वात्मनि आनंदरूपे रमते न तु विषयेंद्रियसंयोगजन्ये विषयसुखे चेत्यपरं यस्मिन् सुखे रममाणः सन् दुःखांतं दुःखस्य त्रिविधतापस्य अंतः नाशः दुःखांतः तं दुःखांतं निगच्छति नितरां प्राप्नोति ॥ ३६ ॥ विषयसुखमिव तात्कालिकरतिजनकं न भवति इति उक्तं तर्हि तत् कथं इत्यपेक्षायां तद्विशिनष्टि । यत्तदग्र इति । हे पार्थ ! यत्तत् किमपि सुखं अग्रे सुखप्राप्तिसाधनकाले प्रथमं विषमिव विषप्रवृत्तिहेतुभूतं तिक्तनिंबादिरसपानवत् दुःखजनकम् । भवति इति शेषः । परिणामे परिणामकाले आरोग्यादिवत् अमृतोपमं अमृतं उपमा उपमानं यस्य तत् अमृतोपमं अमृततुल्यं भवति तत् सुखं सात्त्विकं सत्त्वस्य सत्त्वगुणस्य इदं सात्त्विकं सत्त्वगुणात्मकम् । ज्ञानिभिः इति

तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥३७॥
विषयेंद्रियसंयोगात् यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८ ॥
यदग्रे चानुबंधे च सुखं मोहनमात्मनः ।

शेषः । प्रोक्तं उच्चारितम् । कथंभूतं सुखम् । आत्मबुद्धिप्रसादजं आत्मनि परमेश्वरे बुद्धिः आत्मबुद्धिः आत्मबुद्धेः प्रसादः रजस्तमोमलत्यागेन अभिमुखता आत्मबुद्धिप्रसादः आत्मबुद्धिप्रसादात् जातं आत्मबुद्धिप्रसादजम् ॥ ३७ ॥ राजसं सुखं आह । विषयेति । हे पार्थ ! यत् तत् किमपि स्त्रीसंगादिसुखं विषयेंद्रियसंयोगात् विषयाः शब्दस्पर्शरूपरसगंधविषयाः च इंद्रियाणि त्वक्छ्रोत्रादीनि विषयेंद्रियाणि विषयेंद्रियाणां संयोगः संबंधः विषयेंद्रियसंयोगः तस्मात् विषयेंद्रियसंयोगात् अग्रे प्रथमक्षणे अमृतोपमं अमृतं उपमा उपमानं यस्य तत् अमृतोपमम् । भवति इति शेषः । परिणामे परिणामकाले विषमिव जन्ममरणद्वारा आत्ममारकमिव भवति तत् प्रसिद्धं सुखं विषयसुखं राजसं रजसः रजोगुणस्य इदं राजसं स्मृतम् । मन्वादिभिः इति शेषः ॥ ३८ ॥ तामसं सुखमाह । यदग्र इति । हे अर्जुन ! यत् प्रसिद्धं सुखं अग्रे प्रथमक्षणे चेत्यपरं अनुबंधे पश्चाद्भाविनि काले आत्मनः अंतःकरणस्य मोहनं मोहयति तत् मोहनं मोहकरम् । अस्ति इति शेषः । तदेव मोहकरत्वं दर्शयति । कथंभूतं सुखम् । निद्रालस्यप्रमादोत्थं निद्रा सुषुप्तिः च आलस्यं गात्रश्रांततहेतुभूता तंद्रा च प्रमादः कर्तव्यार्थानुसंधानराहित्यं निद्रालस्यप्रमादाः निद्रालस्यप्रमादेभ्यः उत्तिष्ठति तत् निद्रालस्यप्रमा-

निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥
न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥४०॥
ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप! ।

द्रोत्थं तत् सुखं तामसं तमोगुणात्मकं उदाहृतं उच्चारितम् । मन्वादिभिः इति शेषः ॥ ३९ ॥ उपलक्षणेन सर्वस्यापि त्रैविध्यं उक्तम् । इदानीं प्रकरणार्थं उपसंहरति । न तदस्ति इति । हे पार्थ! यत् प्रसिद्धं सत्त्वं प्राणिजातं एभिः प्रस्तुतैः त्रिभिः गुणैः सत्त्वादिगुणैः मुक्तं हीनं गुणैः अव्याप्तं स्यात् भवेत् । तत् गुणहीनं सत्त्वं प्राणिजातं पृथिव्यां भूमौ वा अथवा दिवि स्वर्गे अथवा देवेषु देवलोकेषु नास्ति न विद्यते। कथंभूतैः गुणैः । प्रकृतिजैः प्रकृतेः मायायाः जाताः प्रकृतिजाः तैः प्रकृतिजैः प्रकृतिकार्यभूतैः वर्त्तमानसृष्टेः प्राक् न भूतं इदानीं नास्ति पुनः इत ऊर्ध्वं भाविनि सर्गे न भवेदित्यर्थः ॥४०॥ ननु—एवं सति सर्वस्य त्रिगुणात्मकत्वात् अनिर्मोक्षप्रसंगः प्रसज्येत । तत्र मोक्षे मुख्यो भक्तियोगः केनोपायेन लभ्यते साधनभक्तिरूपेण स्वस्वविहितकर्मणा ईश्वरं आराध्य तत्प्रसादलभ्यां भक्तिं अवाप्य गुणातीतः भूत्वा कृतकृत्यो भवति इत्यभिप्रायेणाह । ब्राह्मणेति । हे परंतप ! हे शत्रुंजय! ब्राह्मणक्षत्रियविशां ब्राह्मणाश्च क्षत्रियाश्च विशश्च ब्राह्मणक्षत्रियविशः तेषां ब्राह्मणक्षत्रियविशां त्रैवर्णिकानां द्विजन्मनां चेत्यपरं शूद्राणां कर्माणि गुणैः सत्त्वादिगुणैः प्रविभक्तानि परस्परविलक्षणानि । भवंति इति शेषः । कथंभूतैः गुणैः। स्वभावप्रभवैः स्वभावः सात्त्विकादिस्वभावः प्रभवति येभ्यस्ते स्वभा-

कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥
शमो दमस्तपः शौचं क्षांतिरार्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ ४२ ॥
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।

वप्रभवाः तैः स्वभावप्रभवैः। द्विजातिसंस्काररहितत्वात् शूद्राणां ब्राह्मणादिसमासात् पृथक्करणं ज्ञेयम् ॥ ४१ ॥ सत्त्वात् ब्राह्मणजातिस्वभावः। सत्त्वोपसर्जनात् रजसः क्षत्रियजातिस्वभावः तमउपसर्जनात् रजसः वैश्यजातिस्वभावः केवलात् तमसः शूद्रजातिस्वभावः इति उक्तम्। तत्र कस्य वर्णस्य कः स्वभावः इत्यपेक्षायां चतुर्णां वर्णानां स्वभावान् दर्शयति। शम इति। हे पार्थ! एतत् ब्रह्मकर्म ब्रह्मणः ब्राह्मणस्य कर्म ब्रह्मकर्म स्वभावजं स्वभावात् जातं स्वभावजं अस्ति। एतत्किम्। शमः अंतःकरणनियमः चेत्यपरं दमः बाह्येंद्रियोपरमः च तपः कृच्छ्रचांद्रायणादि च शौचं मृज्जलाभ्यां देहसंस्कारः च क्षांतिः सहिष्णुता च आर्जवं अकुटिलतया ऋजुस्वभावः च ज्ञानं सर्वशास्त्राभिज्ञत्वं चेत्यपरं विज्ञानं अनुभवजन्यं ज्ञानं चेत्यपरं आस्तिक्यं वेदोक्तेषु कर्मसु विश्वासः परलोकः अस्ति इति निश्चयः ॥ ४२ ॥ क्षत्रियस्य स्वाभाविकं कर्म आह। शौर्यमिति। हे पार्थ! त्वं एतत् प्रसिद्धं क्षात्रं क्षतात् दुःखात् त्रायते संरक्षते इति क्षत्रं क्षत्रस्य क्षत्रियस्य इदं क्षात्रं कर्म स्वभावजं स्वभावात् जातं स्वभावजं नैसर्गिकम्। जानीहि इति अध्याहारः। एतत् किम्। शौर्यं शूरस्य कर्म शौर्यं पराक्रमः चेत्यपरं तेजः प्रागल्भ्यं चेत्यपरं धृतिः धैर्यं चेत्यपरं दाक्ष्यं दक्षस्य कुशलस्य इदं दाक्ष्यं कौशल्यं अथवा

दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥
कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥
स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।

अनलसता चेत्यपरं युद्धे संग्रामे अपलायनं न पलायनं अपलायनं अपराङ्मुखता चेत्यपरं दानं औदार्यं याचकेषु मुक्तहस्तता चेत्यपरं ईश्वरभावः नियमनशक्तिः ॥ ४३ ॥ वैश्यस्य कर्म आह । कृषीति । हे पार्थ ! त्वं एतत् प्रसिद्धं वैश्यकर्म वैश्यस्य वैश्यजातेः इदं वैश्यं वैश्यं च तत् कर्म च वैश्यकर्म स्वभावजं स्वभावात् जातं स्वभावजं जानीहि । एतत् किम् । कृषिगोरक्ष्यवाणिज्यं गाः धेनूः रक्षतीति गोरक्षः गोरक्षस्य भावः गोरक्ष्यं कृषिः धान्योत्पत्तिनिमित्तं क्षेत्रकर्षणं च गोरक्ष्यं पाशुपाल्यं च वाणिज्यं क्रयविक्रयादि एतेषां समाहारः कृषिगोरक्ष्यवाणिज्यम् । शूद्रस्य कर्माह । त्वं शूद्रस्य कर्म स्वभावजं स्वभावात् जातं स्वभावजं नैसर्गिकं जानीहि । कथंभूतं कर्म । परिचर्यात्मकं परिचर्या वर्णत्रयसेवा आत्मा स्वरूपं यस्य तत् परिचर्यात्मकं वर्णत्रयसेवारूपम् ॥ ४४ ॥ किमभिप्रायं ब्राह्मणादिस्वभावजकर्माभिधानं इत्यत आह । स्वे स्व इति । हे पार्थ ! यः नरः स्वे स्वे स्वकीये स्वकीये कर्मणि वर्णात्मके कर्मणि अभिरतः सन् तात्पर्येण कर्त्तव्यतया परिनिष्ठितः सन् संसिद्धिं सम्यक् सिद्धिः संसिद्धिः तां संसिद्धिं चित्तशुद्धिद्वारा स्वरूपावस्थानलक्षणां परमात्मप्राप्तिं लभते प्राप्नोति । स्वे स्वे कर्मण्यभिरतः कथं संसिद्धिं

स्वकर्मनिरतः सिद्धिं यथा विंदति तच्छृणु ॥ ४५ ॥
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विंदति मानवः ॥ ४६ ॥
श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।

लभते इत्याक्षिप्य येन क्रमेण सिद्धिं प्राप्नोति तं क्रमं दर्शयन् सन् श्रोतारं अभिमुखीकरोति। सः नरः यथा येन प्रकारेण स्वकर्मनिरतः सन् स्वस्य आत्मनः कर्म स्वकर्म स्वकर्मणि निरतः अत्यंतरतः स्वकर्मनिरतः सिद्धिं परमात्मप्राप्तिरूपां मुक्तिं विंदति लभते। त्वं तत् तथाप्रकारं शृणु ॥ ४५ ॥ एवं श्रोतारं संमुखीकृत्य प्रतिज्ञातं सिद्धिप्राप्तिप्रकारं दर्शयति। यत इति। हे पार्थ! यतः यस्मादिति यतः यस्मात् अंतर्यामिणः परमात्मनः सकाशात् भूतानां अध्यात्मादिभेदभिन्नानां चराचराणां प्रवृत्तिः नियतव्यापारेषु प्रवर्तनं भवति। येन सत्यज्ञानानंतेन परमात्मना सर्वं संपूर्णं इदं चराचरं विश्वं ततं व्याप्तम्। यथा सुवर्णेन कुंडलादि। मानवः मनोः मैथुनसृष्टौ उत्पन्नः मानवः स्वकर्माधिकारी स्वकर्मणा स्वस्य आत्मनः कर्म स्वकर्म तेन स्वकर्मणा यथावर्णाश्रमविहितानुष्ठानेन तं परमात्मानं अभ्यर्च्य पूजयित्वा सिद्धिं क्रमेण मुक्तिं विंदति प्राप्नोति ॥ ४६ ॥ ननु—स्वकर्मणेति नियमः किमिति क्रियते ? कदाचित् स्वकर्म विगुणं चेत् परकर्मणा परमात्माराधनं भवतु इत्याशंक्याह। श्रेयानिति। हे पार्थ ! स्वनुष्ठितात् सम्यक् अनुष्ठितः अधिष्ठितः स्वनुष्ठितः तस्मात् स्वनुष्ठितात् परधर्मात् परेषां अन्येषां धर्मः परधर्मः तस्मात् परधर्मात् विगुणः विगतः गुणो यस्य सः विगुणः सदोषः स्वधर्मः स्वस्य

स्वभावनियतं कर्म कुर्वन् नाप्नोति किल्बिषम् ॥४७॥
सहजं कर्म कौंतेय सदोषमपि न त्यजेत् ।
सर्वारंभा हि दोषेण धूमेनाग्निरिवावृताः ॥ ४८ ॥
असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।

आत्मनः धर्मः स्वधर्मः श्रेयान् श्रेष्ठः अस्ति । पुरुषः स्वभावनियतं स्वभावस्य ब्राह्मणादिजातेः नियतं नियमोक्तं स्वभावनियतं कर्म कुर्वन् करोतीति कुर्वन् सन् किल्बिषं दोषं नाप्नोति न प्राप्नोति। प्रायश्चित्ती न भवतीत्यर्थः ॥ ४७ ॥ यदि पुनः सांख्यदृष्ट्या स्वधर्मे हिंसालक्षणदोषं मत्वा परधर्मं श्रेष्ठं मन्यते तर्हि सदोषत्वं परधर्मेपि तुल्यं इत्याशयेनाह । सहजमिति । स्वधर्मकारी इति शेषः । सहजं ब्राह्मणादियोनिजन्मना सह जातं सहजं सदोषमपि हिंसादिदोषेण सहवर्तमानमपि कर्म न त्यजेत् । हे कौंतेय! हि यस्मात् कारणात् सर्वारंभाः आरभ्यंत इति आरंभाः सर्वे संपूर्णाश्च ते आरंभाः कर्माणि सर्वारंभाः दोषेण आवृताः व्याप्ताः संति । तत्र दृष्टांतमाह । सहजेन धूमेन अग्निरिवेति । प्रवृत्तिः अथवा निवृत्तिः साधनतया दोषं विना न सिद्ध्यति ॥ ४८ ॥ एवं फलशून्येन कर्मणा ईश्वराराधने कृते सति किं फलं स्यात् इत्यभिप्रायेणाह । असक्तबुद्धिरिति । हे कौंतेय! पुरुषः साधनचतुष्टयसंपन्नः सन् इति अध्याहारः । परमां चरमां नैष्कर्म्यसिद्धिं निर्गतं गतं कर्म यस्मात् निष्कर्म निष्कर्म एव नैष्कर्म्यं नैष्कर्म्यस्य ब्रह्मपदस्य सिद्धिः प्राप्तिः नैष्कर्म्यसिद्धिः तां नैष्कर्म्यसिद्धिं संन्यासेन कर्मफलत्यागेन अधिगच्छति प्राप्नोति । कथंभूतः पुरुषः ।

नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९ ॥
सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ।
समासेन च कौंतेय निष्ठा ज्ञानस्य या परा ॥ ५० ॥

सर्वत्र ईश्वराराधनार्थैः स्वधर्मानुष्ठानैः शुद्धांतःकरणेन इहामुत्रफलभोगेषु असक्तबुद्धिः असक्ता संगशून्या बुद्धिर्यस्य सः असक्तबुद्धिः अत एव जितात्मा जितः वशीकृतः आत्मा कार्यकारणसंघातः येन सः जितात्मा अहंकारशून्यः। पुनः कथंभूतः पुरुषः। विगतस्पृहः विगता आत्मनोन्यत्र न गता स्पृहा इच्छा यस्य सः विगतस्पृहः विषयाभिलाषशून्यः संन्यासेनैव मोक्षः न कर्मणा इत्यभिप्रायेणोक्तम्—'मुखजानामयं धर्मो यद्विष्णोर्लिंगधारणम्। बाहुजातोरुजातानां नायं धर्मः प्रशस्यते ॥' ब्राह्मणस्यैव संन्यासे अधिकारः न क्षत्रियवैश्ययोः। शूद्रस्य तु उपनयनाभावात् स दूरतः उपास्तः। तस्मात् संन्यासेनैव ब्राह्मणस्य मोक्षाधिगमः न तद्व्यतिरिक्तानां त्रयाणां वर्णानाम्। वर्णबाह्यानां नैव इति भगवतः अभिप्रायो गम्यते। कर्मफलत्यागेन ईश्वरार्पितकर्मणा बहवः सिद्धिं गताः ॥ ४९ ॥ उक्तविशेषणविशिष्टः कथं सिद्धिं प्राप्नोति इत्यपेक्षायामाह। सिद्धिं प्राप्त इति। हे कौंतेय! पुरुषः इति अध्याहारः। सिद्धिं नैष्कर्म्यसिद्धिं प्राप्तः सन् अधिकारी सन् यथा येन प्रकारेण ब्रह्म प्रत्यक्स्वरूपं प्राप्नोति आत्मत्वेन जानाति तथा तेन प्रकारेण त्वं समासेन संक्षेपेण मे मत्तः परात्परगुरोः निबोध जानीहि। ननु—एवं साधारणं किमिति नियोजयसि इत्याशंक्य इयमेव ज्ञानस्य पराकाष्ठा इत्यभिप्रायेणाह। या प्रसिद्धा ज्ञानस्य परा सर्वोत्कृष्टा निष्ठा सीमा अस्ति सर्वांतरं ब्रह्मैव ज्ञानस्य परमा सीमेत्यर्थः ॥ ५० ॥ तदेव ज्ञानमेव

बुद्ध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य च।
शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च॥ ५१ ॥
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।

आह । बुद्ध्या इति । हे कौंतेय! मुमुक्षुः इति शेषः। मोक्तुं-इच्छतीति मुमुक्षुः विशुद्धया पूर्वं स्वधर्मानुष्ठानेन रागादिमलरहितया बुद्ध्या निश्चयात्मिकया युक्तः सन् चेत्यपरं धृत्या आत्मावष्टंभेन आत्मानं स्थूलं शरीरं नियम्य नियुज्य चेत्यपरं शब्दादीन् शब्दः आदिर्येषां ते शब्दादयः तान् शब्दादीन् विषयान् विषिंचंति निबध्नंति ते विषयाः तान् विषयान् त्यक्त्वा त्वंपदं शोधयित्वा चेत्यपरं रागद्वेषौ रागः विषयप्रीतिः च द्वेषः अमर्षः रागद्वेषौ अंतःकरणवृत्तिविशेषौ व्युदस्य निरस्य ब्रह्मभूयाय ब्रह्मभावाय कल्पते योग्यो भवति इति तृतीयश्लोकस्य चरमपादेन संबंधः ॥५१॥ एवं च स्थूलसूक्ष्मधर्मपरित्यागेन त्वंपदशोधने कृते सति लक्ष्यं अधिकृत्य वर्तमानेन कथं भाव्यं इत्यपेक्षायां आह । विविक्तेति । कथंभूतः मुमुक्षुः । विविक्तसेवी विविक्तं पवित्रं परमात्मस्वरूपं सेवितुं शीलं यस्य सः विविक्तसेवी अत एव लघ्वाशी लघु स्वल्पं यथेष्टं विना भिक्षान्नमात्रं अशितुं भक्षितुं शीलं स्वभावः यस्य सः लघ्वाशी अत एव यतवाक्कायमानसः वाक् वाणी च कायः देहः च मानसं अंतःकरणं वाक्कायमानसानि यतानि नियमितानि वाक्कायमानसानि यस्य सः यतवाक्कायमानसः अत एव नित्यं सर्वदा ध्यानयोगपरः ध्यानं दृश्यतिरस्कारः अनुभवप्रत्ययः च योगः जीवब्रह्मणोः ऐक्यं ध्यानयोगौ ध्यानयोगावेव परः पुरुषार्थौ यस्य सः ध्यानयोगपरः । पुनः कथंभूतः मुमुक्षुः । नित्यं निरंतरं वैराग्यं विगतः

ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः॥ ५२॥
अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम्।
विमुच्य निर्ममः शांतो ब्रह्मभूयाय कल्पते ॥ ५३॥
ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥५४॥

रागो यस्मात् तत् विरागं विरागमेव वैराग्यं ब्रह्म समुपाश्रितः सम्यक् तादात्म्यलक्षणसामीप्येन उपाश्रितः स्थितः समुपाश्रितः ॥ ५२ ॥ किंच अहंकारमिति। पुनः कथंभूतः मुमुक्षुः। अहंकारं देहे अहं इति अनुकरणं चेत्यपरं बलं वैदिकाक्रियानिवर्तनसामर्थ्यं च दर्पं धनाढ्यतया पराभवहेतुं च कामं सर्वाभिलाषं चेत्यपरं क्रोधं प्रसिद्धं चेत्यपरं परिग्रहं जायापुत्रादिपरिग्रहं विमुच्य त्यक्त्वा निर्ममः निर्गतः गतः मम देहो मदीय इति ममता यस्मात्सः निर्ममः ममताशून्यः अत एव शांतः निर्विकारः एवंलक्षणः मुमुक्षुः ब्रह्मभूयाय ब्रह्मभावाय कल्पते योग्यो भवति ॥ ५३ ॥ ब्रह्मभूतः कैः लक्षणैः ज्ञायते इत्यत आह। ब्रह्मभूत इति। हे कौंतेय! ब्रह्मभूतः ब्रह्मरूपेण भूतः जातः ब्रह्मभूतः प्रसन्नात्मा सन् प्रसन्नः आनंदरूपः आत्मा स्वरूपं यस्य सः प्रसन्नात्मा प्रसन्नचित्तः न शोचति नष्टं प्रति न शोकं करोति स्वस्य सत्यत्वेन नाशाभावात् चेत्यपरं न कांक्षति किमपि नेच्छति। चित्स्वरूपेण सर्वत्र परिपूर्णत्वात्। कथंभूतो ब्रह्मभूतः। सर्वेषु समस्तेषु भूतेषु ब्रह्मादिस्थावरांतेषु समः समदृष्टिः कटककुंडलादिषु सुवर्णमिव सः ब्रह्मभूतः परां मद्भावलक्षणां मद्भक्तिं मयि परमात्मनि भक्तिः भजनं मद्भक्तिः तां मद्भक्तिं लभते तादात्म्यं प्राप्नोति ॥५४॥ ततोपि किं इत्यत आह। भक्त्येति। हे कौंतेय! अहं यावान्

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनंतरम् ॥ ५५ ॥
सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६ ॥

देशकालवस्तुपरिच्छेदशून्यः अस्मि चेत्यपरं यः सत्यज्ञानरूपः अस्मि ब्रह्मभूतः भक्त्या ऐकात्म्यलक्षणया मां परमात्मानं तत्त्वतः याथार्थ्यज्ञानेन देशकालवस्तुपरिच्छेदशून्यं सत्यज्ञानरूपं परमात्मानं अभिजानाति समीपं जानाति । किंच ततः तदनंतरं यथार्थज्ञानप्राप्त्यनंतरं तत्त्वतः यथाशास्त्रं ज्ञात्वा अहं ब्रह्मास्मीति विदित्वा अनुभूय तदनंतरं प्रारब्धक्षयानंतरं मां सत्यादिलक्षणं विशते प्रविशति विदेहकैवल्यं प्राप्नोति इत्यर्थः । यथा घटध्वंसे घटाकाशः महाकाशं प्रविशते तद्वत् ॥ ५५ ॥ एवं केनोपायेन कदा प्राप्नोति इत्यपेक्षायामाह । सर्वकर्माणीति । हे कौंतेय ! पुरुषः यदा यस्मिन् काले इति शेषः । मद्व्यपाश्रयः सन् अहमेव भासरूपदेहद्वयस्य व्यपाश्रयः अधिष्ठानत्वेन आश्रयो यस्य सः मद्व्यपाश्रयः सर्वकर्माणि लौकिकवैदिकानि कर्माणि च नित्यनैमित्तिकानि कर्माणि सदा सर्वदा मदर्थमेव कुर्वाणः करोतीति कुर्वाणः । भवति इति शेषः । तदा तेनैव मदर्थकर्मकरणेन हेतुना मत्प्रसादात् मम अंतर्यामिणः परमेश्वरस्य प्रसादः मत्प्रसादः तस्मात् मत्प्रसादात् मत्प्रसादेन शाश्वतं शश्वत् निरंतरं भवं शाश्वतं अव्ययं न विद्यते व्ययो नाशः यस्य तत् अव्ययं सदैकरूपं पदं स्वरूपं अवाप्नोति तादात्म्येन जानाति ॥५६॥

चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ५७ ॥
मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि।
अथ चेत्त्वमहंकारान्न श्रोष्यसि विनंक्ष्यसि ॥ ५८ ॥

यस्मादेवं तस्मात् त्वमपि एवं भव इत्याह। चेतसेति। हे पार्थ! त्वं चेतसा अंतःकरणविवेकेन यथा अवकाशबलेनैव सर्वव्यापाराः भवंति अवकाशे एव पर्यवसानं प्राप्नुवंति तथा सर्वाणि कर्माणि मत्सत्तया भवंति मय्येव प्रविशंति इति विवेकेन सर्वकर्माणि नित्यनैमित्तिककर्माणि मयि परमेश्वरे संन्यस्य मदर्पणबुद्ध्या संकल्प्य मत्परः अहमेव परः प्राप्यः पुरुषार्थो यस्य सः मत्परः भव। ननु—त्वत्परं चित्ताधीनं तत्तु चांचल्यात् अनेकपरं, कथं त्वत्परं भवेत् इत्यपेक्षायामाह। त्वं बुद्धियोगं बुद्धेः योगः वासुदेवः सर्वमिति निश्चयः बुद्धियोगः तं बुद्धियोगं उपाश्रित्य आश्रयित्वा सततं निरंतरं मच्चित्तः मयि परमेश्वरे चित्तं अंतःकरणं यस्य सः मच्चित्तः भव ॥ ५७ ॥ ननु—अत्यायाससाध्ये त्वत्परत्वे किं स्यात्? इत्याशंक्य तत् अर्धेन आह। मच्चित्त इति। हे पार्थ! त्वं मच्चित्तः सन् मयि परमेश्वरे चित्तं अंतःककरणं यस्य सः मच्चित्तः सर्वदुर्गाणि जन्ममरणसंकटानि सर्वदुर्गाणि मत्प्रसादात् मम परमेश्वरस्य प्रसादः सर्वप्रकारेण वर्तमानोपि मच्चित्तत्वात् अयं मया रक्षणीयः इति मत्कटाक्षः मत्प्रसादः तस्मात् मत्प्रसादात् तरिष्यसि संसारसंकटं न प्राप्स्यसि। एवं मया तव हितं उक्तं अनादृत्य स्वैरं वर्तमानस्य महान् अनर्थः भविष्यति इति अर्धेनाह। अथ मदुक्तश्रवणानंतरं त्वं अहंकारात् अहं नरावतारो न करिष्यामि इति अहंकारेण मम नियंतुः ईश्वरस्य वाक्यं न श्रोष्यसि चेत् न अंगीकरिष्यसि चेत् तर्हि विनंक्ष्यसि जीवभावेन संसारं प्राप्नोषि ॥ ५८ ॥

यदहंकारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९ ॥
स्वभावजेन कौंतेय निबद्धः स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥ ६० ॥
ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।

निश्चयेन अहं विनंक्ष्यामि बंधुभिः सह युद्धं न करिष्यामि इति चेत्तत्राह । यदिति । हे पार्थ ! त्वं मदुक्तं अनादृत्य केवलं अहंकारं अहमेव युक्तायुक्ताभिज्ञाता इति अभिमानं आश्रित्य अवलंब्य गोत्रवधदोषं प्रकटयित्वा न योत्स्ये स्वधर्मेण प्राप्तं युद्धं न करिष्यामि इति मन्यसे चेत् निश्चयं करिष्यसि चेत् तर्हि यत् ते तव एषः प्रसिद्धः व्यवसायः निश्चयः मिथ्या मृषैव । यद्यपि धर्मयुद्धं मोहात् न करिष्यामि इति मन्यसे तथापि प्रकृतिः क्षत्रियस्वभावः त्वां युद्धे नियोक्ष्यति बलात् प्रवर्तयिष्यति स्वहननाय प्रवृत्तान् भीष्मादीन् अवलोक्य त्वं अतिशूरत्वेन संभावितः सन् निरुद्योगः कथं भविष्यसि इत्यर्थः ॥ ५९ ॥ तदेव स्फुटयति । स्वभावजेनेति । हे कौंतेय ! त्वं स्वेन स्वकीयेन कर्मणा क्षत्रियकर्मणा निबद्धः सन् नितरां अत्यंतं बद्धः यंत्रितः निबद्धः; यत् स्वधर्माख्यं कर्म कर्त्तुं मोहात् मोहेन न इच्छसि तथापि एवं सत्यपि त्वं अवशः सन् न वशः न स्वाधीनः अवशः स्वभावस्वाधीनः सन् तत् स्वधर्माख्यं कर्म करिष्यसि । अत्र संशयो नास्ति । कथंभूतेन कर्मणा । स्वभावजेन स्वभावात् क्षत्रियस्वभावात् जातं स्वभावजं तेन स्वभावजेन । ईश्वरेणापि स्वभावः अन्यथा कर्त्तुं न शक्यते तव का वार्त्तेति भावः ॥ ६० ॥ तर्हि स्वभावबद्धः कथं मुक्तः स्यात् इत्याशंक्य सर्वस्यापि ईश्वरवर्त्तित्वात् तमेव ईश्वरमेव

भ्रामयन् सर्वभूतानि यंत्रारूढानि मायया ॥ ६१ ॥
तमेव शरणं गच्छ सर्वभावेन भारत ।
तत्प्रसादात्परां शांतिं स्थानं प्राप्स्यसि शाश्वतम् ॥ ६२ ॥
इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ।

अनन्यभावेन शरणं गच्छ मुक्तो भविष्यसि इत्याशयेनाह द्वाभ्याम्। ईश्वर इति। हे अर्जुन! ईश्वरः चराचरनियंता सर्वभूतानां ब्रह्मादिपिपीलिकांतानां हृद्देशे हृदः हृदयस्य देशः अवकाशः हृद्देशः तस्मिन् हृद्देशे तिष्ठति व्यापकोपि तदुपलब्धिस्थानत्वात् तिष्ठति इति उक्तम्। कथंभूतः ईश्वरः। मायया सृष्ट्यादिजननानुकूलस्वशक्त्या सर्वभूतानि ब्रह्मादिपिपीलिकांतानि भ्रामयन् भ्रामयतीति भ्रामयत् तत्तत्कर्मानुसारेण पूर्वदेहं परित्याज्य देहांतरं प्रापयन्। कथंभूतानि भूतानि। यंत्रारूढानि यंत्रे प्रारब्धयंत्रे आरूढानि यंत्रारूढानि प्रारब्धवशवर्तीनि ॥ ६१ ॥ एवं सति तेनैव ईश्वरेणैव स्वधर्माख्यं युद्धं स्वभावजं कर्म प्रापितं तत् न करिष्यामि इति तव संकल्पः नष्टो भविष्यति इति कृत्वा तमेव ईश्वरमेव प्रसाद्य कृतार्थो भव इत्याशयेनाह। तमेवेति। हे भारत! हे भरतवंशोद्भव! त्वं ईश्वराधीनः सन् सर्वभावेन सर्वप्रकारेण तमेव कार्यकारणनियंतारमेव शरणं गच्छ स्वरक्षणाय संनिधिं कुरु। ततः किं स्यात्? इत्याशंक्य तत्प्रसादात् कृतकृत्यो भवसीत्याशयेनाह। त्वं तत्प्रसादात् तस्य ईश्वरस्य प्रसादः अनुग्रहः तत्प्रसादः तस्मात् तत्प्रसादात् परां सर्वोत्कृष्टां शांतिं संसारोपरतिं प्राप्य शाश्वतं शश्वत् निरंतरं भवं शाश्वतं स्थानं सर्वाधिष्ठानं ब्रह्म प्राप्स्यसि ॥ ६२ ॥ सर्वगीतार्थं उपसंहरन् आह। इतीति। हे पार्थ! इति अनेन प्रकारेण ते तुभ्यं मया परमकारुणिकेन शास्त्रयोनिना सर्वज्ञेन ज्ञानं आत्मा-

विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६३ ॥
सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥६४॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।

त्मप्रकाशकं आख्यातं कथितम् । उपदिष्टमित्यर्थः । त्वं एतत् गीताशास्त्रं मदुपदिष्टं ज्ञानं अशेषेण समग्रेण विमृश्य विचार्य अवलोक्य दृढीकृत्य पश्चात् यथा येन प्रकारेण इच्छसि प्राप्तुं अभिलषसि तथा तेन प्रकारेण कुरु संपादय । कथंभूतं ज्ञानम् । गुह्यात् गोप्यात् गुह्यतरं अतिशयेन गुह्यं गोप्यं इति गुह्यतरं मंत्रयोगादीनां अतिरहस्यम् । एतस्मिन् अवलोकिते सति तव मोहः निवर्तिष्यत इति भावः ॥ ६३ ॥ अतिगंभीरं गीताशास्त्रं समग्रेण पर्यालोचयितुं अवलोकयितुं अशक्नुवतः अर्जुनस्य कृपया स्वयमेव तस्य गीताशास्त्रस्य सारं संगृह्य कथयति सर्वगुह्यतममिति त्रिभिः । हे अर्जुन ! त्वं मे मम वचः वाक्यं भूयः पुनः शृणु सावधानतया अवधारय । कथंभूतं वचः । परमं पातीति पं पं परमेश्वरं रमयति तत् परमं निरतिशयम् । पुनः कथंभूतम् । सर्वगुह्यतमं सर्वगुह्येभ्यः अति सर्वगुह्यतमं अतिगुह्यम् । पुनः पुनः कथने हेतुमाह । त्वं दृढं अत्यंतं मे मम इष्टः प्रियः असि इति मत्वा ततः तस्मात् हेतोः अहं ते तव हितं वक्ष्यामि पुनः गुह्यतमं वचः कथयामि । 'दृढमतिः' इति पाठः केचित् पठंति ॥ ६४ ॥ किं तत् इत्यपेक्षायामाह । मन्मना इति । हे पार्थ ! त्वं मन्मनाः मय्येव परमात्मन्येव मनः अंतःकरणं यस्य सः मन्मनाः भव । यथा पुरुषः राजानं भजति तथा मा भूः । किंच त्वं मद्भक्तः मामेव मनसा भजतीति मद्भक्तः भव । यथा पुत्रदारादिकं मनसा भजति तथा मा भूः ।

मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५ ॥
सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।

किंच त्वं मद्याजी मामेव बाह्येंद्रियैः यजितुं पूजितुं शीलं यस्य सः मद्याजी भव । किंच त्वं मां सर्वांतर्यामिणं नमस्कुरु नमस्कारं कुरु । अनेन किं स्यात् इत्याह । त्वं मामेव एष्यसि पुनर्जन्म न प्राप्स्यसि । अहं ते त्वांप्रति सत्यं यथा स्यात्तथा प्रतिजाने प्रतिज्ञां करोमि । ननु–मांप्रति प्रतिज्ञाकरणे को हेतुः तत्राह । हे पार्थ ! त्वं मे मह्यं अत्यंतं प्रियः इष्टः असि । त्वमेव अहं अहमेव त्वं इति ऐक्यानुभवाय प्रतिज्ञां करोमीति भावः ॥ ६५ ॥ ततोपि गुह्यतमं आह । सर्वधर्मानिति । हे अर्जुन ! त्वं सर्वधर्मान् सर्वे संपूर्णाश्च ते धर्माः तत्त्वमस्यादिमहावाक्यधर्माः सर्वधर्माः तान् सर्वधर्मान् कृपालुना सद्गुरुणा तत्त्वमसीति प्रथमं महावाक्यं उपदिष्टं तत्र धर्मान् सर्वज्ञत्वं किंचिज्ज्ञत्वं अपरोक्षत्वं परोक्षत्वं पूर्णत्वं सद्वयत्वं अनात्मत्वं ब्रह्मत्वं इति अविद्याकल्पितान् एकादशस्थान् विरुद्धान् तत्त्वंपदगतान् सर्वधर्मान् परित्यज्य अन्योन्यव्यभिचारित्वात् मिथ्यारूपान् त्यक्त्वा एकं सजातीयविजातीयस्वगतभेदरहितं मां परमेश्वरं शरणं व्रज आश्रयं व्रज उपाधिपरित्यागेन अखंडं भज । ननु–ये धर्माःअनादिपरंपरया प्राप्ताः मया त्यक्ताः संतः ते धर्माः त्वदधीनाः संतः मां कथं त्यक्ष्यंति इत्याशंक्याह । अहमिति । अत्र पापशब्देन धर्मग्रहणं लक्ष्यते । यावत् धर्माधर्मिभावः वर्त्तते तावत् दुःखरूपः संसारः न निवर्त्तते इति कृत्वा दुःखोपादानं धर्मः पापशब्देन उच्यते । तथा च अयं अर्थः । हे अर्जुन ! अहं धर्माधर्मनियंता त्वां बहिर्मुखं सर्वपापेभ्यः नाम सर्वधर्मेभ्यः मोक्षयिष्यामि मोचयिष्यामि । तेभ्यः वियुज्य स्वरूपेण युक्तं करिष्यामीत्यर्थः । तेभ्यः सर्वधर्मे-

अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥६६॥
इदं ते नातपस्काय नाभक्ताय कदाचन ।

भ्यः अहं कथं मुक्तः स्यां इति मा शुचः शोकं माकार्षीः। इति श्रीकृष्णाभिप्रायः। यद्वा द्वितीयार्थः—सर्वधर्मानिति। हे पार्थ! त्वं सर्वधर्मान् सर्वे च ते धर्माः नित्यनैमित्तिकधर्माः सर्वधर्माः तान् सर्वधर्मान् वर्णाश्रमविहितधर्मान् परित्यज्य विधिना संन्यस्य संन्यासं कृत्वा एकं सजातीयादिभेदरहितं मां निरुपहितं ब्रह्म शरणं व्रज वाक्यज्ञानेन ऐक्यं गच्छ। ननु—यावज्जीवपर्यंतं वेदप्रेरितानि कर्माणि परित्यज्य वर्तमानस्य पुरुषस्य वर्णाश्रमविहिताकरणप्रत्यवायोत्थपापानि स्युः इत्याशंक्याह। अहं सर्वाधिष्ठाता त्वां बहिर्मुखं सर्वपापेभ्यः विहिताकरणपापेभ्यः मोक्षयिष्यामि। यदा त्वं देहात्मबुद्धिं हित्वा अहं ब्रह्मास्मि इति मां शरणं गच्छसि तदैव तव सर्वपापविमोकः भविष्यति। इति हेतोः मा शुचः शोकं मा कुरु। अयं चिदानंदाभिप्रायः। अस्मिन्पक्षे पूर्वोक्तः सर्वार्थः अंतर्भवति इति ज्ञेयम्। अतोपि गुह्यतमं आह। यद्वा तृतीयार्थः। सर्वधर्मानिति। हे पार्थ! त्वं सर्वधर्मान् सर्वे संपूर्णाः च ते धर्माः वर्णाश्रमधर्माः सर्वधर्माः तान् सर्वधर्मान् परित्यज्य भक्त्यैव सर्वं भविष्यति इति दृढविश्वासेन त्यक्त्वा एकं अद्वितीयं मां परमेश्वरं शरणं व्रज मदेकशरणः भव। एवं वर्त्तमानः त्वं कर्मत्यागनिमित्तं पापं मा शुचः शोकं मा कार्षीः। यतः हेतोः अहं त्वां मदेकशरणं सर्वपापेभ्यः मोक्षयिष्यामि मुक्तं करोमि इति श्रीधराभिप्रायः॥६६॥ एवं गीतार्थं उपदिश्य तत्संप्रदायप्रवर्त्तने नियममाह। इदमिति। हे अर्जुन! इदं मयोक्तं गीतातत्त्वं ते त्वया अतपस्काय स्वधर्मानुष्ठा-

न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७ ॥
य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८ ॥
न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।

नहीनाय न वाच्यं न कथनीयम् । चेत्यपरं अभक्ताय न भक्तः अभक्तः तस्मै अभक्ताय स्वधर्मानुष्ठानयुक्तोपि यः मयि अभक्तः तस्मै न वाच्यं न वक्तव्यम् । चेत्यपरं कदाचन कदापि अशुश्रूषवे आलस्येन श्रोतुं इच्छुः शुश्रूषुः तथा न भवतीति अशुश्रूषुः तस्मै न वाच्यं न वक्तव्यम् । यः विशेषणत्रययुक्तः मां परमेश्वरं अभ्यसूयति मनुष्यदृष्ट्या दोषारोपेण निंदति तस्मै पुरुषाय कदाचन कदापि न वाच्यं न कथनीयम् । इत्यनेन संप्रदायशुद्धिर्दर्शिता ॥ ६७ ॥ एतैः दोषैः विरहितेभ्यः मद्भक्तेभ्यः गीताशास्त्रोपदेष्टुः फलं आह । य इदमिति । यः पुरुषः मदुपदिष्टतत्त्वज्ञानानुयायी परमं सर्वशास्त्रसारं गुह्यं उक्तप्रकारं इदं गीताशास्त्रं मद्भक्तेषु मम परमात्मनः भक्ताः अनन्योपासकाः मद्भक्ताः तेषु मद्भक्तेषु मद्भक्तेभ्यः अभिधास्यति वक्ष्यति सः पुरुषः मयि परमात्मनि परां परमां भक्तिं कृत्वा संपाद्य असंशयः नास्ति संशयो यस्य सः असंशयः निःसंदेहः सन् मामेव एष्यति प्राप्नोति । मद्भक्तेः फलं अहमेव नान्यदस्तीत्यर्थः ॥ ६८ ॥ तमेव अभिनंदति । न चेति । हे अर्जुन ! मनुष्येषु मध्ये तस्मात् मद्भक्तेभ्यो गीताशास्त्रस्य व्याख्यातुः सकाशात् कश्चित् पुरुषः मे मम प्रियकृत्तमः प्रियं इष्टं करोतीति प्रियकृत् अतिशयेन प्रियकृत् इति प्रियकृत्तमः अत्यंतं प्रियकारी अतिसंतोषकर्त्ता न नास्ति । चेत्यपरं तस्मात् उक्तपुरुषात् भुवि पृथिव्यां वा लोकत्रयेपि अन्यः

भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९ ॥
अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥
श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।

पुरुषः मे मह्यं प्रियतरः अतिशयेन प्रियः इति प्रियतरः प्रियकर्त्ता न भविता न भविष्यति इत ऊर्ध्वं न भविष्यत्येव कश्चन तादृशः । सः स एवेति भावः ॥ ६९ ॥ अत्र गीताशास्त्रे अशक्तौ केवलं पठ्यमानस्य फलं आह । अध्येष्यत इति । हे पार्थ! यः उक्तविलक्षणः पुरुषः आवयोः मम चेत्यपरं तव इमं अध्यात्मनिष्ठं संवादं गीताशास्त्रं अध्येष्यते भक्त्या पठिष्यति । कथंभूतं संवादम् धर्म्यं धर्मात् अनपेतः धर्म्यः तं धर्म्यं धर्मस्वरूपं तेन प्रसिद्धेन ज्ञानयज्ञेन ज्ञानमेव यज्ञः ज्ञानयज्ञः तेन ज्ञानयज्ञेन गीतापठनेन अहं परमेश्वरः तस्य अध्येष्यमाणस्य इति शेषः इष्टः इष्टकारी स्यां भवेयम् । इति एवं मे मम मतिः बुद्धिः अस्ति । अयं भावः—यथा कश्चन पुरुषः स्वाभिधानं श्रुत्वा तेन नामश्रवणेन तस्य पुरुषस्य पार्श्ववर्त्ती भूत्वा इष्टकारित्वेन वर्त्तते तथा अहमपि मत्प्रधानेन गीताशास्त्रपठनेन अयं पुरुषः मां आह्वयति इति बुद्धिं कृत्वा तत्पार्श्ववर्ती भूत्वा तत्प्रियकर्त्ता भवामि ॥ ७० ॥ पाठे अशक्तौ श्रवणपरस्य फलं आह । श्रद्धावानिति । हे पार्थ ! यः प्रसिद्धः नरः गीताशास्त्रं इति शेषः शृणुयात् श्रवणं करोति सोपि पुरुषोपि शुभलोकप्राप्तिप्रतिबंधकैः पापैः इति शेषः मुक्तः सन् विमुक्तः सन् पुण्यकर्मणां पुण्यं पुण्यरूपं कर्म येषां ते पुण्यकर्माणः तेषां पुण्यकर्मणां अश्वमेधयाजिनां शुभान् मंगलरूपान् लोकान् ब्रह्मलोकपर्यंतान् प्राप्नुयात् गच्छति । कथंभूतः नरः । श्रद्धावान् श्रद्धा भक्तिः

सोपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥७१॥
कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा।
कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनंजय! ॥ ७२ ॥

अर्जुन उवाच।

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत!।

विद्यते यस्य सः श्रद्धावान् श्रवणेन अहं कृतार्थः स्यां इति विश्वासवान् अत एव अनसूयः न विद्यते असूया दोषदृष्टिः यस्य सः अनसूयः गीतावाक्येषु गुणदोषदृष्टिरहितः ॥ ७१ ॥ इदानीं गुरुणा शिष्यः कृतार्थः कर्त्तव्यः इति शास्त्रमर्यादायां समग्रं तत्त्वं उपदिष्टमपि शिष्येण अवधारितं वा नावधारितं इति परीक्षार्थं प्रष्टव्यम्। न अवधारितं चेत् पुनरपि प्रकारांतरेण वक्तव्यं इति गुरुकर्त्तव्यप्रदर्शनार्थं भगवान् अर्जुनं पृच्छति। कच्चिदिति। हे पार्थ! त्वया एतत् मयोक्तं रहस्यं एकाग्रेण सावधानेन चेतसा अंतःकरणेन श्रुतं कच्चित् अवधारितं किम्। हे धनंजय! ते तव अज्ञानसंमोहः अज्ञानेन अन्यथाज्ञानेन संमोहः मिथ्याभ्रमः अज्ञानसंमोहः अहंता एते मदीयाः, मन्निमित्तेन मरिष्यंति, तन्मूलं स्वधर्माख्यं युद्धं न करिष्यामि इति संभ्रमः प्रणष्टः कच्चित् प्रकर्षेण नष्टः किं अभावं गतः किम्। नो चेत् पुनः उपदेक्ष्यामीति भावः ॥ ७२ ॥ अर्जुनः एवं भगवतः अभिप्रायं ज्ञात्वा कृतार्थोहं इति उक्तिः अनुचितापि भवदनुज्ञया त्वत्कृपया कृतार्थः अस्मि इति अभिप्रायेण उत्तरं उवाच इति आह। नष्टो मोह इति अच्युताश्रयेण मोहहेतुः च्युतिः कथं स्थास्यति इति अच्युतसंबोधनाभिप्रायः। हे अच्युत! मदीयेन अवधार-

स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ॥ ७३ ॥

संजय उवाच

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥
व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् ।

गेन इति शेषः । मम मोहः अनात्मविषयः अविवेकः नष्टः गतः सूर्यप्रकाशात् रात्रिगतं तम इव । किंच त्वत्प्रसादात् तव प्रसादः अनुग्रहः त्वत्प्रसादः तस्मात् मम स्मृतिः एक एव अहं आत्मा सर्वक्रियाशून्यः निर्विकार इति अनुसंधानरूपा स्मृतिः लब्धा प्राप्ता अहं गतसंदेहः सन् गतः ध्वस्तः संदेहः संशयः यस्य सः गतसंदेहः स्थितः अस्मि स्वरूपेण अवस्थानं प्राप्तोस्मि । इदानीं अहं तव उपदेशकर्तुः वचनं आज्ञां करिष्ये करिष्यामि अत्र संशयो नास्ति ॥ ७३ ॥ संजयः एवं श्रीकृष्णार्जुनसंवादं धृतराष्ट्रं प्रति कथयित्वा प्रस्तुतं आह । इत्यहमिति । हे धृतराष्ट्र ! अहं महात्मनः महान् सर्वज्ञः आत्मा अंतःकरणं यस्य सः महात्मा तस्य महात्मनः सर्वसाक्षिणः वासुदेवस्य सर्वभूताधारप्रकाशकस्य चेत्यपरं पार्थस्य अर्जुनस्य इति उक्तप्रकारेण इमं प्रस्तुतं संवादं अश्रौषं श्रुतवान् । कथंभूतं संवादं अद्भुतं अकस्मात् भूतः जातः अद्भुतः तं अद्भुतं अभिनवं अत एव रोमहर्षणं रोम्णः शरीरकेशान् हर्षयतीति रोमहर्षणः तं रोमहर्षणं श्रवणेनैव आनंदाविर्भावात् रोमांचकरम् ॥ ७४ ॥ ननु—मन्निकटे वर्तमानस्य तव देशांतरवृत्तश्रवणं कथं इत्याशंक्य हेतुत्वेन कारणत्वेन श्लोकं अवतारयति । व्यासेति । अहं तव निकटस्थः सन्नपि

योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ ७५॥
राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥७६॥
तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।

इति शेषः। व्यासप्रसादात् व्यासस्य श्रीकृष्णद्वैपायनस्य प्रसादः दिव्यचक्षुःप्रसादः व्यासप्रसादः तस्मात् व्यासप्रसादात् एतत् श्रीकृष्णार्जुनयोः संवादरूपं परं निरतिशयं गुह्यं सर्ववेदांतसारं कृष्णात् श्रुतवान् श्रवणं कृतवान्। कथंभूतात् कृष्णात्। योगेश्वरात् योगानां ईश्वरः स्वामी योगेश्वरः तस्मात्। पुनः कथंभूतात्। स्वयं साक्षात् प्रत्यक्षं योगं कथयतः कथयतीति कथयन् तस्मात् कथयतः ॥ ७५ ॥ तत् श्रुत्वा तव किं इत्यत आह । राजन्निति । हे राजन्! हे धृतराष्ट्र! अहं संजयः केशवार्जुनयोः केशवश्च अर्जुनश्च केशवार्जुनौ तयोः केशवार्जुनयोः श्रीकृष्णार्जुनयोः इमं प्रस्तुतं संवादं सम्यक् उत्तमप्रकारेण वादः आत्मविचारः यस्मिन् सः संवादः तं संवादं संस्मृत्य स्मृत्वा चेत्यपरं संस्मृत्य स्मृत्वा मुहुर्मुहुः वारं वारं हृष्यामि रोमांचितो भवामि हर्षं प्राप्नोमि। कथंभूतं संवादम्। अद्भुतं अलौकिकम्। पुनः कथंभूतम्। पुण्यं पवित्रम्॥ ७६ ॥ किंच तच्चेति। हे राजन्! हे धृतराष्ट्र! अहं संजयः हरेः श्रीकृष्णस्य तत् प्रसिद्धं रूपं विश्वरूपम्। अदृष्टपूर्वत्वात् इति शेषः। संस्मृत्य स्मृत्वा चेत्यपरं संस्मृत्य स्मृत्वा। तेन विश्वरूपदर्शनेन इति शेषः। पुनः पुनः वारंवारं हृष्यामि हर्षेण परिपूरितोस्मि। किंच मे मह्यं महान् अपरिच्छिन्नः विस्मयः इदं किं अदृष्ट-

विस्मयो मे महान् राजन् हृष्यामि च पुनः पुनः ॥७७॥
यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।

श्रुतपूर्वं इति चित्तचमत्कारः बभूव जातः इति शेषः। कथंभूतं रूपम्। अत्यद्भुतं अति अत्यंतं अद्भुतं अतर्कितोपपन्नम् ॥ ७७ ॥ यन्निमित्तं व्यासेन तव दिव्यचक्षुः दत्तं तन्निमित्तेन जयपराजयादिविभागं मह्यं कथय इति धृतराष्ट्राभिप्रायः। अयं संजयाभिप्रायः। अतः हेतोः त्वं स्वपुत्राणां राज्यादिशंकां परित्यज्य पांडवान् प्रसन्नान् कुरु इति अभिप्रायेणाह। यत्रेति । यत्र यस्मिन्निति यत्र यस्मिन् पक्षे योगेश्वरः योगस्य नियतरचनाखचितजगत्सृष्ट्यादिघटनायोगस्य ईश्वरः नियामकः योगेश्वरः योगमायेश्वरः कृष्णः नारायणः परमात्मा वर्त्तते। यत्र यस्मिन् पक्षे पार्थः पृथायाः कुंतेः अपत्यं पुमान् पार्थः अर्जुनः धनुर्धरः धनुः गांडीवं धरतीति धनुर्धरः वर्तते इति शेषः। तत्र तस्मिन् पक्षे श्रीः राज्यलक्ष्मीः षड्गुणैश्वर्यसंपत्तिः अस्ति इति शेषः। चेत्यपरं तत्र पक्षे विजयः विशेषेण जयः विजयः धनुर्धरसंबंधी शत्रुपराजयः अस्ति। चेत्यपरं तत्र तस्मिन् पक्षे भूतिः उत्तरोत्तराभिवृद्धिः अस्ति। चेत्यपरं तत्रैव तस्मिनेव पक्षे ध्रुवा निश्चिता नीतिः सर्वशास्त्रार्थनिर्णयोपि तत्रैव वर्तते। इति एवंप्रकारेण मम मतिः निश्चयः भवति। व्यासप्रसादेन इति शेषः। नरनारायणयोः एकावतारत्वात् यत्र यस्मिन् पक्षे तौ नरनारायणौ स्तः तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिः इति मत्वा त्वमपि पुत्रान् अधर्मात् निवार्य श्रीकृष्णपरः भव इति तात्पर्यम्। अत्र गीताशास्त्रे प्राधान्येन कर्म भक्तिः ज्ञानं च प्रतिपाद्यते अतः हेतोः सर्वं विचारेण सिद्धं भवति इति निश्चयः।

तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥

इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां वैय्यासक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षसंन्यासयोगो नामाष्टादशोऽध्यायः॥ १८॥

हे राजन्! अतः हेतोः इदानीं तावत् त्वं सपुत्रः सन् श्रीकृष्णं शरणं उपेत्य प्राप्य पांडवान् प्रसाद्य प्रसन्नं कृत्वा सर्वस्वं तेभ्यः पांडवेभ्यः विवेद्य समर्प्य पुत्रप्राणरक्षणं कुरु इति भावः। नो चेत् यथेच्छसि तथा कुरु ॥ ७८ ॥ ॥ भगवद्भक्तियुक्तस्य तत्प्रसादात्मबोधतः। सुखं बंधविमुक्तिः स्यादिति गीतार्थसंग्रहः ॥ १ ॥ पुरस्कृत्यार्जुनं येन त्रैलोक्यमपि मोचितम्। तस्यानृण्यविधानाय द्वितीयः को विवशिष्यते ॥ २ ॥ ॥इति श्रीधरचिदानंदाभिप्रायाभ्यां विरचितायां श्रीबालबोधिन्याख्यायां पदबोधिन्यां श्रीमद्भगवद्गीताटीकायां श्रीब्रह्मसारमणचरणप्रसादात् सिद्धिं गतायां अष्टादशोऽध्यायः ॥ १८ ॥ स्वबोधार्थे कृता व्याख्या गणेशेनाल्पबुद्धिना। पाठकेत्युपनाम्ना वै जयरामस्य चाज्ञया ॥ १ ॥ कौशिकान्वयजातेन राधारमणसूनुना। गंगारमणपादाब्जे गीताव्याख्या समर्पिता ॥ २ ॥ सेयं गीताशास्त्रे यस्य परिश्रमो वर्त्तते तेन बुधेन न दूषणीयेति शम् ॥

समाप्ता।





अस्याः शके १७७६ आनंदनामाब्दे आश्विनशुद्धविजयदशम्यां रविवासरे
लेखनसिद्धिर्जाता। सा च शके १८१५ विजयाब्दे आषा-
ढशुक्लद्वितीयायां एज्युकेशनसोसायटयाख्यमु-
द्रायंत्रालये पाठकोपाभिधेन मैराळ-
सुतकाशीनाथेन विद्वद्भिः संप-
रिशोधयित्वा मुद्रयित्वा च
प्रकाशं नीता। स्वार्थं
परार्थं च ॥

BOMBAY: PRINTED AT THE EDUCATION SOCIETYS' PRESS, BYCULLA.